

# Dr. Vasantha Lakshmi Mullapudi

Reader, M.A Ph.D.


#5, Blue Bells Villas, Pipeline Road, Kokapet, Hyderabad, Telangana, 500075

919966015231

srimullapudi741@gmail.com


Parents:
*Late. Sri. Mullapudi Narayana Sastry (Retired Principal)*
*Late. Srimathi.Bala Tripura Sundari*
Date of Birth: 01/06/1956



## Education



**College**
*Sri Shankara Samskruta Kalasala - Repalle*

**High School**
*Zilla Parishad High School - Repalle*





## Qualifications



Sahitya Vidya Praveena

Vyakarana Vidya Praveena

Bhasha Praveena

M.A Sanskrit

M.A Telugu

Ph.D (RSVP Tirupathi)





## Work Experience

1989 - 2014 — **Telugu Lecturer & Special Officer PG (Sanskrit M.A)**
*Sri Sarada Nikethanam Oriental Degree College, Guntur*





1979 - 1989 — **Sanskrit Vyakarana Lecturer**
*SGVO College, Timmasamudram*

# अनुक्रमः

DECLARATION

1. I submit herewith three(3) copies of thesis with necessary certificates attached to the thesis along with Cash Receipt No. DD/33 No-018130 dated 11-9-1993 for Rs.100/- towards Examination fee.

M. Vasantha Lakshmi
Signature of the
Research Scholar

Date:
TIRUPATI

RECOMMENDATION OF THE GUIDE

2. I recommend and forward the thesis submitted by M. Vasantalakshmi and the above statement of the research scholar is true to the best of my knowledge.

Date: 17.9.93

TIRUPATI

SIGNATURE OF GUIDE

श्रीकृष्णं वन्दे जगद्गुरुम्

# श्रीमद्भागवते श्रीकृष्णस्तुतीनां परिशीलनम्

**डा॥ मुल्लपूडि वसन्तलक्ष्मी**, एम्.ए., पि.हेच्.डि

**श्री गुरुवन्दनम्**

- भाषावैदिकसुद्ध्युपास्यकृदकृत्सामर्थ्यसुप्तिङ्पद-
  स्फोटस्फाटितशब्दशक्तिविवृतब्रह्माभिसन्धिस्फुटम्।
  रक्षोहागमलघ्वसंशयफलप्रत्यक्षविध्यक्षरम्।
  शस्त्रं शास्त्रमशिक्षि येन गुरुणा तस्मै चिदस्मै नमः।।

- प्रख्यातं यदुपज्ञमान्ध्रललितं शाकुन्तलं नाटकम्।
  काव्यं चारु कलानिधानमतरं यत्पुत्रसञ्जीवनम्।
  गीर्वाणान्ध्रगिरां धुरन्धरयश्श्रीशेषचिद्रूपिणे।
  तस्मै श्रीगुरुमूर्तये नम इदं नारायणश्रीजुषे।।

- श्री बाला जननी शुभाभिचरिता रामायणाप्लाविता;
  श्री नारायणशास्त्रिशास्त्रजलधिस्तातश्च विद्याप्रदः।
  मातापितृसकाशलब्धशुभसाहित्या सुशास्त्राध्वगा,
  शोधग्रन्थ समर्पणेऽद्य कलये तद्दम्पती हृत्पुटे।।

- दोषज्ञोऽपि सुदर्शनेन सुधिया योऽभूत् गुणज्ञोगुरुः।
  पित्राराधनतत्परेण समनुप्राप्ता कला येन हि।
  वेदार्थस्य च "सन्निधनमि"ति यद्वंशो हि व्याख्यायते;
  शोधग्रन्थगुरुं सुदर्शनममुं वन्दे कृतज्ञा सदा।।

****************

# कृतज्ञताञ्जलिः

जन्मनो दातारः, विद्यायाः प्रदातारः यशश्शेषाः "श्री ब्रह्मश्री मुल्लपूडि नारायणशास्त्रिणः, तान् प्रति प्रथमोऽञ्जलिः।

जनयित्री पालयित्री श्रीमती बालात्रिपुरसुन्दरी, तां प्रणताऽस्मि।

ज्यायांसौ भ्रातरौ मुल्लपूडि रामसुब्रह्मण्यशास्त्रि, जयसीतारामशास्त्रिणौ ताभ्यामपि कृतज्ञाऽस्मि।

तिरुपतिस्थे विद्यापीठे मम शोधप्रबन्धमर्पयितुं अङ्गीकृतेभ्यः कुलपति महोदयेभ्यः, तदितरेभ्यः कुलसचिवप्रमुखेभ्यः, विद्यापीठाधिकारिभ्यश्च कार्तज्ञं निवेदयामि।

परिशोधनपथस्य निर्देशकाः गुणदोषज्ञाः सहृदयाः श्री सन्निधानं सुदर्शन शर्माणः, तेभ्यः सर्वदा सर्वथा च कृतज्ञतापूर्वकनमांसि।

तस्य धर्मपत्नी श्रीमती अन्नपूर्णा, तस्याः कृतज्ञतापूर्वकवन्दनानि।

"श्री शारदानिकेतनम्" पालकसभ्यवर्गस्य; प्रधानाध्यक्षस्य च अहं कृतज्ञताः समर्पयामि। कलाशाला प्रधानोपाध्याया श्रीमती, वैष्णवीदुर्गा, तस्याः कृतज्ञतापूर्वकनमांसि।

शोधप्रबन्धविषये प्रोत्साहकर्त्री, मां निरन्तरकार्योन्मुखीं कुर्वन्ती अध्यापकसहव्रता, डा. श्रीमति; कोगण्टि श्रीरङ्गनायकी, अलभ्यग्रन्थसम्पादने सहायकः, के. वि. के. कलाशालाध्यापकः डा. के. डि. यस्. शास्त्रिमहोदयाः, तयोः मम कृतज्ञतापूर्वक अभिवन्दनानि।

तिरुपति प्रयाणे सर्वदा सहायकः मम यवीयान् भ्राता श्रीकृष्णप्रसादः, मम उन्नतेराकाङ्क्षी जीवित सहचरः, अन्याश्च सहायसम्पादिकाः विद्यार्थिन्यः – तेषां च सर्वेषां मम कृतज्ञताः समर्पयामि

एवं -बुधजनविधेया –
यम्. वसन्तलक्षी ।

## उपोद्घातः

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।

गुरुस्साक्षात् परब्रह्मा तस्मै श्री गुरवे नमः।।

लोकानुग्रहकाम्यया भगवान् बादरायणः वेदं चतुर्धा विभज्य पुनस्ताः मन्दबुद्धिभिः दुर्ज्ञेयाः इति विज्ञाय चतुर्लक्षश्लोकपरिमितां पुराणसंहितामपि अष्टादशधा विभज्य रचयामास। पुराणेतिहासकाव्यात्मके सकलवाङ्मये अनुपमं रत्नं श्रीमद्भागवतम्। वेदाधिकाररहितानां स्त्रीशूद्रादीनां इतरेष्वल्पबुद्धीनामनुग्रहार्थं पुराणानि कृतानीति प्रसिद्धिः पुराणेष्वेव दृश्यते। किञ्च –

"स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।
तेषामेव हितार्थाय पुराणानि कृतानि वै ।।" –
इति श्लोकः प्रसिद्धः।

यथा वेदराशेः तथैव पुराणजातस्यापि प्रयोजन: हितप्राप्यहितनिवृत्तिरूपमेव। तदिदं पूराणजातं महापुराणानि, उपपुराणानीति द्विधा विभज्यते। महापुराणानि अष्टादशसङ्ख्याकानि सात्विकानि, राजसानि, तामसानीति त्रिविधा भवन्ति। तेषु विष्णुप्रतिपादकानि सात्विकानि। यथा – श्रीमद्भागवत पुराणम्, विष्णुपुराणञ्च। शिवमाहात्म्यप्रतिपादकानि तामसानि। यथा स्कन्दपुराणम्, लिङ्गपुराणञ्च।

चतुर्मुखस्य ब्रह्मणः प्रतिपादकानि राजसानि। यथा पद्मपुराणम्, ब्रह्मपुराणञ्च।

पद्मपुराणे श्रीमद्भागवतम् सात्विकपुराणेषु परिगणितम्।

"वैष्णवं नारदीयञ्च तथा भागवतं शुभम्।

गारुडं च तथा पाद्मं वाराहं शुभदर्शने।

सात्विकानि पुराणानि विज्ञेयानि शुभानि वै।।"[1]

गरुडपुराणे सात्विकानि पुराणानि त्रिधा विभक्तानि। यत्र हरेः प्रशंसा सकलं दृश्यते तत्पुराणम् सात्विकमिति पुराणानामेव सिद्धान्तः।

"सत्वाधमे मत्स्यकूर्मे समाहुः।

वायुञ्चाहुः सात्विकं मध्यमञ्च।।"

विष्णोः पुराणं भागवतं पुराणं

सत्वोत्तमे गारुडं चाहुरार्याः।
अन्यानि विष्णोः प्रतिपादकानि
सर्वाणि तानि सात्विकानीति चाहुः।।

विष्णुप्रतिपादनस्य तारतम्यमाश्रित्य उत्तमादि भेदत्रयम् विभक्तं, स्यात्।

[1] पद्मपुराणम् उत्तरखण्डम् - 283-81,82

"सात्विकेषु पुराणेषु महात्म्यमधिकं हरेः"[1]

इत्युक्तदिशा हरिमाहात्म्यप्रतिपादकं श्रीमद्भागवतं सात्विकोत्तम पुराणमिति परिगण्यते।

**पुराण लक्षणानि** –

साधारणतया पुराणं पञ्चलक्षणमाहुः –

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितश्चेति पुराणं पञ्चलक्षणम्।।[2] इति।

किन्तु भागवते एव पुराणं दशलक्षणघटितम् दर्शितम्। एतानि लक्षणानि द्वितीयस्कन्धे द्वादशस्कन्धे च प्रतिपादितानि। यद्यपि ईषच्छब्द भेदो दृश्यते तथापि द्वयोरपि स्थलयोः प्रतिपादितयोः महापुराणलक्षणयोः मध्ये वैषयिक भेदस्तु नावलोक्यते।

"अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः।
दशमस्य विशुध्यर्थं नवानामिह लक्षणम्।
वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसा। "[3]– इति।

**सर्गः** - "भूतमात्रेन्द्रियधियां जन्म सर्गं उदाहृतः सृष्टिः इति यावत् ।
चराचरप्राणिनां इन्द्रियवतां जन्म सर्ग उच्यते।
जगत्सम्भव इत्यर्थे सर्गः इति संज्ञा शब्दस्स्यात्।

तथा सति "पुंसि संज्ञायां घः प्रायेण"[2]; सृज-उत्सर्गे इति धातोः 'सर्ग' इति निष्पन्नम्।

**विसर्गः** - "ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषस्स्मृत परब्रह्मणः प्रकृतिजनां सत्वरजस्तमो गुणानां परिणामात् चराचरसर्गः विसर्गः। सर्गेऽपि गुणवैषम्यम्। तथाऽपि परिणामस्य स्पष्टदर्शनं तु विसर्गे दृश्यते।

अत्र "ब्रह्मणो गुणवैषम्या"दित्यत्र वैषम्यशब्दस्य श्रीधरः केनोद्देश्येन परिणाम इति व्याचख्यौ इति दुर्ज्ञेयम्। इदं वा अत्रानुसन्धेयम् – यद्यप्यद्वैतिनः जीवब्रह्मणेरैक्यं जगतः ब्रह्मविवर्तत्वं प्रतिपादयन्ति। तथाऽपि परमार्थेन विवर्तत्वव्यवहारः अलौकिके ब्रह्मणि लोकस्य लये एव सिद्धः। व्यावहारिकस्तु लौकिकविवर्तः परिणामशब्देन अत्र विवक्षितः। यद्वा लौकिकविवर्ते परिणामः उपचरितः।[4]

स्थानम् - "स्थितिवैकुण्ठविजयः"

भगवता स्वयं सृष्टानां प्राणिनां स्वैरेवावतारैः यथावसरं धर्मसंस्थापनेन पालनं स्थानम्।

पोषणम् - "पोषणं तदनुग्रहः"।

स्वभक्तेषु भगवतः अनुग्रहः।

---

[1] मत्स्यपुराणम् 53-68,69

[2] अमरकोशः - 1-6-5

[3] श्रीमद्भागवतम् – 2-10-1,2

[4] श्रीधरस्तु – भूतमात्रेति- भूतानि आकाशादीनि मात्राणि शब्दादीनि, इन्द्रियाणि च। धीशब्देन महदहङ्कारै, गुणानां वैषम्यात्परिणामात्। ब्रह्मणः परमेश्वरात्कर्तुः। भूतादीनां यद्विराड्रूपेण स्वरूपतशच् सर्गः। विसर्गमाहपुरुषः वैराजः तत्कृतः पौरुषः चराचरसर्गो विसर्ग इत्यर्थः।

ऊतिः - "ऊतयः कर्मवासनाः"।
प्रारब्धागामिस्थितरूपस्य कर्मणः प्रभावेण प्राणी तत्तत्कर्मसु प्रवर्तते। स च संस्कारः शुभाशुभवासनारूपमूलकः इति द्विविधः[1]। तत्र अशुभा ऊतिः महतां कोपाज्जायते। यथा च सनकादीनां महर्षिणां कोपवशात् प्राप्तराक्षसजन्मनोः जयविजययोः हिरण्याक्षहिरण्यकशिपुरूपेण जननम्। तत्राऽपि वैरानुबन्धेन हरौ द्वेषः। शूभा च महदनुग्रहाज्जायते – यथा प्रह्लादस्य नारदानुग्रहणम्। विस्तरस्तु सप्तमस्कन्धे द्रष्टव्यः।

मन्वन्तरम् - "मन्वन्तराणि सद्धर्मः"।
भगवदनुगृहीतानां सतां मन्वन्तराधिपतीनां धर्मः मन्वन्तरम्। यथा –वैवस्वतमनुः।

ईशानुकथाः – भगवतः अवताराणां चरितम् भागवतानां च पुम्सां सत्कथाः आख्यानैः प्रदर्शनम्।

निरोधः – द्वादशस्कन्धे अयमेव संस्थाशब्देनोक्तः। जीवस्य हरेः योगनिद्रामनुश्रृत्य स्वोपाधिभिः शयनं लय एव निरोधः। द्वादशस्कन्धेऽपि संस्थानिरोधः। अनेनेव आत्यन्तिकी लयरूपा मुक्तिरित्युक्ता इति श्रीधरः[2]।

मुक्तिः - जीवस्य कर्मकल्पितम् देवमनुष्यादि रूपं हित्वा ज्ञानानन्दामलत्वादि रूपेण अवस्थानम्[3] अविद्यया अत्र कर्तृत्वादि हित्वा स्वस्वरूपेण ब्रह्मतया व्यवस्थितिः मुक्तिरिति।[4]
आश्रयः – सृष्टिः स्थितिः लयश्च यतो भवति तस्य सृष्टेराश्रयः परं ब्रह्म परमात्मा आश्रयः।

**पुराणान्तरेषु भागवतस्य प्राशस्त्यम्** –

पुराणानां मध्ये भागवतस्य विशिष्टं स्थानं वर्तते। रसिकाः रसास्वादनं कुरुतेति स्वयं व्यासः भागवतस्य प्रामुख्यमकथयत् –

"निगमकल्पतरोर्गलितं फलम्।
शुकमुखादमृतद्रवसम्मितम्।
पिबत भागवतं रसमालयं
मुहुरहो रसिका भुवि भावुकाः[5]।" इति ।

अयं ग्रन्थः भक्तैः सुखं ज्ञेयोऽपि विदुषामपि दुर्बोधः। अत्र च प्रख्यातोऽयं श्लोकः –
"धनञ्जये हाटकसंपरीक्षा, महारणे शस्त्रभृतां परीक्षा।

---

[1] ऊतिश्च वासना प्रोक्ता तत्तत्कर्मानुसारिणी
अशुभा च शुभाचेति द्विधा सा हेतुभेदतः।
अशुभामहतां कोपाच्छुभा महदनुग्रहात्।।
श्रीमद्भागवतम् 7, - अवतारिकायाम्।

[2] भावार्थदीपिका - XII - 7-9

[3] भागवतचन्द्रिका - II -10-6

[4] भावार्थदीपिका - II - 10-6

[5] श्रीमद्भागवतम् - 1-1-3

विपत्तिकाले गृहिणी परीक्षा, विद्यावतां भागवते परीक्षा।।"

विदुषामपि दुर्ज्ञेयत्वादेव अस्य भागवतस्य सर्वेष्वपि वेदान्तमतेषु व्याख्याः अनुवादांश्च उद्भूताः। उपलभ्यन्ते च। तासु च 1) अद्वैतमतानुयायिनी महामहोपाध्याय श्रीधरकृता भवार्थदीपिका। 2) विशिष्टाद्वैत मतानुयायिनी श्रीवीरराघवकृता श्रीमद्भागवतचन्द्रिका व्याख्या। 3) द्वैतमतानुयायिनी विजयध्वजतीर्थविनिर्मिता विजयध्वजीय व्याख्या च प्रसिद्धाः।

अन्याश्च प्रसिद्धाः व्याख्याः - 4) सुदर्शनसूरिणाकृत शुकपक्षीयव्याख्या, 5) निम्बार्कमतानुकूला शुकदेवाचार्येण कृता सिद्धान्तप्रतीप व्याख्या, 6) वल्लभाचार्येण कृता सुबोधिनी, 7) गिरिधराचार्येणकृता आध्यात्मिक टीका, 8) श्रीसनातनेन कृता वैष्णवतोषिणि, 9) जीवगोस्वामिना कृता क्रमसन्दर्भव्याख्या, 10) विश्वनाथ चक्रवर्तिना कृता सारार्थदर्शिनी, 11) श्री हरिणा कृता हरिभक्तरसायनव्याख्या, 12) जयरामशास्त्रिणा कृता तत्वदर्शिनी, 13) मधुसूदनसरस्वतिकृता गूढार्थदीपिका इत्याद्याः। नान्यत्पुरणान्तरं इत्थं नानाव्याख्योपबृंहितं दृश्यते इत्यहो श्रीमद्भागवतस्य महिमा।

**भागवतस्य महापुरणत्व प्रतिपादनम्** –

अष्टादश पुराणेषु भागवतम् सर्वोत्तममिति विदुषामभिप्रायः। भागवतनाम्ना प्रसिद्धं पुराणद्वव्यं वर्तते। तयोरेकं देवीमहत्वप्रतिपादकं देवी भागवतम्; विष्णुमहत्वप्रतिपादकं श्रीमद्भागवतं द्वितीयम्। तयोः कतरत् पुराणं महापुराणेषु गणनीयमिति विदुषां बहवः अभिप्रायभेदाः दृश्यन्ते। पुराणानुक्रमणिकायां श्रीमद्भागवतमेव महापुराणमिति प्रोक्तम्। भागवतयोर्मध्ये वैष्णवभागवतस्य महापुराणत्वं प्रतिपादयतां सिद्धान्तस्यायं सङ्क्षेपः –

मत्स्यपुराणे, वामनपुराणे च श्रीकृष्णभागवतमेव महापुराणेषु परिगणितव्यमिति प्रतिपादितम्–

तत्र कारणानि एवमुदाहृतानि –

1. गायत्र्या समारम्भः
2. वृत्रवधवृत्तान्तः
3. हयग्रीवब्रह्मविद्याविवरणम् इति यत्र, तन्महापुराणम्। अत्रेयं चिन्ता –

"यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः
वृत्रासुरवधोपेतं तद्भागवतमिष्यते।"[1]
"हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा।
गायत्र्या च समारम्भः तद्वै भागवतं विदुः[2]।।

इति पुराणद्वयसिद्धान्ताङ्गीकारेऽपि देवी भगवते गायत्र्या समारम्भः दृश्यते।

"सर्वचैतन्यरूपां त्वां आद्यां विद्यां च धीमहि।
बुद्धिं या नः प्रचोदयात्।"[3]

---

[1] मत्स्यपुराणम् -53-20

[2] वामनपुराणम् - पुराणविमर्श -110 पृ

[3] देवीभागवतम् - 1-1

अत्र "धीमहि, प्रचोदयात्" इति पदद्वयं गायत्री मन्त्रात् परिगृहीतम्। "बुद्धिं या नः प्रचोदयात्" इति पादः त्रिपदा गायत्रीत्युच्यते।

केचित्तु गायत्र्या समारम्भः इत्यत्र गायत्री छन्दसा समारम्भः इति व्याचिख्यासन्ति। षड्विंशति छन्दस्सु षष्टा गायत्री प्रतिपदं षडक्षरात्मिका। अतः भागवतद्वयेऽपि एषोऽर्थः न सङ्गच्छते। देवीभागवते यद्यपि बलात् आरम्भश्लोके गायत्री छन्दसः लक्षणं सङ्गमयितुं यत्नः क्रियते तथाऽपि अपूर्णोऽयमनुष्टुभ् न तु गायत्री छन्दः।

अतः "गायत्र्या च समारम्भः" इत्यत्र गायत्री मन्त्रार्थ एवात्र विवक्षितः न तु तच्छन्दोलक्षणम्। छन्दोलक्षणं तु उभयत्रापि मृग्यम्। गायत्रीमन्त्रार्थविवरणं तु श्रीकृष्णतत्वप्रतिपादके श्रीमद्भागवते एव उपलभ्यते न तु देवीभागवते। श्रीमद्भागवते पुनः सवितुः, वरेण्यं, भर्गः इत्यादि गायत्रीमन्त्रपदगतानां समानार्थकाश्शब्दाः प्रारम्भश्लोके दृश्यन्ते। अतः तस्यैव महापुराणान्तर्गतत्वं वक्तुं युक्तम्।

"जन्माद्यस्य यतोन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्।
तेन ब्रह्म हृदा य आदिकवयो मुह्यन्ति यत्सूरयः।
तेजो वारिभृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि।।"[1]

श्लोकेऽस्मिन् "सवितुः" इत्यस्यार्थः "जन्माद्यस्य यतः" इत्यंशेन लभ्यते। "स्वराड्" इत्यनेन देवस्येति; 'वरेण्यं' वरणीयमित्यर्थः। संसारभयेन तद्विमुक्तेः यो व्रियते स एव भर्गः। भागवतेऽपि निरस्तकुहकं सत्यं मायापनोदकं ब्रह्मैव; तच्च गायत्रीमन्त्रोक्तम् "वरेण्यं भर्गः" इत्यनेन प्रतिपादितमेव। अनेन प्रकारेण श्लोकेऽस्मिन् गायत्रीमन्त्रार्थः शब्दतः अर्थतश्च प्रतीयते। भगवान् याज्ञवल्क्योऽपि नारायणं ध्येयाग्रण्यं मनुते। नारायणः सवितृमण्डलमध्यवर्ती "भर्ग" इत्युच्यते।

"वरेण्यं वरणीयञ्च संसारभयभीरुभिः
आदित्यान्तर्गतं यश्च भर्गाख्यं वा मुमुक्षुभिः।
जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च
ध्यानेन पुरुषो यस्तु दृश्यस्सस्सूर्यमण्डले।।"[2]

एवं योगिनां मतेऽपि भर्गः भगवते सर्वसत्यरूपेण प्रतिपादितो नारायण एव। अतोऽपि पुराणेषूदाहृतं कृष्णप्रतिपादकं भागवतमेव महापुराणम्।

श्रीमद्भागवते वृत्रासुरवधप्रसङ्गः षष्ठ स्कन्धे दृश्यते।

यदुक्तं वामनपुराणान्तर्गते भागवतलक्षणे हयग्रीवब्रह्मविद्या प्रतिपादनमिति – तदपि अस्मिन्नेव श्रीमद्भागवते सङ्गच्छते। श्रीमद्भागवतस्य षष्ठस्कन्थस्य नवमाध्याये वर्तमानं नारायणकवचं हयग्रीवब्रह्मविद्यैव।

अश्विभ्यां प्रार्थितः दधीचिः तयोः ब्रह्मविद्यामुपदिदेश। तदानीमिन्द्रः "वैद्ययोस्तयोः ब्रह्मविद्याधिकारः नास्ति, , तयोः ब्रह्मविद्या न देया। यदि ममाज्ञा उल्लङ्घिता तव शिरः

---

1 श्रीमद्भागवतम् - 1-1-1

2 पुराणविमर्श - 111 पृष्टम् (योगी याज्ञवल्क्यः)

छेत्स्यामी"ति दधीचिं तर्जयामास। दधीचिरपि इन्द्राज्ञां नासत्याभ्यां निवेद्य उपायमभ्यर्थयामास।

तौ दधीचेः निजशिरः कर्तयित्वा अश्वशिरसा दधीचिं नियोजयामासुः। (हयग्रीवः) दधीचिः हयग्रीवो भूत्वा तयोः ब्रह्मविद्यामुपदिदेश। एषैव "हयग्रीवब्रह्मविद्या" इति प्रथिता। एषा कथा श्रीमद्भागवते दृश्यमानत्वात् इदमेव भागवतम् महापुराणम्।

"स वा अधिगतो दध्यङ्ङश्विभ्यां ब्रह्म निष्कलम्।

यद्वा अश्वशिरो नाम तयोरमरतां व्यधाम्"[1]।।

इदमेव नारायणकवचम् विद्याशब्देन श्रीमद्भागवते वारंवारं उदाहृतम्[2]।

केचन वृत्रासुरवधः देवी भागवते वर्णित इति तस्यैव महापुराणत्वमस्तु इत्यभिप्रयन्ति। तदसाधु। यतो हि वृत्रासुरवधः श्रीमद्भागवतेऽपि परिदृश्यते।

एवञ्च महापुराणलक्षणे, हयग्रीवब्रह्मविद्या वृत्रवधवर्णन्, गायत्र्या च समारम्भः इत्युक्ते वृत्रवधवर्णनरूपं दलमेकमेव देवी भागवते सङ्गच्छते। श्रीमद्भागवते तु दलत्रयमपीति हेतोः तस्यैव महापुराणमध्यवर्तित्वम् न्याय्यम्।

3) तत्तत्कालिकाः विद्वांसः श्रीमद्भागवतगतानेव श्लोकान् बहुशः उदाजह्रुः। न तु देवीभागवतीयाः इत्यनेनापि श्रीमद्भागवतस्यैव महापुराणत्वं द्रृढी भवति।

4) अल्बरुनी नामकः वैदेशिकः स्वयात्राविवृतिग्रन्थे वैष्णवं भागवतमेव महापुराणं विवृतवान्।

पद्मपुराणे उत्तरखण्डे, स्कान्दपुराणे, विष्णुपुराणे च भागवतप्रशंसा दृश्यते। साऽपि प्रशंसा विष्णुभागवतमेव विषयीकरोति। देवीभागवतमाहात्म्यप्रशंसा स्कान्दपुराणे, मानसखण्डे दृश्यते इति केचिद्वदन्ति, किन्तु एकाशीति सहस्रात्मके, सप्तखण्डात्मके[3] स्कन्दे प्रामाणिके उपलभ्यमाने मानसखण्डः नोपलभ्यते।

6) श्रीमद्भागवते देवीभागवत प्रशंसा न दृश्यते। देवीभागवते अष्टमस्कन्धे श्रीमद्भागवतपञ्चमस्कन्धस्यविषयाः अक्षरशः अनुकृताः। शैल्यादिकमनुसृत्य श्रीमद्भागवतस्या एवैते, देवी भागवते अनूक्ता इति पण्डितानामाशयः।

7) नारदीयपुराणे पूर्वभागे षोडशेऽध्याये उदाहृताः भागवतस्यविषयाः वैष्णव भागवते दृश्यन्ते, न तु देवी भागवते।

---

[1] श्रीमद्भागवतम् - VI-9-52

[2] श्रीमद्भागवतम् - VI- 8-38, पूर्वत्रैव , VI-8-37, पूर्वत्रैव, VI-8-42

[3] महेश्वर, 2, वैष्णव, 3 ब्रह्म 4, काशीखण्ड, 5, रेवा, 6, नागर, 7, प्रभास, इति सप्तखण्डाः

लोके शुकयोगी बाल्ये एव परिव्रजित इति कथा प्रवर्तते। तस्य च मूलं श्रीमद्भागवतमेव भवितुमर्हति। सर्वमिदं सम्यग्विचार्य निश्चित्य वक्तुं शक्यते विष्णुप्रतिपादकं श्रीमद्भागवतमेव महापुराणमिति।

एवञ्च आम्नायार्थसारभूतत्वात्, नानाशास्त्राकरत्वात्, मन्दबुद्धीनामपि सुबोधत्वात्, कदाचित्परिणतबुद्धीनामपि दुर्ज्ञेयत्वात्, नानाव्याख्यानुव्याख्योपबृंहितत्वात्, आन्ध्रांग्लवङ्गादि नानादेशविदेशभाषानुवाद विभूषितत्वात्, विशिष्य सुखतरपुरुषर्थसाधनभूतत्वाच्च श्रीमद्भागवतपुराणमिदं प्रपञ्चवाङ्मयस्यैव रत्नविभूषणं सद्विराजते।

**भागवतशब्दनिर्वचनम् –**

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः।

ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरितः"[1]।।

ऐश्वर्यादि षण्णां गुणानां 'भग' इति संज्ञा।

भगशब्दात् भूमार्थे, प्रशंसार्थे, नित्ययोगार्थे अतिशयार्थे वा मतुप्। एवं विधात् भगवच्छब्दात् भगवद्विषयकमित्यर्थे "तस्येदमित्यण्। भगवद्विषयक महिमाप्रतिपादकः इति यावत्।

अपि च भगवति भक्ताः भागवताः भागवतानां कथा भागवतम् इति द्विधा भागवत शब्दार्थस्य स्थितिः। भागवत कथामधिकृत्य कृते ग्रन्थः[2] इत्यर्थे "अधिकृत्य कृते ग्रन्थे[1] " इति प्राप्तस्याणः "लुबाख्यायिकाभ्यो बहुलमिति[3] लुप्।

एवं भगवन्महिमाप्रतिपादक कथामनुसृत्य कृतं पुराणं भागवतम्। भागवतानां कथाः अनुसृत्य कृतं पुराणं भागवतम् इति द्विविधेऽपि मार्गे ग्रन्थस्य सार्थकं नाम सिध्यति।

भगवता श्रीकृष्णेन पुनः स्वयं भागवतसंज्ञा विवृता। कृष्णावतारस्य अन्तिमे काले भागवतोत्तमं उद्धवम् तितारयिषुः भगवान् तं स्वसमीपमाहूय नारायणतत्वमुपदिशन् भागवतशब्दार्थं एवम् अवर्णयत्।

वेदाहमन्तर्मनसीप्सितं मे ददामि यत्तद्दुरवापमन्यैः।

सत्रे पुरा विश्वसृजां वसूनां मत्सिद्धिकामेन वसो त्वयेष्टः।।

स एष साधो चरमो भवानामासादितस्ते मदनुग्रहो यत्।

---

[1] विष्णुपुराणम् - VI-5-74

श्रीमद्भागवतम् - x -87-14 श्लोकाः

भागवत चन्द्रिका (वीरराघवीय व्याख्या) - 553 पृष्टम्

[2] अष्टाध्यायी - IV -3-87

[3] पूर्वत्रैव -

यन्मां नृलोकान् रह उत्सृजन्तं दिष्ट्या ददृश्वान्विशदानुवृत्या।।

पुरा मया प्रोक्तमजाय नाभ्ये पद्मे निषण्णाय ममादिसर्गे।

ज्ञानं परं यन्महिमावभासं यत्सूरयो भागवतं वदन्ति।।"[1]

भगवदुक्तिषु यद्यप्ययं भागवतशब्दः यदृच्छाप्रयुक्तः तथाप्यन्वर्थः इति स्पष्टम्।

**भागवतप्रतिपाद्यम् –**

भागवतस्य प्रतिपाद्यं वस्तु स्वयमेव विवृण्वता महर्षिणा कृष्णद्वैपायनेन –

"धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सताम्

वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्।

श्रीमद्भागवते महामुनिकृते किम् वा परैरीश्वरः

सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्।।"[2]

इति कथितम्।

सर्वेषां प्राणिनां मूर्धन्यः मनुष्यः यदि सन्मार्गे प्रवर्तते तर्हि प्रपञ्चे सर्वत्र सुखं शान्तिश्च भवेत्। कोऽसौ सन्मार्गः यन्मनुष्येणानुसर्तव्यः इति चेत् उच्यते – पुरुषार्थरूपः चतुर्विध इति। तत्राद्यो धर्मः तदितरेषां त्रयाणां पुरुषार्थानां मूलम्। अतः तत्परिज्ञातमत्यन्तरमावश्यकम्। तदेव श्रीमद्भागवते उपनिबद्धम्। अतः सर्वश्रेयस्साधनभूतो धर्मः भक्त्यादिलक्षणः तरणोपायत्वेन ग्रन्थेऽस्मिन्निर्दिष्टः। अस्ति किञ्चिद्वैशिष्ट्यम् शास्त्रान्तरेभ्योऽस्य ग्रन्थस्य।

तथा च – इतराणि शास्त्राणि मुमुक्षूणां तत्वदर्शनार्थं कल्पितप्रक्रियावन्ति। न तत्र किञ्चित् वास्तवं वस्तु प्रतिपाद्यते। इतरशास्त्राणि किञ्चित् प्रयोजनमुद्दिश्य अध्येतारं अध्ययने प्रवर्तयन्ति। यथा व्याकरणम् -

व्याकरणशास्त्राध्ययनप्रयोजनं तु "रक्षोहागमलध्वसन्देहाः प्रयोजनम्[3] एवमेव न्यायवैशेषिकादिष्वप्यूह्यम्।

भागवते पुनः प्रतिपाद्यं वस्तु वास्तवं भगवद्रूपम्। धर्मस्त्वानुषङ्गिकप्रयोजनान्तरम्।

भक्तः भगवतस्स्मरणादन्यन्नेच्छति। भगवत्स्मरणे प्राप्ता या आनन्दानुभूतिः सा मोक्षपदव्याः न किञ्चिद्धीयते। भक्तिः मोक्षसाधनं खलु। भक्त्या आध्यात्मिकाधिभौतिकाधिलौकिकरूपं तापत्रयमुन्मूल्यते। भागवतसारे भक्तहृदि जीर्णे सति तत्संस्कारविशेषैः सदा जितेन्द्रियः ..षड्गुणपरिपूर्णश्च भवति। निर्मले च चित्ते भगवत्तत्वानुज्ञानं स्थिरपदं कुरुते।

---

[1] श्रीमद्भागवतम् - III-4-11 प्रभृति 13 पर्यन्तम्।

[2] श्रीमद्भागवतम् - I -1- 2

[3] नारदभक्तिसूत्राणि - महाभाष्यम् - 1, प्रथमाह्निकम्।

निरन्तरानुध्यानेन भक्तिपरिगृहीतेन सः विषयान्तरविमुखस्सन् परे ब्रह्मणि रमते। अवाप्नोति च कैवल्यम्। यथाह नारदः -

"यत्प्राप्य न किञ्चिद्वाञ्छति, न शोचति, न द्वेष्टि, न रमते, नोत्साही भवति।[1]

अपि च आचार्यः कुलशेखरः प्राह -------

नाहं  वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः
कुम्भीपाकं गुरुमपि हरे नारकं नापनेतुम्।
रम्या रामा मृदुतनुलता नन्दनेनापि रन्तुं
भावे भावे हृदय भवने भावयेयं भवन्तम्[2]।।

श्रीमद्भागवत वर्ण्यवस्तुसारांशः एवं भवति –

"श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियम्।
यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं गीयते।
तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतम्
तच्छृण्वन् विपठन् विचारणपरो भक्त्या विमुच्येन्नरः।।"[3] इति।

**भागवत तत्वम्** –

भागवते भक्तिः भगवत्प्राप्तिसाधनतया वर्णिता। भगवांश्च भक्तिसाध्यः। भगवत्साधने साध्यत्व- साधनत्वयोः विवरणं किञ्चित् क्रियतेऽत्र।

**साध्यतत्वम्** – सर्वत्र साध्यतत्वरूपेण वर्णितो भगवान् परंब्रह्म इति भागवते गीयते। स च अकारणः, अचिन्त्यः, कर्मवर्जितः, मनोबुद्धीन्द्रियादि अविषयः। तथाविधोऽपि सर्वलोकान्तःकरणेषु स्थितत्वात् सर्वकारणञ्च भवति। स्वयं प्रकाशश्च। अयञ्चभगवनान् ब्रह्माण्डस्याधिपतिः। तस्यैवाज्ञया ब्रह्मादयः प्रवर्तन्ते।

स च मायातीतः। स्वेनैव सङ्कल्पेन मायामयं जगत्कल्पयित्वा तेनैव जगता क्रीडति। जीविनाम् सूक्ष्मशरीरैः कर्मभिः संस्कारैश्च जीवसृष्टिर्भवति। भगवान् जीविषु सर्वसमः। कार्यकारणातीतत्वात् सर्वाधिष्ठाता च भवति।[4]

---

[1] नारदभक्तिसूत्राणि - 1 -5

[2] मुकुन्दमाला - 4श्लो

[3] पुराणविमर्शः - 511 पृष्टम्।

[4] "तव परि ये चरन्त्यखिलसत्वनिकेततयात
उत पदाक्रमन्त्यविगणय्य शिरो निर्ऋतेः।
परिवयसे पशूनिव गिरा विबुधानपि तां
त्वयि कृतसौहृदाः खलु पुनन्ति न  ये विमुखाः।।

अतएव भगवान् विश्वस्य नियन्ता यश्च प्राणाः मनः इन्द्रियाणि स्ववशे कृत्वा एतादृशं भगवन्तमुपास्ते भगवान् तस्यान्तः प्रविष्टः तस्य हृदयमधिवसति।

न केवलं नित्योपासनया किन्तु वैरभावेनापि स साध्यो भवति। एवं भक्तेषु वैरिषु च समं करुणामृतं वर्षन् भगवान्ताननुगृह्णाति।

भगवांश्च दार्शनिकैः भिन्नतया लक्षितोऽपि तत्तद्दर्शनानुगुणस्सन्नेव विभासमानस्सन् सर्वदार्शनिकसम्मतः परमलक्ष्यभूतो भवति। तत्र नैयायिकानां मते सतःजगतः संसारदुःखनाशात् मोक्षप्राप्तिः । तादृशो मोक्ष एव भगवान्। सांख्यैश्च जीवात्मनः भिन्नः परमात्मा भगवानिति गीयते। मीमांसकैः वेदकर्मभिः प्राप्यः परलोकरूपः सत्यरूपश्च भगवानङ्गीक्रियते। सर्वेषां दर्शनानां भगवल्लक्षणैकदेशनिरूपकत्वात् असमग्रत्वमेव।

भगवतः गुणजालस्य समग्रतयाज्ञातुमसम्भवात् भगवतः किञ्चित् संस्तवोऽपि गौरवमिति कृत्वा गुणैकदेशप्रतिपादकानाम् दर्शनानामुपादेयत्वम्।

भागवतश्शासनं अखण्डरूपेण सर्वान् प्राणिनः शास्ति। यथा च सामन्तनरेश्वराः स्वप्रजाभ्यः आहृतेभ्यः बलिभ्यः चक्रवर्तिनं तोषयन्ति, तथैव अन्ये देवाः स्वभक्तैः स्तुताः तेषां भक्तानां पुण्यांशैः नारायणमर्चयन्ति। अतश्च नारायणादृते देवतान्तराणि सेवमानानां भक्तानां न समग्रतया फलसिद्धिरिति, मोक्षसम्पादनाय अन्यदेवचिन्तां विहाय नारायण एव सेव्य इति भागवतसिद्धान्तसारांशः।[1]

श्रीमद्भागवते भगवानद्वैतत्वानुगुणं प्रतिपाद्यते। यथा च ब्रह्माणं प्रति स्वयं भगवतः वाक्येषु -

"अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम्।

पश्चादहं यदेतश्च योऽवशिष्येत सोऽस्म्यहम्।।"[2]

तथैव – नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप।

अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः।। इति

सतः असतश्च जगतः भगवतः परं वस्त्वन्तरं नास्तीति भगवतो अद्वैतप्रतिपादनमेव। कदाचिद्भगवान् निर्गुणः, कदाचिच्च सगुणः, कदाचित् उभयरूपः। अविच्छन्न सत्वमयत्वात्

---

त्वमकरणः स्वराडखिलकारकशक्तिधर

तव बलिमुद्वहन्ति समदन्त्यजयानिमेषाः।

वर्षभुजोऽखिल क्षितिपतेरिव विश्वसृजो

विदधति यत्र येत्वधिकृता भवतश्चकिताः।। (भाग - x - 87-28,29

1 पुराणविमर्शः - 505 पृष्टम्।

2 श्रीमद्भागवतम् - II -9-33

सगुण इति अव्यक्तत्वात्, निराकारत्वाच्च निर्गुण इति उभयथा भगवान् भक्तैर्गीयते। सत्वगुणपुरस्कृतः भगवान् निर्गुणोऽपि लोकस्थित्यै गुणानादधानः त्रिमूर्त्यात्मको भवति।

तत्र परमपुरुषाख्यः नारायणो निर्गुणः। सत्वरूपो विष्णुः, रजोरूपः ब्रह्मा, तमोरूपश्च रुद्रः। परमपुरुषः नारायणः गुणत्रयस्य उपादानकारणम्। गुणत्रितयञ्च सृष्टिस्थितिलयकारणम्। एते त्रयः अपि परब्रह्मणो नारायणस्य सगुणरूपा एव विकृतयः। निर्गुणस्यापि पुरुषस्य पुरुषसूक्तोक्तदिशा जगत्कारणत्वात् कारणत्वमङ्गीकार्यमेव।

परब्र्ह्मणः जगतः उत्पत्तेरनन्तरं सः यथावसरं अवतारान् स्वीकरोति। आद्योऽवतारः पुरुषः नारायणः।

"भूतैर्यथा पञ्चभिरात्मसृष्टैः परं विराजं विरचय्य तस्मिन्।

स्वांशेन विष्टः पुरुषाभिधानं अवाप नारायण आदिदेव। "

रूपरहितोऽपि भगवान् भक्तानामभिरुचिं पूरयितुं भिन्नैः रूपैः दृश्यते।

"ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि।

तद्विद्यादात्मनो मायां यथा भासो यथा तमः।।"[1]

एवं सर्वधा निर्गुणोऽपि भगवान् गुणवानिव, रूपरहितोऽपि रूपवानिव, अद्वयोऽपि सद्वय इव भाति। वस्तुतस्तु सः भक्त्यैकसाध्यः।

**साधनतत्वम् –**

एवंविधस्य साध्यतत्वस्य भगवतः प्राप्तिसाधनेषु भक्तिरेव गरीयसीति भागवते प्रतिपादितम्। शङ्कराचार्येणापि[3] भक्तेः गरीयस्त्वं समर्थितम्। वेदार्थसाररूपस्य महाभारतस्यापि ग्रथनेन अतृप्तो व्यासः भक्तिप्रधानं भागवतम् विरचय्य परां निर्वृत्तिं लेभे। भगवान् स्वयं भक्तेः प्राशस्त्यं प्रकटीचकार –

"न साधयति मां योगो न साङ्ख्यं धर्म उद्धव।

न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जितः।।"[2]

सप्तमस्कन्धे प्रह्लादेनापि भक्तेः भगवत्प्राप्ति साधनेषु सर्वोत्तमत्वं प्रतिपादितम् –

"नालं द्विजत्वं देवत्वमृषित्वं चासुरात्मजाः।

प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता।।

---

[1] पूर्वत्रैव - X -29-14

[2] श्रीमद्भागवतम् - XI -14 -20

न दानं न तपो नाज्या न शौचं न व्रतानि च।

प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम्।।"[1]

भक्तावपि द्वैविध्यम् साध्यसाधनरूपतया। तयोः साधनरूपा भक्तिः नवधा भवति श्रवणकीर्तनादिभिः। साध्यरूपा भक्तिः फलरूपा प्रेममयी। यां सेवमानाः ब्रह्मादिपदमपि न काङ्क्षन्ते।

"न पारमेष्ट्यं न महेन्द्रधिष्ण्यं, न सार्वभौमं न रसाधिपत्यम्।

न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत्।।"[2]

इति स्वयं भगवतैवोक्तम्।

भक्तस्य हृदयं भगवतो दर्शनाय सर्वधा व्याकुलं भवति। भगवतोऽदर्शने भगवतः प्रतीक्षासमयो यादृशी उत्कण्ठा भवति सा गिरामगोचरा। दशमस्कन्धे गोपीनां वाक्येषु तत्तसमीपस्थैरुपमानैः तस्य भक्तस्य व्याकुलत्वमेवं वर्णितम्। -

"अजातपक्षा इव मातरं खगाः

स्तन्यं यथा वत्सतराः क्षुधार्ताः,

प्रियं प्रियेव व्युषितं निषण्णा

मनोऽरविन्दाक्ष दिदृक्षते त्वम्।। "

अस्याः प्रेमभक्तेः उदाहरणभूतानां गोपिकानाम् साध्यभक्तिपरिपूर्णो वृत्तान्तः दशमस्कन्धे रासपञ्चध्याय्यां निरूपितः। तासां भक्तिः यद्यपि दास्यरूपत्वात्, सख्यरूपत्वात् साधनरूपा भासते तथाऽपि भागवते एव

"दुस्सहप्रेष्ठविरहतीव्रतापधृताशुभाः।

ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः।।[3]

इत्यादिना फलरूपतया वर्णनात् साध्यभक्तिरेवेति क्क्तव्यम्। इत्थं भगवतः भक्तेश्च अनिर्वचनीयं स्वरूपम् अणुमात्रं निरूपयितुं प्रयासः कृतः।

................

[1] पूर्वत्रैव - VII -8 -43,44

[2] पूर्वत्रैव - XI -14-14

[3] श्रीमद्भागवतम् - X 29-10

भक्तानां देहिनां भगवत्प्रप्त्युपायाः नैके प्रतिपादिताः दार्शनिकैः। तत्र ज्ञानमार्गः, कर्ममार्गः, भक्तिमार्गः, इति त्रयः पन्थानः प्रसिद्धाः। ज्ञानमार्गे अद्वैतदर्शनम्, विशिष्टाद्वैतदर्शनम्, द्वैतदर्शनमिति मतत्रयं प्रसिद्धं वर्तते। योगः अपि ज्ञानसाधक एव । योगेषु साङ्ख्ययोगः प्रसिद्धः। कर्ममार्गः श्रौतस्मार्तादि क्रियासाध्यः। स च पूर्वमीमांसकैः प्रतिपादितः। भक्तिमार्गः यद्यपि महर्षिभिः बहुधा प्रतिपादितः तथाऽपि नारदः भक्तिमार्गप्रवर्तक इति पुराणेषु प्रसिद्धम्।

**दर्शनसिद्धान्तसारांशः** –

शोधग्रन्थेऽस्मिन् तत्र तत्र तत्तद्दर्शन समन्वयः तेषां दर्शनानां सारः सङ्ग्रहेण उपवर्णितः।

## अद्वैतदर्शनम् –

"सत्यं ज्ञानमनन्तं ब्रह्म"[1]। तच्च एकमेव परमात्मस्वरूपम्। "एकमेवाद्वितीयं ब्रह्म"[2] इत्यादि श्रुतिप्रवृत्तोऽर्थोऽत्र मूलम्। "ब्रह्मसत्यं जगन्मिथ्या, जीवो ब्रह्मैव नापरः"[3] इति अद्वैतसिद्धान्तः। सर्वमिदं जगतु ब्रह्मणो विवर्तरूपम्। ब्रह्मणः विवर्तस्तु वीचीतरङ्गन्यायेन भवति। यथा निश्चले जले यत् किञ्चिच्चलनेन तरङ्गाः उद्बुदानि च उत्पन्नानि चलनापगमे तानि पुनः जले प्रलीयन्ते, तथैव परब्रह्मणः जीवजगत्सृष्टिः, पुनस्तत्रैव लयः। जगदपि प्राक् बीजस्यान्तः अङ्कुर इव निर्विकल्पम्।

पुनः मायाकल्पितदेशकालकलनावैचिष्यचित्रीकृतम्। तेषां मते जीवब्रह्मणोरैक्यम्। तद्ज्ञानमेव मोक्षः।

## विशिष्टाद्वैतदर्शनम् –

नारायणः विराट्स्वरूपः सगुणात्मकः जगत्सृजति। अतः विशिष्टाद्वैतिनां मते ईश्वरो विष्णुः सगुणः। जगदपि स्वप्नसाक्षात्कारवत् यावदनुभवं सत्यमेव। विराट्स्वरूपस्य नारायणस्य परिणामात् जगदुत्पद्यते। परिणामश्च पयोदधिन्यासरूपः। यथा पयसः दधिरूपेण, तक्ररूपेण, नवनीतरूपेण, परिणामे पुनः पयोरूपेण परिणामः न सम्भवति। तद्वत् परमात्मनः परिणतस्य जगतः न पुनः परमात्मनि लयः। जगतः सत्वगुणादिरूपविकारस्य सत्वेऽपि परमात्मनः निर्विकारत्वमेव। तेषां मते जीवब्रह्मणोरैक्यं न प्रतिपद्यते।

## द्वैतदर्शनम् –

द्वैतसिद्धन्ते जीवात्मा – परमात्मा च सर्वथा भिन्नौ। तयोः प्रथमः सगुणरूपः द्वितीयस्तु निर्गुणः।

---

[1] तैत्तिरीयोपनिषत् - II - 1-1

[2] छान्दोग्योपनिषत् - VI -2-1

**साङ्क्यदर्शनम्** –

साङ्ख्यदर्शने पुरुषः विश्वं सृजति। प्रकृतिः पुरुषाद्भिन्ना। अव्यक्तः पुरुषः। मूलप्रकृतिः पञ्चतन्मात्रांशाः, ज्ञानेन्द्रियांशाः, कर्मेन्द्रियाश्चेति षोडश विकाराः। पुरुषश्चैतन्यरूपः स्वतन्त्रश्च। प्रकृतिः कर्त्री, पुरुषः भोक्ता। प्रकृतिस्त्रिगुणात्मिका, पुरुषः निर्गुणः। पुरुषेण चेतिता जगत् सृष्टिव्यापारे प्रवर्तते। तत्रायं सृष्टिक्रमः – प्रकृतेः महतः (तत्वस्य) उदयः तदेव महद्बुद्धिरुच्यते, तच्च चिद्चिद्रूपेण द्विविधम्। अनन्तरं अहङ्कारः उत्पद्यते। तत्र प्रकृतिपुरुषयोरैक्यं सम्भवति। इदञ्च भ्रान्तिरूपम्। ततः पञ्चतन्मात्राः उत्पद्यन्ते। पञ्चज्ञानेन्द्रियाणि, पञ्च कर्मेन्दियाणि, मनः इति एकादशेन्द्रियाणि। एवं 1. पुरुषः, 2. प्रकृतिः, 3. महत्, 4. अहङ्कारः. 5. पञ्चतन्मात्राः, शब्दस्पर्शरूपरसगन्धरूपाः, सूक्ष्मरूपाभिराभिः मात्राभिः क्रमशः आकाशः, वायुः, तेजः, जलपृथ्वीरूपाणि, पञ्चभूतानि समुत्पद्यन्ते। एकादशेन्द्रियाणि 9+11 पृथिव्यादि पञ्चभूतानि इत्याहृत्य पञ्चविंशति सङ्ख्याकैः पदार्थैः सृष्टिरुत्पद्यते।

प्रकृति बन्धविच्छेद एव मुक्तिः। साङ्ख्यसिद्धान्तस्य प्रवर्तकः महर्षिः कपिलाचार्यः। कपिलः अपि नारायणस्यावतार इति भागवते तृतीयस्कन्धे पञ्चमाध्याये स्पष्टम् कपिलदेवहूतिसंवादे। साङ्ख्यवादन विस्तरस्तु श्रीमद्भागवते तृतीयस्कन्धे पञ्चमाध्याये द्रष्टव्यः।

साङ्ख्यदर्शने सेश्वरसाङ्ख्यं, निरीश्वरसाङ्ख्यमितिमतद्वयं वर्तते। तत्र निरीश्वरसाङ्ख्यं तु निर्गुणपरमात्मप्रतिपादकम्। सेश्वरसाङ्खयदर्शनं पौराणिकम्। विष्णोः प्रकृतिपुरुषस्वरूपे अभिमतेस्तः। प्रकृतिपुरुषौ द्वावप्यनादी नित्यौ च। कालरूपी विष्णुः सृष्टिसमये तौ प्रकृतिपुरुषौ संयोजयति, प्रलये च नियोजयति। भगवान् विष्णुः कालशक्तिद्वारैव सृष्टिप्रलयौ विधत्ते।

"विष्णोस्स्वरूपात् परतो हि ते द्वे, रूपे प्रथानं पुरुषं च विप्र।

तस्यैव तेऽन्येन धृतेवियुक्ते, रूपान्तरं तद्विज कालसंज्ञम्।।"[1]

सेश्वरसाङ्ख्ययोगः महाभरते विस्तरेणोपवर्णितः[2]। एवं नानादर्शनप्रतिपादितमार्गेषु सत्स्वपि सर्वेषां सुलभसाध्या भक्तिरेव।

**भक्तेः निर्वचनम्** –

अथ का नाम भक्तिः?

भज – सेवायाम् इति धातोः भावे क्तिन् प्रत्ययः। भजनमिति यावत्। भगवद्विषयिणी रतिः भक्तिः।

---

[1] विष्णुपुराणम् - । -2-24

[2] महाभारतम् - शान्तिपर्वं - मोक्षधर्मपर्वम्

"द्रुतस्य भगवद्धर्मात् धारावाहिकतां गता।
सर्वेशे मनसो वृत्तिः भक्तिरित्यभिधीयते।।[1]

चित्तं तु स्वभावात् जतुवत् कठिनम्। विषयाः तस्य तापकाः। विषयरतिं लौकिकविषयेभ्यः अपाकृष्य भगवति निवेश्यते चेत् भक्तिर्भवति। एवं विधनिवर्तने संस्कारस्य प्राधान्यं वर्तते। स एव संस्कारः वासना भावनादि शब्दभाग् भवति। द्रवीभूते वस्तुनि निमग्नं वस्त्वन्तरं तस्मिन् वस्तुनि धनस्थितिं प्रपद्यमाने यथा तत्रैव लग्नं भवति तद्वत् भगवद्रत्या द्रवीभूते चित्ते प्रविष्टः भगवान् चित्तस्य घनीभावेऽपि तच्चित्तात् नापैति।

**भक्तेः प्राशस्त्यम्** -

भक्तिरूपो धर्मः भागवते प्रतिपाद्यते इत्युक्तम्[2]। भक्तिः किमर्थमुपादेया? – उच्यते- मोक्षरूपः पुरुषार्थः ज्ञानेनैव सिध्यति। ज्ञानञ्च कर्मणां त्यागेन। कर्मबद्धस्य कर्मत्यागोऽपि न सुकरः। यदि कर्मत्यागः स्वायत्तः तदा न कोऽपि प्राणी कर्मपरतन्त्रो भवति। सुखदःखे कर्मसम्भवे। कर्मणैव हेतोः यथा प्राणी दुःखं लभते तथैव सुखम्।

"अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम्।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते।।"[3]

अथ यदि पुरुषः कर्माधीनः तर्हि कर्माचरणेन मुक्तिः, कर्मत्यागेन मुक्तिः, ज्ञानेन मुक्तिः, इत्यादि विकल्पाः साक्षात्प्रयोजका न भवन्ति। कर्मादिबन्धेषु सत्स्वपि अर्थात् वेदोक्तं कर्म आचरन्नपि भक्तियोगोऽस्ति चेत् पुरुषो मुच्यत एव। अतः कर्मानुष्ठान्, तत्सन्न्यासज्ञानादिभ्यः भक्तिः गरीयसी।

अत्रेदं बोद्यम् – अमृतत्वं तु कर्मणां त्यागेन सिध्यतीति[4] यद्यपि निश्चप्रचम् – किञ्च तत् सन्न्यासः जन्तूनां दुष्करः।

"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्"[5]।
"सन्यासादेव न नैष्कर्म्यं पुरुष अश्नुते"[6]।

---

[1] भगवद्भक्तिरसायनम् - । - 3

[2] उपोद्घातप्रकरणम् - 21 पृष्टम्

[3] श्रीमद्भागवतम् - । – 5 -18

[4] " न कर्मणा, न प्रजया, धनेन त्यागेनैके अमृतत्वमानशुः।
परेण नाकं विहितं गुहायां विभ्राजते यद्यतयो विशन्ति।।
सनस्तुजातीय शाङ्करभाष्यम् - । - 20

[5] भगवद्गीता - ।।। -5

[6] पूर्वत्रैव - ।।। - 4

इत्यभिधीयते च। सिद्धनैष्कर्म्यस्यापि कर्मत्यागः भक्तिं विना न शोभते[1]। अपरित्यक्तकर्मणोऽपि पुरुषस्य भगवति प्रयुज्यमाना भक्तिः निःश्रेयसाय भवति। सर्वमेतत्प्रतिपादितम् श्रीमद्भागवते। उदाहरणमपि तत्रैव निबद्दम्। -

भागवतेतरपुराणरचनानन्तरम् भगवान् कृष्णद्वैपायनः अव्यक्तां वेदनामनुबभूव - [2]

ततः नारदोपदेशेन मुनिः भागवतरचनायोपचक्रमे। वासुदेवे भगवति भक्तिः सर्वान् धर्मानतिरिच्यते - इति नारदोपदेशः। हुताग्नेः, पूजितगुरोः अधीतवेदस्य स्वयं ज्ञानरूपस्य व्यासस्य शान्तेरभावः पुरुषोत्तमगुणकीर्तनरूप भक्तिराहित्यादेवेति नारदोपदेशसारांशः[3]।

अतश्च सर्वधर्मेभ्यः भक्तिर्गरीयसी। अनन्यासक्तस्य भक्तस्य रक्षणभारं वहामीति भगवतः प्रतिज्ञा-

---

[1] वेदान्तविज्ञान सुनिश्चितार्थाः - सन्न्यासयोगाद्यतयश्शुद्धसत्वाः। ... कैवल्योनिषत् - । -4

[2] वितर्कयन्विविक्तस्थ इदञ्चोवाच धर्मवित्।
धृतव्रन हि मया छन्दासि गुरवोऽग्नयः।।
मानिता निर्व्यलीकेन गृहीतञ्चानुशासनम्।
भारतव्यपदेशेन ह्याम्नायार्थः प्रदर्शितः।।
दृश्यते यत्र धर्मादि स्त्रीशूद्रादिभिरप्युत।
तथाऽपि बत मे दैह्यो ह्यात्मा चैवात्मना विभुः।।
असम्पन्न इवाभाति ब्रह्मवर्चन्यसत्तमः।
किं वा भागवता धर्मा न प्रायेण निरूपिताः।।
प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः।
तस्यैवं खलमात्मानं मन्यमानस्य खिद्यतः।।
श्रीमद्भागवतम् - । - -27 प्रभृति 31 पर्यन्तम्

[3] अहो महाभाग! भवानमोघदृुच्छुचिश्रवाः सत्यरतो धृतव्रतः
उरुक्रमस्याखिलबन्धमुक्तये समाधिनानुस्मर यद्विचेष्टितम्।।
ततोऽन्यथा किञ्चन य्दविविक्षतः पृथग्दृशस्तत्कृतरूपनामभिः।
न कर्हिचित्क्वापि च दुःस्थिता मतिर्लभेत वाताहतनौरिवास्पदम्।।
जिगुप्सितं धर्मकृतेऽनुशासतः स्वभावरक्तस्य महान् व्यतिक्रमः।
यद्वाक्यतो धर्म इतीतरः स्थितो न मन्यते तस्य निवारणं जनः।।
विचक्षणः कोऽर्हति वेदितुं विभो रनन्तपारस्य निवृत्तितः सुखम्।
प्रवर्तमानस्य गुणैरननात्मनस्ततो भवान् दर्शय चेष्टितं विभोः।।
त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदि।
यत्र क्व वा भद्रमभूदमुष्यं किं को वार्थ आप्तो भजतां स्वधर्मतः।।
तस्यैव हेतोः प्रयतेत कोविदो, न लभ्यते यद्भ्रमतामुपर्यधः।
तल्लभ्यते दुःखदादन्यतस्सुखं कालेन सर्वत्र गभीररंहसः।।
श्रीमद्भागवतम् - । - 5 - 12 प्रभृति 17 पर्यन्तम्।।

"अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।

तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्।।[1]

इति खलु गीता।

योगप्रभृति सर्वाः विद्याः शास्त्राणि च नारायणादेवोत्पन्नानि।

"योगो ज्ञानं तथा साङ्ख्यं विद्याः शिल्पादिकर्म च।

वेदाः शास्त्रादिविज्ञानमेतत्सर्वं जनार्दनात्।।"[2]

इति विष्णुसहस्रनामसु सिद्धान्तितम्।

स च नारायणः भक्तिसुलभ इति भक्तिः मोक्षोपायान्तराण्यतिशेते। मोक्षप्रापकेषु योगेषु भक्तिरेव गरीयसी। बृहदारण्यके मङ्गलस्वरूपः भगवान् भक्तेन भक्त्या सदा ध्येयः इति प्रतिपादितः।

"आत्मा वा रे द्रष्टव्यः, श्रोतव्यः मन्तव्यो निदिध्यासितव्य।"[3]

भक्तियोगस्य प्राशस्त्यमेवं वर्णितम् स्वयं कृष्णेन श्रीमद्भगवते –

"यत्कर्मभिः यत्तपसा ज्ञानवैराग्यतश्च यत्।

योगेन दानधर्मेण श्रेयोभिरितरैरपि।।

सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा।

यथा ऽग्निः सुसमृद्धार्चिः करोत्येधांसि भस्मसात्।।

तथा मद्विषया भक्तिः उद्धवैनांसिकृत्स्नशः।

भक्त्याहमेकया ग्राह्यः श्रद्धयात्मप्रियस्सताम्।।

भक्तिः पुनाति मन्निष्ठा श्वपाकादपि सम्भवात्।

बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः

प्रायः प्रगल्भया भक्त्याविषयैर्नाभिभूयते।।

न साधयति मां धर्मो न साङ्ख्यं योग उद्धव।

न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता।।

धर्मसत्यदयोपेतो विद्या वा तपसान्विता।

---

1 भगवद्गीता - IX -22

2 महाभारतम् - आनुशानिकपर्वः 135 -139

3 बृहदारण्यकोपनिषत्

मद्भक्त्यपेतमात्मानं न सम्यक् प्रपुनाति हि।।"[1] इति।

तथा च भगवद्दर्शने, भगवज्जिज्ञासायां, भगवत्प्राप्तौ च भक्तिरेव प्रशस्तं साधनम्। ज्ञानयोगः दुस्साध्यम् कर्मत्यागमाकाङ्क्षते। कर्मयोगः यज्ञयागादिसामग्रीमपेक्षते।

साङ्ख्ययोगः शास्त्रपाण्डित्यमपेक्षते। तैर्विनापि भक्तिः भगवत्पाप्तावुपकरोतीति सर्वमहती हि सा। अतः साधनहीनस्य योगान्तरैः मोक्षः दुष्प्राप एव।

भक्तिस्तु न किञ्चिदपेक्षते। सर्वाणि कर्माणि भगवदर्पितानि कृत्वा अक्षरं अनिर्देश्यं भगवन्तं सर्वभूतहिते रताः ये पर्युपासते तेषां मृत्युसंसाससागरात् भगवानेव समुद्धर्ता भवति। यद्यपि भक्तस्यापि चित्तनिरोधः दुस्साध्यः तथाऽपि अभ्यासयोगेन निरोधः सिध्यत्येव। अभ्यासेऽप्यसमर्थः भगवत्कर्मपरो भूत्वा भगवदर्थं कर्माणि कुर्वन् सिद्धिं प्राप्नोति। तद्विधार्पणेऽप्यसमर्थः भक्तियोगमवलम्ब्य सर्वकर्मफलत्यागं कृत्वा सिद्धिमवगच्छति।

"श्रेयो हि ज्ञानमभ्यासात् ज्ञानाद्ध्यानं विशिष्यते।

ध्यानात्कर्मफलत्यागस्त्यागच्छान्तिरनन्तरम्।।

सन्तुष्टस्सततं योगी यतात्मा दृढनिश्चयः।

मय्यर्पितमनोबुद्धिर्यो मद्भक्तस्स मे प्रियः।।"[2]

इति गीता। अपि च महाभारते विषण्णाय अर्जनाय तत्वमुपदिशता भगवता भगवद्गीतासु, उपनिषत्सु, स्वयं भक्तियोगस्य प्राशस्त्यमुपदिष्टम्।

"सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम।

देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः।।

नाहं वेदै र्न तपसा न दानेन न चेज्यया।

शक्यं एवं विधो द्रष्टुं दृष्टवानसि मां यथा।।

भक्त्या त्वनन्यया शक्यं अहमेवंविधोऽर्जुन।

ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप।।"[3]

एवं भक्तियोगस्य सर्वेभ्योऽपि शास्तेभ्यः गरीयस्त्वं, भक्तस्य शास्त्रान्तरोपासकेभ्यः भगवत्प्रीति भाजनत्वं च भगवता स्वयमुपपादितमिति सर्वं सुस्थम्।

---

[1] श्रीमद्भागवतम् - XI -14-17 प्रभृति 22 पर्यन्तम्

[2] भगवद्गीता - XII -12,14

[3] पूर्वत्र - XI -52, 53,54

एवं विधा भक्तिरपि भगवदनुग्रहेणैव लभ्यते। यतो व्यसनमग्नः प्राणी वक्तुं समर्थोऽपि नामसङ्कीर्तनं न करोति।

"वैकुण्ट, पद्माक्ष! हरे! मुरारे, गोविन्द दामोदर माधवेति।

वक्तुं समर्थोऽपि न वक्ति कश्चित्, अहो जनानां व्यसनाभिमुख्यम्।।"[1]

शक्तस्यापि नामसङ्कीर्तनस्याकरणेनैव जननमरणादि क्लेशः पुनःपुनः प्राप्यते।

"श्रीमन्नाम प्रोच्य नारायणाख्यं,

केन प्रापुर्वाञ्छितं प्राणिनोऽपि

हा! नः पूर्वं वाक् प्रवृत्ता न कस्मिन्

तेन प्राप्तं गर्भवासादि दःखम्।। "[2]

अतः व्यसनमग्नत्वात् नामोच्चारणे अशक्तः भक्त्यामनुरक्तः नारायणमेव शरणं गत्वा तथाविधं वाचं संपादयितुमर्हति।

"श्रीवल्लभेति वरदेति दयापरेति, भक्तप्रियेति भवलुण्ठन कोविदेति।

नाथेति नागशयनेति जगन्निवासे, त्यालापनं प्रतिपदं कुरुमे मुकुन्द।।"[3]

इति तदर्थं भगवान् प्रार्थयितव्यः।

"दिवि वा भुवि वा ममास्तु वासः

नरके वा नरकान्तकं प्रकामम्।

अवधीरितशारदारविन्दौ

चरणौ ते मरणेऽपि चिन्तयामि।।[4]"

इति वदता भक्तेन भगवानाश्रयणीयः। सर्वाणीन्द्रियाणि भगवत्पूजायां नियोजनीयानि।

"जिह्वे कीर्तय, केशवं, मुररिपुं चेतो भज श्रीधरं।

पाणिद्वन्द्व समर्चय, अच्युतकथाः श्रोत्रद्वयं त्वं श्रुणु।

कृष्णं लोकय लोचनद्वयं, हरेः गच्छाङ्घ्रियुग्मालयम्।

---

[1] मुकुन्दमाला - 38 श्लो

[2] पूर्वत्र -27

[3] मुकुन्दमाला - 2

[4] पूर्वत्र -7

जिघ्र घ्राण मुकुन्दपादतुलसीं मूर्धन् नमाधोक्षजम्।।"[1]

इत्यात्मार्पणपद्धतिः निर्दिष्टा भगवता कुलशेखरेण किं बहुना आत्मनः जन्मैव भगवत्परायणं सर्वथा सर्वदा, सर्वधा करणीयमिति भगवन्तमेव प्रार्थयेत्।

"बद्धेनाञ्जलिना नतेन शिरसा गात्रैस्सरोमोद्गमैः

कण्ठेन स्वरगद्गदेन नयनेनोद्गीर्णबाष्पाम्बुना।

नित्यं त्वच्चरणारविन्दयुगलध्यानाम्बुजास्वादिना-

मस्माकं सरसीरुहाक्ष सततं संपद्यतां जीवितम्।।"[2] इति।

एवं सर्वधा शरणं प्रपन्नं भक्तं भगवान् सर्वदा रक्षत्येव। भगवानेव भक्तं स्मरति। भक्तमन्विष्यन् तं परित्रातुं स्वयमागच्छति। विशिष्टाद्वैतिनः वैष्णवाः भगवतः प्रतिज्ञां एवं वर्णयति। एषा प्रतिज्ञा "वराहचरमश्लोकः" इति प्रसिद्धा।

"स्थिते मनसि सुस्वस्थे शरीरे सति यो नरः

धातुसाम्ये स्थिते स्मर्ता विश्वरूपञ्च मामजम्।

ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम्

अहं स्मरामि मद्भक्तं नयामि परमां गतिम्।।"

एषा प्रतिज्ञा यथार्था। महाभारते शान्तिपर्वणि शरतल्पगतं भीष्मं हस्तिनापुरगतः श्रीकृष्णः स्वयं सस्मार। युधिष्ठिरराज्याभिषेकानन्तरं एकदा मणिवेश्मनि श्रीकृष्णः ध्यानमग्नः आसीत्। तादृशं नारायणं दृष्ट्वा विस्मितः युधिष्ठिरः एवमपृच्छत् –

"किमिदं परमाश्चर्यम् ध्यायस्थिमितविक्रमः।

कच्चित् लोकत्रयस्यास्य स्वस्ति लोकपरायण।। "

इति प्रश्नं शृत्वा भगवानेवमवोचत्। -

"शरतल्पगतो भीष्मः शाम्यन्निव हुताशनः।

मां ध्याति पुरुषव्याघ्रः ततो मे तद्गतं मनः।।"

इत्यारभ्य - "एकीकृत्येन्द्रियग्रामं मनः संयम्य मेधया।

शरणं मामुपागच्छत्, ततो मे तद्गतं मनः।।"[3]

इत्यादि प्रतिश्लोकान्तं "ततो मे तद्गतं मनः" इति वदन् नव श्लोकान् जगौ।

---

[1] पूर्वत्र -17

[2] मुकुन्दमाला -21

[3] महाभारतम् - शान्तिपर्वः - 46, 11 प्रभृति 19 पर्यन्तम्

श्रीमद्भागवते अष्टमस्कन्धे गजेन्द्रमोक्षणकथाप्यत्र लक्ष्यभूता। अत एव आर्तत्राणपरायणस्तोत्रे कश्चित् भक्तः प्राह –

"वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणा-

दौदार्यादथशोषणादगणित श्रेयः पदप्रापणात्।

सेव्यः श्रीपतिरेक एव जगतां सन्त्यत्र षड्साक्षिणः

प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्या ध्रुवः ।।[2]"

इत्थं सत्सु नानोपायेषु मोक्षार्थं भक्त्युपायः सुलभः श्रेष्ठतमश्च।

**नवधा भक्तिमार्गाः** –

भगवत्सेवायाः नैके प्रकाराः विद्यन्ते। ज्ञानेन अज्ञानेन वा कृतं भगवत्पादाम्बुजध्यानं सद्यः फलं प्रयच्छति। अतः कर्मज्ञानयोगेभ्योऽपि भक्तेः श्रेष्ठतां महर्षिर्नारदः प्रतिपादयामास-

"सा तु कर्मज्ञानयोगेभ्योरप्यधिकतरा"

"फलरूपत्वात्"[1]

एवं विधायाः भक्ते नवविधत्वं प्रह्लादमुखात्प्रतिपादितम् श्रीमद्भागवते वेदव्यासेन।

"श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।

अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।।

इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा

क्रियते भगवत्यद्धा तन्मन्तेऽधीतमुत्तमम्।।[2]"

भागवतोत्तमस्य प्रह्लदस्योक्तिरियम्। एकैकस्या अपि भक्तेः अनुसर्तारो भक्ताः श्रीमद्भागवते तत्तद्वृत्तान्तेषु निरूपिताः।

**श्रवणम्** – भगवतः गुणश्रवणम्। यथा परिक्षित्।

"नूनं भगवतो ब्रह्मन् हरेरद्भुतकर्मणः।

दुर्विभाव्यमिवाभाति कविभिश्चापि चेष्टितम्।

विचिकित्सितमेतन्मे ब्रवीतु भगवान् यथा।

शाब्दे ब्रह्मणि निष्णातः परस्मिंश्च भवान् खलु।।"[3]

---

[1] नारदभक्तिसूत्राणि - 25, 26

[2] श्रीमद्भागवतम् - VII -5- 23,24

[3] श्रमंद्भागवतम् - II - 4- 10

**कीर्तनम्** – हरिगुणकीर्तनम् – यथा नारदः, श्रीशुकः।

"यत् कीर्तनं, यत्स्मरणं, यदीक्षणं, यद्वन्दनं, यच्छ्रवणं यदर्हणम्।
लोकस्य सद्यो विधुनोति कल्मषं, तस्मै सुभद्रश्रवसे नमोनमः।।"[1]

**स्मरणम्** – मनसि भगवतः ध्यानम्। यथा भीष्मः, प्रह्लादश्च।

"सपदि सखिवचो निशम्य मध्ये
निजपरयोर्बलयो रथं प्रवेश्य,
स्थितवति परसैनिकायुरक्ष्णा
हृतवति पार्थसखे रतिर्ममास्तु।।"[2]

**पदसेवनम्** – भगवतः पादसेवा – यथा जयविजयौ।

"तस्यारविन्दनयनस्य पदारविंद-
किञ्जल्किमिश्रतुलसीमकरन्दवायुः।
अन्तर्गतस्स्वववरेण चकार तेषां
संक्षोभमक्षरजुषामपि चित्ततन्वोः ।।"[3]

**अर्चनम्** – भगवदर्चनम् – यथा अम्बरीषः।

"सवै मनः कृष्णपदारविन्दयो-
र्वचांसि वैकुण्ठ गुणानुवर्णने।
करौ हरेर्मन्दिरमार्जनादिषु
श्रुती चकाराच्युतेसत्कथोदये।।"[4] इत्यादि चतुश्श्लोकाः।

**वन्दनम्** – नमस्या – कृब्जादयः।

"नमस्तुभ्यं भगवते पुरुषाय महात्मने।
भूतावासाय भूताय पराय परमात्मने।।"[5]

---

[1] पूर्वत्रैव - II - 4- 15

[2] पूर्वत्रैव - I -9-35

[3] पूर्वत्रैव - III - 15 -43

[4] पूर्वत्रैव - IX -4- 21 प्रभृति 24

[5] पूर्वत्रैव - X -16-39

**दास्यम्** – कर्मार्पणम्। अनेन देहीनिस्सङ्गो भवति। अतः वैष्णवसंप्रदायानुसारिणः विशिष्टाद्वैताः दास्यभक्तिं सर्वेभ्यः भक्तिप्रकारेभ्यः गरीयसी मन्वते। वदन्ति च –

"मज्जन्मनः फलमिदं मधुकैटभारेः

मत्प्रार्थनीय मदनुग्रह एष एव

त्वत्भृत्य भृत्य परिचारकभृत्यभृत्य-

भृत्यस्य भृत्य इति मां स्मर लोकनाथ ।।[1]"

**सख्यम्** - सख्युर्भावः। यथा अर्जुनस्य भक्तिः।

"कृष्णकृष्ण! महाबाहो! भक्तानामभयङ्कर।।
त्वमेको दह्यमानानामपवर्गोऽसि संसृतेः।।"[2]

**आत्मनिवेदनम्** – देहसमर्पणम्। यथा विक्रीतस्य गवाश्वादेः भरणपालनादि चिन्ता न क्रियते तथा देहं भगवते समर्प्य तच्चिन्तावर्जनमित्यर्थः। इमामपि भक्तिपद्धतिं श्रेयसीं मन्यते भागवताः।

"अहमस्म्यपराधानां आलयोऽकिञ्चनो गतिः।
त्वमेवोपायभूतो मे भवेति प्रार्थना मतिः।।[3]"
शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्जताम्।।

आत्मनिवेदन प्रकारस्तु इत्थं भूतः –

"वपुरादिषु योऽपि कोऽपि वा
जनितोऽसानि यथाविधोऽपि वा
तदहं तव पादपद्मयोः, अहमद्यैव मया समर्पितः।।[4]"

अपि च आत्मन्यासस्य पद्धतिमेवं वदन्त्याचार्याः –

"अहं मद्रक्षणभरः, मद्रक्षणफलं तथा।
न मम, श्रीपतेरेवेत्यात्मानं निक्षिपेत् बुधः।।[5]"

भरन्यासे भगवानेवं प्रार्थयितव्यः। -

"अभीष्टे दुस्साध्ये स्वत इतरतो वा क्वचन तत्,
भरन्यासं याञ्चान्वितमभिवदन्ति प्रपदनम्।

इतः पश्चादस्माद्यतन निरपेक्षेण भवता
समर्थोऽसावर्थस्त्विति मतिविशेषं तदविदुः।।"[6]

---

[1] मुकुन्दमाला - 27

[2] श्रीमद्भागवतम् - । - 7-22

[3] अहिर्बुध्न्यसंहिता

[4] रहस्यत्रयसारम्।

[5] रहस्यत्रयसारे न्यासदशके

[6] पूर्वत्र - साङ्गप्रपदनाधिकारः।

यद्यपि सर्वे भागवतोत्तमाः आत्मनिवेदनपराः। तथाऽपि विशिष्य रुक्मिणी, गोप्यश्च अस्याः भक्तेः उदाहरणं भवितुमर्हन्ति।

**वैरभक्तिः –** न केवलं पूर्वोक्तया नवप्रकारया भक्त्या किन्तु एतदव्यतिरिक्तस्याऽपि भक्त्या भगवत्प्राप्तिर्भवतीति भागवते स्पष्टीकृतम्। वैरानुबन्धेनापि भगवान् प्राप्यः इति सप्तमस्कन्धारम्भे उपपादिम्।

भागवतशुश्रूषुः युधिष्ठिरः हिरण्यकशिपुप्रभृतीनामपि द्विषां नारायणो मुक्तिप्रदाता इत्यत्र का वा सङ्गतिरिति नारदमुनिं पप्रच्छ। तदा नारदः प्राह[1] – निन्दास्तुत्यादीनां आधारभूतं कलेबरं अविवेकेन कल्पितम्। देहबद्धः अभिमानः यथा देहिनां वर्तते न तथा भगवतः।

सप्तमस्कन्धे कर्मवासनाः विवृत्ताः। नारायणस्य द्वारपालकौ जयविजयौ सनकादिभिः शप्तौ। न तत्र शापः मुनिभिः स्वयं प्रयुक्तः पार्श्वचरौ शापफलमनुभवन्तौ हिरण्याक्ष-हिरण्यकशिपू, रावणकुम्भकर्णौ, शिशुपालदन्दवक्त्रौ इति जनित्रये जातावपि भगवतस्स्मरणं न व्यस्मार्ष्टम्। तयोः वैररूपा भक्तिरपि भगवता स्वयमनुगृहीता।

"एतौ सुरेतरगतिं प्रतिपद्य सद्यः
संरम्भसंभृत समाध्यनुबद्धयोगौ।
भूयस्सकाशमुपयास्यत आशु यो वः
शापो मयैव निमितः तदवैत विप्राः।।[2]"

अत्र शापः भगवदधिमतः[3]। निमितः इति निर्मित इत्यर्थे।

---

[1] "निन्दनस्तव सत्कारन्यक्कारार्थं कलेवरम्।
प्रधानपरयो राजन्नविवेकेन कल्पितम्।।
हिंसा तदभिमानेन दण्डपारुष्ययोर्यथा।
वैषम्यमिह भूतानां ममाहमिति पार्थिव।
यन्निबन्धोऽभिमानोऽयं तद्वधात्प्राणिनां वधः।।
तथा न यस्य कैवल्यादभिमानोऽखिलात्मनः।
परस्य दमकर्तुर्हि हिंसा केनास्य कल्प्यते।।
तस्माद् वैरानुबन्धेन निर्वैरेण भयेन वा।
स्नेहात्कामेन वा युञ्ज्यात् कथंचिन्नेक्षते पृथक्।।
यथा वैरानुबन्धेन मर्त्यस्तन्मतासियात्।
न तथा भक्तियोगेनत्विति मे निश्चिता मतिः।।
श्रीमद्भागवतम् - VII – 1- 24 -28

[2] श्रीमद्भागवतम् - III - 16 -26

[3] ममैवतु मतं सम्मतम् - इदमत्र तत्वम् - यद्यपि सनकादीनां क्रोधोऽपि न सम्भवति। न च भगवत् पार्षदयोः तयोर्वा ब्राह्मणप्रातिकूल्यम्। न च भगवतः स्वभक्तोपेक्षा। न च वैकुण्ठगतानां पुनर्जन्म। तथाऽपि

अपि च मुनिभिश्शप्तौ विष्णुपार्श्वदौ तमोप्रधानजन्मस्वपि भगवच्चिन्तन पराङ्मुखत्वं माभूदिति तान् प्रार्थयामासतुः।

"भूयादघोनि भगवद्भिरकारि दण्डो
योऽसौ हरेत सुरहेलनमप्यशेषम्।
मा वो नु तापकलया भगवत्समृतिघ्नो
मोहो भवेदपितु नौ व्रजतोरधोऽधः।।[1]" – इति।

यद्यपि मुनयः एवं तावनुग्रहीतुं न शेकुः। तथाऽपि भगवान् तावेवमनुजग्राह। अतस्तयोः तामसयोरपि भक्तिरुत्पन्ना। ये च भक्ताः कृतवैरा अपि अनासादित भगवत्प्रसादाः न तेषु दृढः वैरानुबन्ध इति ज्ञेयम्। एतदभिप्रेत्य उक्तम् –

"कतमोऽपि न वेन स्यात् पञ्चानां पुरुषं प्रति।
तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्।।[2]"

अन्ये च केचन भागवताः वैरानुबन्धेन मुक्ताः भागवते एव उदाहृताः।

"वैरेण यं नृपतयश्शिशुपालपौन्ड्र-
शाल्वादयो गतिविलासविलोकनाद्यैः।
ध्यायन्त आकृतधियः शयनासनादौ
तत्साम्यमापुरनुरक्तधियां पुनः किम्।।[3]"

श्रीमद्भागवते विष्णुपार्षदयोः यद्यपि जन्मत्रयावधिः शापावसान इति न निश्चितम्। तथाऽपि पद्मपुराणे एवंविध निश्चयः दृश्यते।

"दासत्वं सप्तजन्मानि युवां भक्तौ ममानधौ।
अमित्रतां तथा त्रीणि भजतं तु वा।।[4]"

एवंविध वैरानुबन्धे हिरण्याक्षादिभिः कृता भगवन्निन्दा व्याजस्तुतिरिति सर्वत्र श्रीधरेण व्याख्यातम्। विशेषतः तृतीयस्कन्धे हिरण्याक्षकृतनिन्दा; दशमस्कन्धे राजसूययागे शिशुपालकृत श्रीकृष्णनिन्दा च स्तुतिपरैवेति भावार्थदीपिकायां स्पष्टम्। विस्तरस्तु अग्रे वितन्यते तथाऽपि (वैरभक्ति प्रतिपादने) प्रस्तुतप्रद्योतनाय दिङ्मात्रं दर्शितम्।

---

भगवतस्सिसृक्षादिवत्। कदाचिद्युयुत्सा समजनि। तदा अन्येषामल्पबलत्वात् यत् स्वपार्षदानाञ्च तुल्यबलत्वेऽपि प्रातिपक्ष्यानुपपत्तेः। एतावेव ब्राह्मनिवारणे प्रवर्त्य तेषु च क्रोधमुत्पाद्य तच्छापव्याजेन प्रतिपक्षं विधाय युद्धकौतुकं सम्पादनीयमिति भगवतैव व्यवसितम्। ततस्सर्वं सङ्गच्छते। तदुक्तशापो मयैव निमित्त इति मा भैष्टमिति।

भागवतम् भावार्थदीपिका -III -16 -26

[1] श्रीमद्भागवतम् - III -15-36

[2] पूर्वत्र - VII - 1 - 34

[3] पूर्वत्र - XI- 5 -48

[4] पद्मपुराणम् - उत्तरखण्डम् - 238 -21

**मधुरभक्तिः –**

गोप्यः पुनः जारधिया भगवति सङ्गताः कथं मुक्ता बभूवुरिति पुनश्शङ्का परीक्षितः।[1] तां श्रीशुकः एवं निवारयति –

"उक्तं पुरस्तादेतत्ते चैद्यस्सिद्धिम् यथा गतः।
द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः।।[2]" इति।

सुखदुःखौ द्वन्द्वम्। पुण्यपापौ द्वन्द्वम्। मोक्षस्तु अद्वन्द्वरूपः। स तु पुण्यात् सर्वधा भिन्नः। पापच्च। पापशेषे, पुण्यशेषे च पुनः तदनुभवार्थं जन्म प्राप्यमेव। अतश्च मोक्षोपायः आचार्यैः एवं दर्शितः - "कर्मणामनरम्भः, आरब्धस्य च उपभोगेन क्षयः [3]" इति।

गोप्यः पूर्वस्मिन् जन्मनि महर्षयः आसन्। रामावतारे दण्डकारण्ये चरन्तं पुंसामपि मोहनरूपं रामं दृष्ट्वा तस्य संयोगम् प्रार्थयामासुः। तस्मिन्नवतारे तथाविधस्य संयोगस्य असम्भवात्, अवतारान्तरे एवं भवत्विति रामःताननुजग्राह – इति कथा[1] श्रूयते।

मुनयः तस्मिन् जन्मनि सकामाः प्रारब्धस्य अक्षीणतया पुनर्भवं प्राप्य गोप्यः भूत्वा कृष्णं परं कान्तमापुः। कृष्णः कञ्चित्कालं ताभिः कृतरतिः अन्तर्दधे।[2]

ततः - "दुस्सहप्रेष्टविरहतीव्रतापधृताशुभाः।
ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः।।"
तमेव परमात्मानं जारबुध्याऽपि सङ्गताः।
जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः।।"[3] इति।

अपवर्गश्च शुभाशुभनिमित्तकर्मनाशेन भवति। गोपिकानां श्रीकृष्णाद्वियोग एव दुःखहेतुः। दुःखानुभवेन पापशेषः प्रणश्यति। वियोगकाले तद्गता चिन्ता यद्यपि बाधते तथाऽपि तत्समागमस्मरणे प्रत्यक्षानुभवादपि अधिकतरः आनन्दः ताभिर्लभ्यते। अतः आनन्दानुभवेन पुण्यशेषोऽपि प्रणष्टः। इत्थं पापपुण्ययोः द्वयोर्नाशेऽपि कामः तद्गतः मोक्षहेतुरभूत्। उक्तञ्च तत्रैव शुकमहर्षिणा –

"कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च।
नित्यं हरौ विदधतो यान्ति तन्मयतां हरेः।।"[4] इति।

तीव्रः कामः तस्मिन्नेव वस्तुनि समुत्पद्यते यत् सर्वश्रेष्ठं, निखिलैश्वर्यमयञ्च, महता माधुर्येण पूर्वं सर्वाङ्गसुन्दरमानन्दमयञ्च स्यात्। सर्वमिदं भगवति दृश्यते। गोपीनां एवंविधः कामः सर्वमहति भगवति समुत्पन्नः। स च आश्चर्यकरः लोकातीतश्च आसीत्. केषाञ्चन दृष्टौ

---

[1] "पुरा महर्षयस्सर्वे दण्डकारण्यवासिनः।
दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् सुविग्रहम्।।
ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले।
हरिं संप्राप्य कामेन ततो मुक्ता भवार्णवात्।।"
भक्तिरसामृत सिन्धुः - पूर्वविबागः - 301, 302 श्लो

[2] तासां तत्सौभगमदं वीक्ष्यमानञ्च केशवः।
प्रशमाय प्रसादाय तत्रैवान्तरधीयत।।
श्रीमद्भागवतम् - X- 29 - 48

[3] श्रीमद्भागवतम् X -29-10,11

[4] पूर्वत्रैव -29,15

लोकविरुद्धोऽपि। किन्तु सः कामः स्वाभाविकः। यतः पूर्वोक्तरीत्या श्रेष्ठतमे कामस्सर्वेषां जायते। गोपीनां भगवद्विषयः कामः न लौकिककामसन्निभः। तथा हि लोकगतः कामः ऐहिकवाञ्छाप्रयुक्तः। गोपीनां कामस्तु निसर्गोज्ज्वलनित्यनिरवद्यमोक्षोपायश्रेष्ठ भक्तिप्रयुक्त इति संवेद्यम्। तत्र ऐहिकवाञ्छापेक्षया ब्रह्मास्वादसहोदरस्य, परमेश्वरसंप्राप्तिमहोत्सवस्य, सत्यशिवसुन्दरस्य, निरतिशयसुखस्यैव प्राधान्यम्। विस्तरस्तु मधरभक्ति प्रकरणे द्रण्टव्यम्।

**भक्तेः रसत्वम्** –

भक्तिश्चत्तवृत्तिरिति केचन आलङ्कारिकैरुक्तम्। चित्तवृत्तिः भावरूपा भवति। निश्चले मनसि सञ्जायमानः प्रथमोविकारः भावः इत्युच्यते।

"निर्विकारात्मके चित्ते भावस्तत्राद्यविक्रिया"[1]
विकारस्तु विभावादि दर्शनादि जन्यः।

स च भावः एकोऽपि विभावादि पोषणबलाद् क्वचित् स्थायी भवति, क्वचिच्च सञ्चारी।

"रत्यादयस्स्थायिभावास्स्युर्भूयिष्ठविकारजाः।
स्तोकं विभावैरुत्पन्ना त एव व्यभिचारिणः।।"[2]

"स्थायि" शब्द एव भावस्य चिरमवस्थाने तस्य रसत्वाधिकार इति सूचयति। तिष्ठतीति व्युत्पत्तेः।

"विभावैरनुभावैश्च सात्विकैर्व्यभिचारिभिः।
आनीयमानस्वादुत्वं स्थायी भावो रसस्स्मृतः।।"[3]

सात्विकभावाः अनुभावविशेषा एव।

"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः।"[4]

इति भरतसूत्रम्। "रसो वै सः"[5] इत्यादि श्रुतिषु रसशब्दस्यार्थः उपचितस्थायीभावजन्यः आनन्द एवेति मम्मटाद्यालङ्कारिकप्रमुखा अभिप्रयन्ति। सर्वत्र भावस्य विशेषणं विशेष्यं वा चिदंशमादाय नित्यत्वम्, स्वतः प्रकाशकत्वञ्च सिद्धम्। लौकिकवासना जन्यत्वात्। अयं रसानन्दः ब्रह्मानन्दास्वाद सविधवर्तीत्युच्यते।

एवमानन्दस्वरूपो रसः कतिविधः इत्यत्र आलङ्कारिकाणां मध्ये मतभेदास्सन्ति। तत्र केचिदाहुः –अष्टाविति, केचन नवेति, दशेति, एकादशेति, विवदमानाः दृश्यन्ते। संख्येयत्ता अनिश्चयस्य कारणं शमस्नेहभगवद्रत्यादीनां भावानां स्थायित्वमुपपद्यते न वेति संशये एव। भक्तिरसस्य पूर्वरूपम् भगवद्रतिः। तस्याः भगवद्रतेः स्थायित्वे, भक्तेः रसत्वं सिद्धम्। अनुपपन्ने रसत्वे न स्यादिति वक्तव्यम्। स्थायीभावानुपलब्धेः। तथा च भगवद्रतेः पूर्वोक्तलक्षणानुसारं स्थायिभावत्वं सम्पद्यते न वेति विचारणीयम्। केचन नेति कथयन्ति।

---

1 दशरूपकम् - चतुर्थप्रकाशः

2 दशरूपकम् - 4

3 रसगङ्गाधरम् - प्रथमाननम्।

4 नाय्यशास्त्रम् - VI - 31

5 तैत्तिरीयोपनिषत् - II- 7

अपरे यदि नायिकानायकरतेः स्थायित्वमङ्गीक्रियते कुतोवा भगवद्विषयकरतेः नेति सोपपत्तिकं भक्तेः रसत्वम् सिषाधयिषन्ति। भक्तिः चिरं चित्तेऽवतिष्ठते। अनुबन्धिभिः हर्षाश्रुपुलकादिभिः सम्बध्यते च। भक्तस्य परमानन्ददायकत्वात् आनन्दानुभवः तत्र प्रत्यक्षसिद्धः। भक्तिरसे ध्येयः भगवान् आलम्बनविभावः। तद्गुणकथाश्रवणसङ्कीर्तनादयोऽनुभावाः। अश्रुरोमाञ्चादयः सात्विकविशेषाः। हर्षादयस्सञ्चारिणः। एवं समग्रतया विभावानुभावव्यभिचारिसामग्रीलाभात् तत्संयोगात् भगवद्विषयकरतिभावस्य स्थायित्वात् भक्तेः रसत्वम् अवश्यं स्वीकार्यमेव।

एवं स्थिते केचन भक्तिं रसममन्वानाः देवताविषयकरतिः भावध्वनिर्भवतीत्यूचुः। तेषु सर्वप्रमुखः काव्यप्रकाशकृत् मम्मटाचार्यः। तेनैवं प्रतिपादितम्।

"रतिर्देवादिविषया व्यभिचारितया व्यञ्जनविषयः भावः प्रोक्तः"[1]।

इमां कारिकां विवृण्वन् "गोविन्दठाकूर्" महाशयः प्रदीपव्याख्यायां रत्यादिभिन्नानां भावानां स्थायित्वमपि निराचकार। - "रतिर्देवादिरिति" तथा चार्थः –

"रत्यादिश्चेन्निरङ्गस्स्यात् देवादि विषयोऽथवा।
अन्याङ्गभावभाग्वास्यान्न तदा स्थायिशब्दभाक्।।" [2]इति।

एवं भगवद्विषयकरतेः रसत्वं निराकुर्वन्तोऽपि रससामग्रीं निरूपयामास। -

"कण्ठकोणविनिमिष्टमीश ते कालकूटमपि मे महामृतम्।
अप्युपात्तममृतं भवेद्वपुः भेदवृत्ति यदि मे न रोचते।।"[3]

अत्र महादेवः आलम्बनम्। ईशप्रतिपाद्यं अव्याहतैश्वर्यं उद्दीपनम्। स्तवः अनुभावः। धृति, माहात्म्यस्मरणादयः व्यभिचारिणः।

अत्र एतैः अनुमिता रतिः भाव एवेतिबोध्यम्। न चास्याः कुतो न रसत्वमिति वाच्यम्। मुनेः स्वतन्त्रेच्छत्वात्। फलबलकल्प्यसामग्रीवैलक्षण्येन सहृदयसंवादेन च उत्कटानन्दांशाप्रकाशाच्च।[2]" इत्युद्योते स्पष्टम्।

रसगङ्गाधरकृत् जगन्नाथः अपि भगवद्विषयिण्याः रतेः स्थायित्वं प्रतिपाद्य "कथमेत एव रसाः" – इति स्वयमाशङ्क्य एवं समादधे –

"अथकथमेत एव रसाः। भगवदालम्बनस्य, रोमाञ्चाश्रुपातादिभिरनुभावितस्य, हर्षादिभि अभृपरिपोषितस्य, भागवतादि पुराणश्रवणसमये भगवद्भक्तैरनुभूयमानस्य भक्तिरसस्य दुरपह्णवत्वात्।

भगवदनुरागरूपा भक्तिश्चात्र स्थायिभावः। न चासौ शान्तरसे अनतर्भवमर्हति। अनुरागस्य वैराग्यविरुद्धत्वात् इति चेदुच्यते – भक्तेर्देवादिविषयरतित्वेन भावान्तर्गततया रसत्वानुपपत्तेः।

"रतिर्देवादिविषया व्यभिचारी तथाञ्जितः।
भावः प्रोक्तस्तदाभासा ह्यनौचित्यप्रवर्तिताः।।"

इति हि प्राचां सिद्धान्तः। न च तर्हि कामिनीविषयाया अपि रतेः भावत्वमस्तु, रतित्वाविषेषात्। अस्तु वा भगवद्भक्तेरेव स्थयित्वम्, कामिन्यादिरतीनाञ्च भावत्वम्,

---

[1] काव्यप्रकाशः - 4 - 4

[2] प्रदीपोद्योतसमेतः काव्यप्रकाशः - चतुर्थउल्लासः ।

[3] काव्यप्रकाशः - 4 - 45

विनिगमकाभावात् इति वाच्यम्। भरतादि मुनिवचनानामेवात्र रस भावत्वादि व्यवस्थापकत्वेन स्वातन्त्र्या योगात्। अन्यथा पुत्रादि विषयाया अपि रतेः स्थायिभावत्वं कुतो न स्यात्, न स्याद्वा कुतः शुद्ध भावत्वं जुगुप्सा शोकादीनाम्, इत्यखिलदर्शनं व्याकुली स्यात्। रसानां नवत्वगणना च मुनिवचन नियन्त्रिता भज्येत इति यथा शास्त्रमेवन्यायः।।" [1]

एवं जगन्नाथः यद्यपि भक्तेः रसत्वं पूर्वपक्षीकरोति। तथाऽपि विस्तरेण रससामग्रीं प्रतिपाद्य महतीमनुकूलताम् प्रदर्शितवान्। भक्तेः रसत्वनिराकरेण परेषां मतं केवलं प्रतिपाद्य स्वयं तूष्णीमतिष्ठत्। विषयान्तरेषु जगन्नाथः तावता न तुष्यति। स्वाभिप्रायमपि स्पष्टीकरोति। अतः जगन्नाथोऽपि भक्तेः रसत्वम् गूढं अङ्गीकरोति वा? इत्यूहोऽपि दुर्निवारः।

एवं स्थिते भक्तिरसवादिनः आचार्याः भक्तेः रसत्वस्य दुरपह्नवत्वं व्याख्यातवन्तः, मम्मटादेः मतं निराकुर्वन्तश्च स्वसिद्धान्तं निरूपितन्तः।

रूपगोस्वामिमधुसूदनसरस्वत्यादयस्तु भक्तिं रसमेव मन्यन्ते। रूपगोस्वामी चैतन्यमतानुयायी श्रीकृष्णभक्तः। मधुसूदनः चैतन्यसम्प्रदायवादीति वक्तुं यद्यपि न पार्यते। तथाऽपि गोस्वामीव अयमपि कृष्णभक्तः। यतश्च द्वाविमौ कृष्णभक्तिमेव रसं निरूपयामासतुः।

रूपगोस्वामिनः उज्ज्वलनीलमणिः, भक्तिःरसामृतसिन्धुश्च प्रसिद्धौ रसविचारकग्रन्थौ, मधुसूदनस्य भगवद्भक्तिरसायनं भक्तेः वैशिष्ट्यम्, रसत्वञ्च प्रकटयामास।

मधुसूदनमतस्यायं सङ्क्षेपः –

"देवादिविषया रतिः व्यञ्जनाव्यापारगम्या,
व्यभिचारिभावश्च, भावध्वनेर्विषयः, न रसध्वनि विषयः" इति यदाहुः –

तन्न सम्यक्। नारायणभिन्नेषु(देवेषु) जीवमात्रत्वात् परानन्दस्य अप्रकाशनात् तत् योज्यम्। परमानन्दरूपे नारायणे ईदृग्वचः न सङ्गतम्। कान्तादि विषयकरतौ, भगवद्विषयक रताविव परिपूर्णसुखस्पर्शित्वाभावात्, कान्ताविषयकरतावेव रसत्वस्य असिद्धिः। पर्यनुयोगोऽपि कर्तुं शक्यते। रतिहासादि भावेषु सत्स्वपि तेषां मध्ये वर्तमाना भगवद्भक्तिः खद्योतानां मध्ये आदित्य इव भावान्तराणि तिरोधत्ते[2]।

रत्यादीनां नवानां प्रत्यक्षानुभवमात्रप्रमाणेन रसत्वं यैरभ्युगम्यते न तेषां वादः विचारसहिष्णुः। अस्तु वा प्रत्यक्षानुभवप्रमाणमात्रेण भावानां रसत्वम्। एवमभ्युपगतेऽपि भक्तिभावे भावान्तरेभ्यः सहस्रगुणः प्रत्यक्षानुभववेद्यः आनन्दः लभ्यते। अतः भक्तेः रसत्वम्।

---

[1] रसगङ्गाधरम् - ----- 201,203 पृष्ठाः

[2] रतिर्देवादिविषया व्यभिचारी तथोर्जितः। भावः प्रोक्तः रसो नेति यदुक्तं रसकोविदैः।।
देवान्तरेषु जीवत्वात् परानन्दाप्रकाशनात्। तद्योज्यम् न परानन्दूपे च परमात्मनि।।
कान्तादिविषया वा ये रसाद्यास्तत्र नेदृशम्। रसत्वं पुष्यते पूर्णसुखास्पर्शित्वकारणात्।।
परिपूर्णरसा क्षुद्ररसेभ्यो भगवद्रतिः। खद्योतेभ्यो इवादित्यप्रभेव बलवत्तरा।।
क्रोधशोकभयादीनां साक्षात्सुखविरोधिनाम्। रसत्वमभ्युपगतम् तथानुभवमात्रतः।।
इहानुभवसिद्धेऽपि सहस्रगुणितो रसः। जडेनेव त्वया कस्मादकस्मादपलभ्यते।।
भगवद्भक्तिरसायनम् - 2- 75 प्रभृति 80 पर्यन्तम्.

**भक्तेः मूलरसत्वकल्पनम्** –

"न हि रसादृते कश्चिदर्थः प्रवर्तते" इति वदन्तः भरताचार्याः सर्वस्याप्यर्थस्य काव्ये रसजन्यतां प्रतिपादितवन्तः. तत्र रसशब्दस्य एकवचनेन ग्रहणात् मूलभूतः अखण्डः कश्चिद्रसो ग्राह्यः। काव्ये वर्तमानानि रसान्तराणि तस्यैव पुनः भागदृशा ज्ञेयानीति तत्रैव सन्दर्भे व्याख्याने अभिनवगुप्ताश्च रसस्यैकत्वमेव व्याख्यातवन्तः। मूलरससिद्धान्तस्य प्रतिपादकाः कारिकाश्च प्रमाणतया दर्शिताश्च।

"आस्वादाङ्कुर कन्दोऽस्ति धर्मः कश्चन चेतसः।
रजस्तमोभ्यां हीनस्य शुद्धसत्वतया सतः।
स स्थायी कथ्यते विज्ञैर्विभावस्य पृथक्तया
पृथग्विधत्वं यात्येष सामाजिकतया सताम्।।"

तत्र भक्तिरेव मूलरसः इति वादिनां आचार्याणामभिप्रायः – रसो वै सः इत्यादि श्रुतिस्वारस्यस्य, भरतादि मुनिवचनानाञ्च समन्वये भक्तेरेव रसत्वं सिध्यति। यतः आनन्दकारणत्वम् रसत्वम्। भगवानेव शाश्वतलोकोत्तराह्लादकारी। तद्गताः रत्यादीनां नश्वरत्वेन स्थायित्वाभावात् रसत्वं न घटते। परमानन्दरूपस्य भगवतस्सम्बन्धेन भक्तिरेव मूलरसः। तद्योगात् भावान्तराणामपि रसत्वं सङ्गतम्। एषोप्यर्थः "नवरसमिलितं वा....." इति वदतां मधसूदनसरस्वत्यादीनामपि सम्मतम्[1]।

**भक्तिसम्प्रदायाः** –

वैष्णवभक्तिसम्प्रदायानां मध्ये बहवः सम्प्रदायः, तत्प्रवर्तकाः आचार्याश्च श्रीकृष्णबिहारिमिश्रैः स्वशोधप्रबन्धे विस्तरेणोपनिबद्धाः। तत्र वैष्णवानां श्रीसम्प्रदायः, रामानन्दसम्प्रदायः, गौडीयसम्प्रदायश्च विस्तरेणोपवर्णिताः। एष्वपि सम्प्रदायेषु गौडीयसम्प्रदायः इतरेभ्यः रसाधिगमे महत् स्थानं प्राप्नोति। गौडीयाचार्याणां सम्प्रदायस्य मूलाधारः श्रीमद्भागवतम्। भगवान् चैतन्यानन्दः अस्य सिद्धान्तस्य प्रवर्तकः। राधाकृष्णयोः, रसभक्तेः श्रेष्ठत्वं चैतन्येन उपपादि। भक्तिरसामृतसिन्धोः कर्ता रूपगोस्वामी चैतन्यस्यैव शिष्यः। एषा गौडीया भक्तिः[2] मधुरभक्तिरिति, श्रृङ्गारसंसर्गेण नामान्तरमवाप।

भक्तिरसायनम् परिमाणेन अत्यन्तं अल्पीयः। तत्र रसोत्पत्तिः एवं प्रतिपादिता –

"प्रथमं महतां सेवा, तद्दयापात्रता ततः।

श्रद्धा च तेषां धर्मेषु ततो हरिगुणश्रुतिः।।

ततो रत्यङ्कुरोत्पत्तिः स्वरूपादिगतिस्ततः।

प्रेमवृद्धिः परानन्दे तस्याऽथ स्फुरणम् ततः।।

---

1 भक्तेः मूलरसत्वविवेचनम् - सर्वमपि श्रीकृष्णविहारीमिश्रस्य भक्तिरसविवेचनग्रन्थात् गृहीतम्। विस्तरस्तु तत्रैव द्रष्टव्यम् - 65,66 पृष्ठौ।

2 रससम्प्रदायानां विस्तरः, गौडीय भक्तेः विस्तरश्च "संस्कृतकाव्यशास्त्रे भक्तिरसविवेचनम्" इत्यत्र द्रष्टव्यः। (72) ---- पर्यन्तम्, 124, 125 पृष्ठयोः।

भगवद्धर्मनिष्ठातः स्वस्मिन् तद्गुणशालिता।

प्रेम्णोऽथ परमा काष्ठेत्युदिता भक्ति भूमिका।।"[1]

एवं विधायाः भक्तेः सा धारणतया सिद्धं रसत्वम्। सा च भक्तिः क्वचिद्रसान्तरैः सङ्कीर्णाऽपि भवति। पृथक् स्थितायां, रसान्तरसङ्कीर्णायां वा भगवद्रतौ परमानन्दसंवेदनमेव प्रयोजनमिति मधुसूदनः –

"नवरसमिलितं वा केवलं वा पुमर्थम्

परममिह मुकुन्दे भक्तियोगं वदन्ति।

निरूपमसुखसंविद्रूपमस्पृष्टदुःखम्

तमहमखिलतुष्ट्यै शास्त्रदृष्ट्या व्यनज्मि।।"[2]

"स्थायिप्राप्त आनन्द एव रसः" इति पक्षेऽपि भज्यते, सेव्यते, भगवदाकारमन्तःकरणं क्रियतेऽनया इति भक्तिः इति विग्रहेण भक्तेः रसत्वमुपपादितम् तत्रैव व्याख्यातृभिः। स्थायिभाव एव रसः इति पक्षे भजनमन्तःकरणस्य भगवदाकारतारूपम् इति च।

एवं विधस्य रतिभावस्य रसत्वप्रतिपादिका सामग्री च दर्शिता रूपगोस्वामिना –

"अथास्याः केशवरतेर्लक्षिताया निगद्यते।

सामग्री परिपोषेण परमा रसरूपता।।

विभावैरनुभावैश्च सात्विकैर्व्यभिचारिभिः।

स्वाद्यत्वं हृदि भक्तानां आनीता श्रवणादिभिः।।

एषा कृष्णरतिस्स्थायी भावो भक्तिरसो भवेत्[3]।"

एवं समग्रतया भक्तेः रसत्वे स्थापिते मम्मटादीनामुक्तिः परास्ता।

रसानन्दः ब्रह्मानन्दास्वाद सविधवर्तीत्युच्यते। भक्त्युद्भवस्त्वानन्दः साक्षात् ब्रह्मानन्द एव। अतः भक्तिर्नरसः इति वदतां मम्मटादीनामभिप्रायः एवं स्यात्-

विभवादि जन्य साधारणीकरणव्यापारेण रसान्तरास्वादे सहृदयस्यानन्दः जायते। भक्तिस्तु अलौकिक भगवदालम्बना। अतः रसान्तरेभ्यः तस्याः प्राशस्त्यमपि परोक्षरूपतया अङ्गीकृतं स्यात्। यतस्ते मम्मटादयः ज्ञानिनः भक्ताश्च।

'रस्यते' इति व्युत्पत्या भावादीनामपि परिग्रहात् भावध्वनिरपि रसध्वनेः न न्यूनतरः। मधुसूदनादीनां मते साक्षाद्भक्तिः रसशब्दवाच्यः। मम्मटादीनां मते आनन्द दायकत्वेन

[1] भगवद्भक्तिरसायनम् - 1 -32 प्रभृति 34 पर्यन्तम्

[2] पूर्वत्र - 1 - 13

[3] श्री भक्तिरसायनसिन्धु - दक्षिणविभागः - 1 - 4,5

रसतया योज्य इति मतद्वयेऽपि न किञ्चित् परिहीयते। भगवद्विषयकशेमुषीरूपा भक्तिः सर्वैः प्रार्थनीया –

"निखिलभुवन जन्मस्थेम भङ्गादिलीले,

प्रणतनिखिल भूतव्रातरक्षैकदीक्षे।

श्रुतिसरसि विदीप्ते ब्रह्मणि श्रीनिवासे

भवतु मम परस्मिन् शेमुषी भक्तिरूपा।।[1]"

वस्तुतस्तु – यद्यपि मम्मटादीनां दृष्टौ भगवद्विषयकरतेः विद्युद्द्योतप्रायत्वात् (भावत्वात् अस्थायित्वादित्यर्थः) भक्तेः रसत्वं नास्ति। तथा हि मधुसूदनादिभिः प्रदर्शिताः युक्तीः पुरस्कृत्य, जगन्नाथस्य वाचां भक्तेः रसत्वखण्डनं न कृतमिति तथ्यमपि पुरस्कृत्य, सामान्य जनप्रभृति योगिपर्यन्तानां जनानां स्वानुभवनिवेदनाञ्च पुरस्कृत्य परिशील्यते चेत् – भक्तेः रसत्वम् वारयितुं न शक्तमेवेति प्रतिभाति। अतः शोध प्रबन्धेऽस्मिन् भक्तिं रसत्वेन उररीकृत्यैव उत्तरोत्तरं ग्रन्थो वितन्यते।

**श्रीकृष्णावतारः** –

अव इत्युपसर्गपूर्वक **तृ** –तरणे, (तृञ् – तरणपालनयोः) इति धातोः अण् प्रत्यये अवतरतीति अवतारः इति रूपनिष्पत्तिः। विष्णोः अवतारेषु एष अवतार शब्दः सार्थको भवति। योगिनां, ज्ञानिनां, आर्तानाञ्च स्वभक्तानां मोक्षप्रदानेन दुर्भरं भवं तारयामास भगवान्, अपि च साधूनां परित्राणाय, दुष्कृताम् विनाशाय च युगे युगे भुवमवतरन् साधु परिपालनं कृतवान्।

नारायणस्य एकविंशत्यवताराः भागवते[2] वर्णिताः। परं तु दशैवावताराः भगवतः प्रसिद्धाः।

ते च - "मत्स्यकूर्मवराहाश्च नारसिंहश्च वामनः।

रामो रामश्च रामश्च बुद्धः कलिकिरेव च।।"

इति यद्यपि प्रसिद्धाः, तथाऽपि प्रायशः परशुरामावतारः, बुद्धावतारो वा प्रधानेष्ववतारेषु न परिगण्यन्ते। अपि च विष्णुपारम्यप्रतिपादकेषु श्रीमद्भागवतविष्णुपुराणादि ग्रन्थेषु श्रीकृष्णः साक्षात् नारायण इत्युपवर्णितः। अत्र श्लोके अतिमुख्यस्य कृष्णावतारस्योल्लेखः नास्तीति उपेक्ष्योऽयं श्लोकः। अथवा श्लोकेऽस्मिन् तृतीय रामशब्दस्थाने कदाचित् कृष्णशब्दः आसीत् किं वा? कालान्तरे पाठभेदः संवृत्त इत्यप्यभ्यूहः अप्रस्तुतो न भवति। अतः –

"मत्स्यकूर्मवराहाश्च नारसिंहश्च वामनः।

---

[1] श्री रामानुजकृत श्रीभाष्यम् - 1 श्लो

[2] श्रीमद्भागवतम् - II - 7

रामो रामश्च कृष्णश्च बुद्धः कलिकिरेव च।।"

इति श्लोक एव प्रामाणिकस्सन् अस्माकं पुरतः उपतिष्ठति।

**कृष्णशब्दनिर्वचनम्** -

भगवतः नारायणस्य कृष्णशब्देन, वासुदेवशब्देन च प्रसिद्धः व्यवहारः भागवते, इतरत्र च दृश्यते। एतौ नारायणपर्यायौ।

कर्षति पापानिति कृष्णः। कृष्णवर्णत्वात् वा कृष्णः, सर्वं करोतीति वा कृष्णः। कृष्णशब्दः व्यासे अर्जुने च व्यवह्रियते। व्यासोऽपि नारायणांशसम्भूत एव।

"कृष्णं द्वैपायनं विद्धि साक्षान्नारायणं प्रभुम्।

कोह्यन्यः पुण्डरीकाक्षात् महाभारतकृद्भवेत्।।[1]"

कृष्णशब्दः भारते अर्जुनपर्यायतयाऽपि प्रयुक्तः। कोशेषु च कृष्णशब्दः साक्षान्नारायणपर्यायः दृश्यते।

"विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्ठरश्रवाः[2]। इति। एवं श्रीकृष्णशब्दः यशोदानन्दनः कृष्णद्वैपायनः, अर्जुनः, नारायणः इत्यर्थेषु यद्यपि प्रवर्तते तथाऽपि गृहीत लीलामानुषविग्रहः हरिः वसुदेवनन्दन एव कृष्णः इति प्रकृतग्रन्थे गृह्यते।

"कृषिर्भूवाचकश्शब्दः णश्च निर्वृतिवाचकः

विष्णुस्तद्भावयोगाच्च कृष्णो भवति शाश्वतः।"

भगवतो नारायणस्य वासुदेव, प्रद्युम्नानिरुद्धसङ्कर्षणनामभिः 'चतुरात्मा' इति प्रसिद्धः केवलज्ञानात्मकस्य नारायणस्य वासुदेव इति, सात्विकस्वरूपस्य प्रद्युम्न इति, केवलराजसमूर्तेः अनिरुद्ध इति, तामसरूपस्य सङ्कर्षण इति च व्यवहारः प्रसिद्धः। अत एव नारायणस्य "चतुरात्मा" "चतुर्व्यूह" इति नामद्वयम् प्रसिद्धम्। विष्णुसहस्रनाम भाष्ये शङ्करभगवत्पादैरप्येतदनुगुणमेव व्याख्यातम्।[3]

**कृष्णावतारमहत्वम्** –

रामावतारे, श्रीकृष्णावतारे च भगवान् स्वयमङ्गीकृतमनुष्यरूपः, तेषां मध्ये चचारेति हेतोः ताववतारौ देहिनां प्रीतये भवतः। तस्मिन्नवतारद्वयेऽपि रामादपि श्रीकृष्णस्य बहवः सन्निहिताः आसन्निति हेतोः कृष्णावतारस्य बहुजनाभिनन्दितत्वं सिद्धम्। श्रीरामः यद्यपि भगवत्स्वरूपः तथाऽपि अवतारकाले न कुत्रचिद्दिव्याः लीलाः प्रदर्शितवान्। राक्षससंहारादयः पराक्रमविशेषास्तु रघूणां सर्वसाधारण एव। श्रीरामपूर्वकालिकाः इक्ष्वाकु रघुदशरथप्रभृतयः राक्षससंहारमकुर्वन्।

---

[1] विष्णुपुराणम् - III - 4 - 5

[2] अमरकोशः - I - 1 - 18

[3] विष्णुसहस्रनाम शङ्करभाष्यम् - महाभारतम्

कृष्णस्तु जननात् प्राक्, जननकाले, तदनन्तरञ्च दिव्यलीलाः प्रदर्शितवान्। देवकीवसुदेवयोः स्वजननात्प्रागेव स्वस्वरूपं दर्शयित्वा तयो पूर्वजन्मसंस्कारं उद्बुबोध। जननानन्तरं तेन दर्शिताः विश्वरूपसंदर्शनादयः दिव्यलीलाः असंख्याकं वर्तन्ते।

रामावतारसमयते तस्य श्रीमन्नारायणस्वरूपत्वं विदन्तो जनाः अल्पीयांसः आसन्।

"अहं वेद्मि महात्मानं रामं सत्यपराक्रमम्।

वसिष्ठोऽपि महातेजाः ये चान्ये तपसि स्थिताः।।[1]

इति श्रीमद्रामायणे बालकाण्डे दशरथ सभायां यागरक्षणार्थं रामानयनसमये विश्वामित्रस्योक्तिः। रावणोऽपि अन्तकाले एव रामं नारायणं ज्ञातवान्।

"तं मन्ये राघवं वीरं नारायणमनामयम्।

यस्य विक्रममासाद्य राक्षसा निधनं गताः।।[2] इति।

कृष्णावतारे तु तदमानुषलीलादि विलोकनविस्मिताः तं साक्षान्नारायणमिव विश्वसन्तो जनाः असङ्ख्याका आसन्। किञ्च तत्तदवतारेषु मानुषांशे भगवदंशः प्रतिफलति। यदा यदा भगवदंशस्य आधिक्यं तदा तदा तदवतारस्य प्रामुख्यम्। जगत्प्रसिद्धे रामावतारेऽपि भगवदंशः न पूर्णतया प्रतिफलितः। तदिदम् कृष्णावतारे सम्बभूव।

अस्मिन् ह्यवतारे मानुषांशापेक्षया भगवदंशस्यैवाधिक्यम्। सर्वशेषिणो नारायणस्यांशः परिपूर्णं कृष्णावतारे प्रतिफलतीत्यहो किमु वर्ण्यते कृष्णावतार महिमा।

**कृष्णतत्ववेत्तारः** –

श्रीकृष्णतत्ववेदिनः पुनः भागवते बहवः दृश्यन्ते। तेषु – वृष्णिषु – वसुदेवः, देवकी, यशोदा, अक्रूरः, उद्धवः, इत्यादयः, कंसश्शिशुपालश्य भयात्, द्वेषाच्च मुक्ताविति प्राक् प्रतिपादितम्।

कुरुषु – भीष्मः, विदुरः, कुन्ती, द्रौपदी, उत्तरा, पाण्डवाः, परीक्षित्। अन्ये च कुचेलप्रभृतयः, रुक्मिणी, गोप्यः इत्यादि भागवतोत्तमाः कृष्णतत्वस्य वेत्तारः मानवेषु दृश्यन्ते।

देवयोनिष्वपि विरिञ्चि, महेन्द्र, रुद्रप्रभृतयः, शुक, व्यास, नारदादयः मुनयः भागवते उरुगायस्य नारायणस्य महिमाभिज्ञातारः दृश्यन्ते।

**स्तुतेः लक्षणम् –**

प्राणिभिः सुलभानुष्ठेयायाः भक्तेः बहूनि साधनानि विद्यन्ते। नवविधभक्तिषु श्रवणकीर्तनात्मनिवेदनरूपासु भगवत्स्तुतेः सुमहत् प्राधान्यं वर्तते।

---

[1] श्रीमद्रामायणम् - I - 19- 15

[2] पूर्वत्र - VI - 72 -11

वाङ्मयवृक्षस्य स्तोत्रशाखा सुदीर्घा, सुविशाला च वर्तते। शतरूद्र्यादयः प्रसिद्धाः स्तोत्रपाठाः यजुरादिषु वेदेषु परिदृश्यन्ते। ऋग्वेदस्सर्वोऽपि तत्तद्देवता स्तोत्रात्मक एव। स्तुतिपर्यायाः स्तवः, स्तोत्रम्, स्तवनं इत्यादि सर्वेऽपि ष्टुञ् – स्तुतौ इति धातोरेव निष्पन्नाः। ष्टुञ् – स्तुतौ इति धातो रप् प्रत्यये "स्तव" इति पुंलिङ्गरूपम् स्तुत्यर्थं, प्रशंसार्थञ्च बोधयति। प्रकृष्टेन शंसनम् प्रशंसनम् इति व्युत्पत्या विद्यमान गुणेभ्योऽप्यधिकतया कीर्तनमिति ज्ञायते। लोकेऽपि अयमर्थ एव प्रसिद्धः। स्तवेऽर्थे प्रसिद्धं क्तिन् प्रत्ययान्तं स्तुतिरिति।

स्तोत्राणि बहुविधानि भवन्ति। यथोक्तं निघण्टुकारैः –

"दिव्यस्तोत्रं कर्मस्तोत्रं विधिस्तोत्रं तथैव च।

तथैवाभिजनस्तोत्रं, स्तोत्रमेतच्चतुर्विधम्।।[1]" इति।

चतुर्था स्तुतिविभागो लक्ष्यते। भङ्यन्तरेणापि तल्लक्षणं विलोक्यते-

"नमस्कारः तथाशीश्च सिद्धान्तोक्तिः पराक्रमः।

विभूतिः प्रार्थना चेति षड्विधं स्तोत्रलक्षणम्।।"

इत्यत्र स्तुतिलक्षणेन साकं तत्प्रकारा अपि वर्णिताः।

स्तुतिर्नाम गुणिनिष्ठगुणाभिधानम्। गुणिनमुपसर्जनीकृत्य तन्निष्ठानां गुणानां प्राधान्येन कथनमित्यर्थः। "यो देवदत्तः स चतुर्वेदाभिज्ञः" इत्युक्ते सर्वे जनाः स्तुतिमवगच्छन्ति। यद्यत्र देवदत्तः एकस्मिन् वेदे एव अभिज्ञः चतुर्वेदाभिज्ञः इति कथ्यते तदा तत् प्रशंसनं भवति। किन्तु यथार्थतया सः चतुर्वेदाभिज्ञः भवति चेत् तदा गुणिनिष्ठयथार्थगुणकथनात् तत्स्तुतिरेव नाधिकतया कीर्तनम्। शंसु – स्तुतौ इति धातोः निष्पन्नमपि शस्त्रमिति रूपं अप्रतिगीतमन्त्रसाध्ये ऋग्जातावेव प्रसिद्धम्। न स्तुत्यर्थे। स्तोत्रमिति रूपं तु प्रतिगीत मन्त्रसाध्ये स्तवने, गुणकथने च प्रसिद्धम्।[2]"

****

संस्कृतवाङ्मये भक्तिप्रतिपादकानि अनेकान्याख्यानानि विद्यन्ते। तान्यपि नायकादि माश्रित्य पुराणं-काव्यमितिहासञ्चेति त्रिधा भिद्यन्ते। सृष्टिः सत्वरजस्तमोरूपगुणत्वेन यथा त्रिगुणात्मिका, तथा पुराणवाङ्मयमपि त्रिधा विभक्तम्। विष्णुप्रतिपादकानि सात्विकानि, ब्रह्मप्रतिपादकानि राजसानि, शिवप्रतिपादकानि तामसानीति। संस्कृतवाङ्मये प्रसिद्धेषु ग्रन्थेषु श्रीमद्रामायणम् महाकाव्यम्, श्रीमद्भागवत पुराणम्, श्रीमद्भारतम् इतिहासः। एतानि त्रीण्यपि भगवन्तं, तत्प्राप्त्युपायं, भक्तिञ्च दर्शन्तीति सार्धकानि भवन्ति; विशिष्य श्रीमद्भागवतम्। श्रीमद्रामायणञ्च-

"वेदवेद्ये परे पुंसि जाते दशरथात्मजे।

---

[1] वाचस्पत्यम् - 5341, 5342 पृष्ठौ

[2] पूर्वत्र - 5341, 5342 . ------

वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना।।"

इत्युक्तदिशा विष्णुप्रतिपादकम्।

"भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः।
स हि सत्यं व्रतञ्चैव पवित्रं पुण्यमेव च।।"

इत्यादिना महाभारते अनुक्रमणिकाध्याये प्रतिपादनात् भारतमपि विष्णुप्रतिपादकमेव। श्रीमद्भागवतम् विष्णु प्रतिपादकमिति प्रथमस्कन्धे व्यासनारदसंवादे[1] स्पष्टम्।

एतेष्वपि श्रीमद्रामायणम् करुणरसप्रधानमिति आलङ्कारिकैः प्रतिपादितम्[2]।

मा निषाद ..... इत्यादिनाऽस्य करुणमयत्वं स्पष्टम्।

"महाभारतेऽपि शास्त्ररूपे काव्यच्छायान्वयिनि
वृष्णिपाण्डवविरसावसानवैमनस्यदायिनीं समाप्तिमुपनिबध्नता महामुनिना वैराग्यजननतात्पर्यं प्राधान्येन स्वप्रबन्धस्य दर्शयता मोक्षलक्षण- पुरुषार्थः, शान्तोरसश्च मुख्यतया विवक्षाविषयत्वेन सूचितः।[3]"

श्रीमद्भागवतम् पुनः भक्तिरस प्रधानम्। अत्र नारायणस्य श्रीकृष्णरूपेण जन्मप्रभृति शैशवक्रीडाः विद्याभ्यास, रासक्रीडाः, विवाहाः, असुरवधादयः इत्येताः आश्चर्यकराः भगवल्लीलाः वर्णिता इति सगुणरूपस्य भगवतः प्रतिपादनात् भगवद्रतेरेव प्राधान्यम्। सा च रतिः उद्दीपनविभावानुभावसञ्चारिभावादिभिः पुष्टिं नीतेति हेतोः श्रीमद्भागवते भक्तिरेव रसः। स च रसः तत्तद्भक्तैः कृतेषु श्रीकृष्णस्तोत्रेष्वभिव्यज्यते, अनुभूयते सर्वैः। श्रीमद्भागवत पुराणे एवंविधाः श्रीकृष्णस्तुतयः माल्ये पुष्पाणीव सङ्ग्रथिताः। आसु स्तुतिषु सर्वत्र भगवान् श्रीकृष्ण एव भक्तजनाश्रयायाः रतेरालम्बनम्। हर्षरोमाञ्चादयः दैन्यचिन्तामोहादयश्च भगवद्रतिं भक्तिरूपेण परिणमयन्ति। इदं सर्व स्तुतीनां साधारणमिति स्तुतीनां सर्वासां एकवाक्यता।

महाकाव्येषु यथा आलम्बनोद्दीपनसञ्चारिभावाः महाकविभिरूपनिबध्यन्ते तद्वदेव महायोगिना व्यासेनापि साङ्गोपाङ्गं सर्वाऽपि रससामग्री तत्तत् स्तोत्रसन्निधौ पठिता।

श्रीकृष्णालम्बनस्य, श्रीकृष्णरतिस्थायिकस्य, तद्दर्शन, तन्माहात्म्यश्रवणाद्युद्दीपनकस्य, दैत्य, मोहचिन्तादि सञ्चारिणः, अश्रुरोमाञ्चाद्यनुभावकस्य, भक्तिरसस्याभिव्यक्तिहेतवः श्रीकृष्णस्तुतयस्सर्वा अपि श्रीमद्भागवतपुराणान्तर्गताः संगृह्य, अनुशील्य प्रस्तुताः अस्मिन् शोधप्रबन्धे सहृदयहृदयामोदाय।

---

[1] श्रीमद्भागवतम् - । - 5 - प्रभृति 22 पर्यन्तम्।

[2] "रामायणे हि करुणो रसः स्वयमादिकविना सूत्रितः। श्लोकत्वमागतः" इत्येवं वादिना निर्व्यूढश्च स एव सीतात्यन्तवियोगपर्यन्तमेव स्वप्रबन्धमुपरचयता ... "

ध्वन्यालोकः - चतुर्थ उद्योदः।

[3] ध्वन्यालोकः ।V- 1336 पृष्टः

स्तुतीनां स्वभावं आर्तो जिज्ञासुरर्थार्थी... इत्यादिना पुरस्कृत्य विभागशः[1] कृत्वा षट्सु अध्यायेषु कूलङ्कषं विचार्य तत्सारार्थः उन्नीय सहृदयानां करकमलयोरर्प्यते। उपोद्घातानन्तरं शोधप्रबन्धे अस्मिन् षडध्यायास्सन्ति। एषु स्तुतयःसंशोधनदृष्ट्या अनुशील्य प्रदर्शिताः। येषामन्ते तन्निष्कर्षः उपसंहारे उपस्तुतः। तावता शोधप्रबन्धस्समाप्यते। पठितृणां सौकर्याय शोधप्रबन्धस्यास्यावसाने शोधप्रबन्धे विषयभूतानां स्तुतिश्लोकानां मूलपाठः दत्तः। अत्र हि आहत्य '51'श्रीकृष्णस्तुतयस्सन्ति।

तदनु उपयुक्तग्रन्थानां सूची उपनिबद्धा। इत्थं साङ्गोपाङ्गं संशोध्य सज्जीकृतोऽयं प्रबन्धः विपश्चिज्जनवरेण्यानां करकमलालङ्कारो भवतु।

***************

[1] एतद्विस्तरः उपसंहारे द्रष्टव्यः।

## प्रथमोऽध्यायः

### अर्जुनः

अश्वत्थाम्ना प्रयुक्तेण ब्रह्मास्त्रेण प्राणापदमभिवीक्ष्य तन्निवारणेऽशक्तः अर्जुनः तत्सन्दर्भे कृष्णं स्तौति। प्रथमस्कन्धे सप्तमेऽध्याये स्थितं अवताररहस्यव्यञ्जकमेतदाद्यं स्तोत्रं श्रीकृष्णस्य। कृष्णसखः अर्जुनः आर्तस्सन् एतत्सोत्रं चकार। न मैत्री भावेनेति विशेषः। विश्वरूपसन्दर्शनात् श्रीकृष्णं परमात्मानं देवदेवञ्च ज्ञात्वा अर्जुनः तद् ज्ञानानुभावेनैव एवं स्तोत्रमकरोत्।

*हे कृष्ण! त्वमेव भक्तानामार्तिनाशकः। अभय प्रदाता मोक्षदश्च[1]।

श्रीकृष्णस्य शारीरकान्तरङ्गिकगुणवर्णनम् प्रथमश्लोके कृतम्। "कृष्णकृष्ण" इति पदेन कृष्णस्य शरीरश्यामवर्णत्वमभिवर्णितम्। 'महाबाहो' इतिविशेषणम् शारीरकवर्णने, 'महाभाग' इति पाठान्तरे तु तत्पदं श्रीकृष्णस्य आन्तरगुणवर्णने प्रयुक्तम्।

"कृष्णकृष्ण!" इति द्विरुक्तिः सम्भ्रमे, प्रवृत्तिनिमित्ते च प्रयुक्तम्। अपि च सदानन्दपरत्वं, प्रपन्नापन्नाशकत्वं द्योतयति।

"कृषिर्भूवाचकश्शब्दः णश्च निर्वृतिवाचकः।
विष्णुस्तद्भावयोगाच्च कृष्णो भवति शाश्वतः।।"[2]

इति श्लोकः कृष्णस्य सर्वलोकसुखावहत्वं, शाश्वतत्वं स्पष्टयति। भावमेतन्मनसि निधाय अर्जुनः प्रथमं कृष्णशब्दं प्रयुयोज। न तु साधारणनामवाचकत्वेन।

"कृषिर्भूवाचकश्शब्दः णश्च निर्वृत्तिवाचकः।
तयोरैक्यं परब्रह्म; कृष्ण इत्यभिधीयते।।[3]"

इति श्लोकात् कृष्णस्य परब्रह्मत्वं स्पष्टम्।

महान्तः बाहवः यस्य सः महाबाहुः इति व्युत्पत्तिः। महान्तः इन्द्रादयः यस्य श्रीकृष्णस्य बाहवः तादृशकृष्णस्य, क्रियाशक्तेराधिक्यं, पालकत्वं 'महाबाहु' शब्देन ध्वन्यते। "बाहू राजन्यः कृतः[4]" इत्युक्तरीत्या 'राजन्य कुलप्रभव बाहो' इति चाप्यर्थः सूच्यते।

'महाभाग' इति पाठान्तरे तु मह्यन्ते पूज्यन्ते सर्वैरिति। महान्तः इन्द्रादयः तैः भज्यते इति महाभागः। नाममात्रेणाहमपि कृष्णः। न तु महाभाग इति अर्जुनस्याभिप्रायः।

---

[1] । - 7 -22 प्रभृति 25 पर्यन्तम्

[2] विष्णुसहस्रनामशाङ्करभाष्यम् - 90पृष्टम्।

[3] महाभारतम् - उद्योगपर्वः - 70 -5

[4] पुरुषसूक्तम् - । - 5

"त्वं सामान्यतः सर्वेषां पालकः, विशेषतः भक्तानां रक्षकः"। 'अभयङ्कर' शब्देन कृष्णः भक्तभिन्नानां जनानां भये परिपालनं करोति। भक्तानां तु अभयमेवोपस्थापयति। भयस्थितिरपि तेषां नागच्छति।[1]"

"न वासुदेवभक्तानामशुभं विद्यते क्वचित्।

जन्ममृत्यु जराव्याधि भयं नैवोपजायते।।[2]"

इति महाभारतश्लोकमपि कृष्णस्याभयङ्करत्वमेव दृढयति। संसाररूप भयविमोचकत्वमपि "अभयङ्कर" शब्देन सूच्यते।

"त्वमेको दहयमानानामपवर्गोऽसि संसृतेः" इति वाक्ये एकशब्दः अन्यदेवव्यवच्छेदकः। मोक्षप्रदाने त्वमेव समर्थ इत्यर्थं व्यञ्जयति।

संसारदाहः इतरदाहेभ्यः दारुणः। तादृशसंसारदाहाद्विमोचकस्य भवतः ईदृशास्त्रविमोचने किं प्रयासः? इति अर्जुनस्य भावः। अत्र अर्थापत्तिरलङ्कारः[3] ध्वन्यते।

"आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन।

मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते।।[4]"

इति श्रीकृष्णोक्तं वाक्यं स्मारयन्नर्जुनः मोक्षप्रदातृत्वं श्रीकृष्णस्य निर्द्वन्द्वं वक्ति 'त्वमेक' इति पदेन। अपवर्गोऽसि इति पदेन त्वं न केवलं मोक्षस्वरूप एव अपि तु मोक्षदाता।

प्रथमश्लोककथित 'अपवर्गोऽसि ' इति पद प्रतिपादितपरब्रह्मस्वरूपस्य विवरणं कृतम् द्वितीयश्लोके "त्वमाद्यः पुरुषः" इति।

"*हे कृष्ण! त्वमेवाद्यः निखिलजगत्कारणत्वेनावस्थितः परः पुरुषः।"

पुरुषशब्दः लोके दृश्यमानकरचरणाद्यवयव संस्थितस्य पुंलिङ्गरूपस्यार्थे न प्रयुक्तः। -

"सर्वान् पाप्मनः औषत् (अदहत्) तस्मात् पुरुषः[5]। इति श्रुतिप्रतिपादितार्थे सर्वपापविध्वंसकसमर्थस्य पुरुषशब्दवाच्यार्ह परब्रह्मेत्यर्थे प्रयुक्तम्।

"पुरु – बहु सरन्तीति वा पुरुषः" इति व्युत्पत्या विष्णोः सर्वान्तर्यामित्वं ज्ञायते।

"पूः संज्ञो वै शरीरेऽस्मिन् शयनात्पुरुषो हरिः।[6]"

---

1 सुबोधिनी व्याख्या - 354 पृष्टम्

2 महाभारतम् - आनुशासनिक पर्वः

3 "कैमुत्येनार्थसंसिद्धि रर्थापत्तिरितीष्यते" कुवलयानन्दम् - 193 पृष्टम्।

4 भगवद्गीता - VIII -16

5 बृहदारण्यकोपनिषत् - I - 4-1

6 (वीरराघवीय व्याख्या) भागवत चन्द्रिका - I - 7 - 23,

इति निरुक्तेन सर्वान्तरात्मत्वं, सर्वाधारत्वञ्च कृष्णे अस्तीति फलितोऽर्थः।

लोकसामान्येश्वरत्वं व्यावर्तयितुं 'साक्षात्' इति 'आद्य' इति च प्रयुक्तम्। परम्परया कालकर्मादयोऽपि नियन्तारो भवन्तीति, तन्निवारणाय 'साक्षादीश्वर' इत्युक्तम्। कर्मजाः, कालजाः, स्वभावजाः, पापोद्भावाः, देशोद्भवाः इति पञ्चदोषाः साक्षादीश्वर इत्युक्तत्वात् निरस्ताः।

"सत्वरजस्तमोरूपप्रकृतेः परः – उत्कृष्टः, अतीतः, निर्गुणः भगवान्"।

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।

अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा।।

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परां।

जीवभूतां महाबाहो ययेदं धार्यते जगत्[1]"।।

इति भगवदुक्तिं स्मृत्वैव अर्जुनः "प्रकृतेः पर" इति परापरप्रकृतेः उत्कृष्ट इति कृष्णं स्तौति।

प्रकृतेः माया, अविद्या इति च व्यवहारोऽस्ति। प्रकृतिगतधर्मास्पृष्टत्वं "प्रकृतेः पर" इति शब्देन सूच्यते। विद्याऽविद्यारूपां वृत्तिद्वयात्मिकां दुर्भगां मायां स्वशक्त्या तिरस्कर्तुं त्वमेव समर्थ इत्यभिप्रायः।

"परास्य शक्तिः बहुधैव श्रूयते।

स्वाभाविकी ज्ञानवलक्रिया च[2]"।।

इति श्रुत्या चिच्छक्त्या अभिन्नः परमात्मा अस्वरूपां मायां दूरीकरोति। अनेन "मायैव शक्तिरेका नान्या" इति मतं परास्तम्।

अव्यभिचारिण्या स्वरूपशक्त्या तदाभासरूपामविद्यां तिरस्करोति परमात्मा। मायां दूरीकृत्यापि मायया सहित एव स आत्मनि चिन्मये स्वरूपे स्थितः।

"परावराणां परम आस्ते कैवल्यसंज्ञितः।

केवलानुभवानन्दसन्देहो निरुपाधिकः[3]"।।

इत्युक्तरीत्या केवलानुभवानन्दे स्वरूपे स्थितः अनुभूतस्वरूपसुखः। इदमेव - "स्वयमुपलब्धनिजसुखानुभवो भवान्" इत्यादि वचनैः देवैरपि प्रतिपादितम् षष्टस्कन्धे।

---

[1] भगवद्गीता - VII- 4,5

[2] श्वेताश्वतरोपनिषत् - VI -8

[3] श्रीमद्भागवतम् - XI -9-18

कैवल्यं नाम मोक्षः।

"मोक्षः परं पदं लिङ्गम् अमृतं विष्णुमन्दिरम्[1]"।

इति पद्मोत्तरखण्डे उक्तत्वात् श्री वैकुण्ठरूपे कैवल्ये स्वस्वरूपेण परब्रह्म श्रीकृष्ण एवेति अर्जुनस्याभिप्रायः।

जीवः मायासङ्कुचितज्ञानत्वात् देह एवात्मा इति भ्रान्त्या देहधर्मानात्मनि अधिष्ठापयति। ईश्वरस्तु स्वशक्त्या मायां तिरस्कृत्य मायामोहितचेतसः जीवस्य धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयरूपं श्रेयः प्रयच्छति।

"आद्यः पुरुषः – पुरुषशब्दाभिलप्यानाम् ब्रह्मरुद्रेन्द्रादीनां कारणभूतः। तेषामपि पुरुषत्वसम्पादकः साक्षादीश्वरः। अन्येषामीश्वरत्वं त्वदायत्तमिति भावः। निखिलप्रपञ्चोपादान भूताया अपि प्रकृतेरधिष्ठातृत्वेन प्रकृतेः पर इत्युक्तम्। परः तत्कार्यनिर्वाहकः चिच्छक्त्या स्वीयस्वयम्प्रकाशकत्ववैभवेन मायां व्युदस्य (प्रकृतिं तिरस्कृत्य) कैवल्ये आत्मनि स्थितः। नित्यमुक्त स्वरूपानन्दे स्थितः। स्वात्मन्येव रत इत्यर्थः[2]"।

*भूभारापनयनमेव मुख्यं तवावतार प्रयोजनम्। न केवलं सर्वजनविनाशकत्वं किन्तु अधार्मिकाणां भुवो भारभूतानां संहारेच्छया त्वमवतरसि। स्वकीयानां अनन्यभक्तानां अनन्यप्रयोजन भक्तियोगनिष्ठानां निरन्तरानुध्यानार्थञ्च त्वं भूमाववतरसि*।

"उपासकानां कार्यार्थे ब्रह्मणो रूपकल्पना[3]"।

इत्यादिना तवावतारं युष्मद्भक्तानामार्तिहरणकारणं भवति।

"अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।

तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्[4]"।।

इति हि कृष्णप्रतिज्ञा। अनन्यभक्तानां योगक्षेमादिकं स एव वहतीति भावनया अर्जुनः स्तोत्रेऽस्मिन् स्वार्तिहरणव्याजेन कृष्णस्य पारमात्मिकस्वरूपं अभ्यवर्णयत्।

श्लोक चतुष्टयात्मकं स्तोत्रमिदम् चतुर्विधपरुषार्थसिद्धिं व्यञ्जयति। चतुर्विधपुरुषार्थसिद्यर्थं चतुर्भिश्शोकैः कृष्णस्वरूपं चतुर्भुजं विष्णुं चतुरोऽर्जुनः तुष्टावेति विशेषः। अपवर्गः फलप्राप्तिः, मोक्षश्च। ज्ञानार्जुनस्य मोक्षप्राप्तिरेव फलम्। अतः अपवर्गपदेन

---

[1] पद्मपुराणम् -

[2] भगावतचन्द्रिका - । - 7-24

[3] वाक्यपदीयम् -

[4] भगवद्गीता - IX - 22

धर्मादिलक्षणं श्रेयः विधत्से इत्यनेन धर्मः। धर्मानुविद्धः कामः धर्माङ्ग एवेति प्रतिपाद्याऽपि मायामोहितचेतसः, इति वर्णनात् कामः प्रतिपादितः। तथाऽपि लोकयात्रायै कञ्चित्कालं काममास्थितानां स्वभक्तानां धर्ममार्गस्य दर्शयिता भगवानिति मोहितचेतसामिति पदेन सूचितः। "स्वानाञ्चानन्य भावानामनुध्यानये"त्युक्तेः यथावसरमर्थप्रदातृत्वञ्च भगवतः प्रतिपादितम्।

अत्र भयत्रातृत्वेनवृतः भगवानालम्बनम्। अर्जुनः अनन्यगतिकः इति हेतोः भयस्य न उद्दीपकत्वं अपि तु प्रधानरसाङ्गत्वमेवोचितम्। यद्वा तात्कालिकः त्रासोऽपि उद्दीपनं भवितुमर्हति। भयस्य सर्वप्राणिसाधारणत्वात्। कृष्णः भयं निवारयतीति भाव एव धृतिः। अस्त्रविद्रावितत्वात् किमिदं मां करिष्यतीति शङ्कादैन्यञ्च, ताभ्यां त्रासस्सञ्चारिणः इति भक्तिरसपरिपोषः कृतः।

**अर्जुनः**

अर्जुनः श्रीकृष्णेन सह द्वारकां गत्वा तत्र कतिचिन्मासानुषित्वा कृष्णाज्ञया पुनरिन्द्रप्रस्थं प्रस्थितः। अत्रान्तरे एव कृष्णः भूलोकाद्वैकुण्ठं जिगमिषुः भौतिकं देहं विससर्ज। इन्द्रप्रस्थं प्रतिनिवृत्तमर्रजुनम् विषण्णं प्रेक्ष्य अज्ञातवृत्तान्तः युधिष्ठिरः विषादस्य कारणमपृच्छत्। प्रयाणकाले बलात् रुद्धः शोकः अतिवेलमर्जुनात् बहिः निश्चक्राम। तस्मिन् शोके अर्जुनः श्रीकृष्णेन कृतानुपकारान् स्मरन् एवं बहुधा शुशोच। -

*[1]महाराज! बन्धुछद्मना मामाद्दतवता हरिणा अहं प्रतारितः। यतश्च एतावत्पर्यन्तम् कृष्णेन मे संयोगः शाश्वतिक इति भ्रान्त्या अहमासम्। ताद्दशो मे विश्वासः हरेश्चिरवियोगेन हरिणैव घातितः।

श्लोकेऽत्र 'वञ्चित' इति पदं सर्वथा नष्टोऽस्मि इत्यस्मिन्नर्थे उपचरितम्।

*श्रीकृष्णवियोगेन सर्वोऽपि लोकः शून्य इव मे प्रतिभाति।

*श्रीकृष्णसहायेनाधिगतान् विजयान् चिन्तयित्वा पुनश्शोचति –

*अहं श्रीकृष्णप्रसादादेव पाञ्चालेषु मत्स्ययन्त्रं भित्वा द्रौपदी विजितवान्।

*तस्यैव सहायेन सुरेन्द्रमपिविजित्य अग्निना खाण्डवमदाहयम्[2]। कृष्णस्यैव प्रसादेन अस्माभिर्मयसभा लब्धा। त्वं राजसूयेनेष्टवान्। नृपतयः अस्माभिर्विजिता बभूवुः। राजसूयनिर्वाहोऽपि श्री कृष्णस्यैव प्रभावातिशयेन शक्य आसीत्। कृष्णाऽपि सभायां दुश्शासनेन परिभूता, हरिणैव मानभङ्गाद्राक्षिता। इदानीं दुश्शासनादीनां स्त्रियः विधवाः विकीर्णकेशाः रुदन्तीत्यत्र कृष्णकृपैव कारणम्।

एकदा दुर्योधनेन पूजितः दुर्वासो मुनिः तस्य वाञ्छितमनुगृह्णामीति दुर्योधनमनुजग्राह। तदा धूर्तः दुर्योधनः पाण्डवावमानार्थं दुर्वाससं "पाण्डवानामप्यतिथिर्भवे"ति प्रार्थयामास। युधिष्ठिराय सूर्यदत्तमक्षयपात्रं एकस्मिन् दिने एकदैव पर्याप्तमन्नं ददाति।

एकदा तत्पात्रोपयोगानन्तरं दुर्वासाः युधिष्ठिरसमीपं आतिथ्यार्थं शिष्यैस्सह आजगाम। द्रौपद्या प्रार्थित श्रीकृष्ण पात्रे परिशिष्टान्यन्नकणानि भुक्त्वा तुष्टो बभूव। तुष्टे परमात्मनि भुक्तायासः दुर्वाससा शिष्यैश्चानुभूतः[3]।

---

[1] । - 15 - 5 प्रभृति 28 पर्यन्तम्

[2] महाभारतम् - आदिपर्वम्

[3] एषा कथा प्र्तुतमुपलभ्यमानेषु भारतप्रतिषु केषुचित्स्वेव दृश्यते। यथा चित्रशाला प्रेस्, पूना, इत्यनेन मुद्रिते नीलकण्ठीय व्याख्या सहिते ग्रन्थे।

*दुर्वासमुनेरागमनसमये वयं कृष्णेन दुर्वाससश्शापात् रक्षिताः। अहम् हरेः कृपयैव पशुपतिं प्रसाद्य पाशुपतं प्राप्तोऽस्मि। निवातकवचादींश्च अहनम्। हरेः कृपयैव उत्तरगोग्रहण समये अहमेक एव दुर्योधनादीन् विजित्य तेषां शिरोभ्यः मणिमयं तेजः अहरम्। भारतयुद्धे चमूषु सारथि रूपेण चरन् मम मनोबलम्[1],शरीरबलम्[2], शस्त्रास्त्रकोशलम् अनुगृहीतवान्।

अनन्तर श्लोकेषु रथचोदनकर्मणि नियोजितमात्मानं निन्दति। ततः श्रीकृष्णस्य स्मितपूर्वभाषणं स्मरति।

*इदानीमपि (कृष्णवियोगात्पूर्वं ये वर्तन्ते) तदेव धनुः, ते एव शराः स एव रथः, तथाऽपि कृष्णाभावादहं निर्वीर्यः। सर्वोऽपि मे विभवः कृष्णायत्त इति दृढा भक्तिः।

एवं यदुवंशक्षयम्, श्रीकृष्णनिर्याणञ्च निवेद्य पुनः स्मृतगीतावाक्यः अर्जुनः शोकात् शान्तिमवाप। निर्वृतावपि स्वयं कारणमाह –

"देशार्थकालयुक्तानि हृत्तापोपशमानि च।

हरन्ति स्मरतः चित्तं गोविन्दाभिमतानि मे[1]।।"

एषाऽपि कृष्णस्तुतिरेवष कृष्णकृतानुपकारान् स्मरतीति नात्र स्तुतिरिति वक्तुमवकाशः। तथाऽपि समनन्तरमेव भगवता व्यासेन एषा स्तुतिरिति स्वयं निर्दिष्टञ्च।

"एवं चिन्तयतो विष्णोः कृष्णपादसरोरुहम्।

सौहार्देनातिगादेन शान्तासीद्विमला मतिः[2]।।" इति।

अत्र भगवानालम्बनम्। कृष्णगता रतिः स्थायी। श्रीकृष्णवियोगः उद्दीपनम्। एतद्वौ भावौ शोकमपि उद्दीपयतः करुणरसस्यापि पोषकौ भवतः इति वक्तुं शक्यते। तथाऽपि शोकोऽपि भगवद्रतिजात एवेति भक्तेरेव प्राधान्यम्। अभक्तानां तथाविथ शोकस्यासम्भवात्। शोकोऽपि भक्तिमवगमयति।

"स्वजनस्य हि दुःखमग्रतो

विवृतद्वारिमिवोपजायते[3]"।

"अतिक्रान्तान्यपि सङ्कीर्त्यमाणानि अनुभवसमां

वदनामुपजनयन्ति सुहृज्जनस्य दुःखानि[4]।।"

---

[1] श्रीमद्भागवतम् - । - 15 -27

[2] पूर्वत्र - । -15 -28

[3] कुमारसम्भवम् - IV 26

[4] कादम्बरी - 162 पृष्टः

इत्यादि लोकनयमनुसृत्य शोकतीव्रता उचितैव। स्वयं धीरस्याप्यर्जुनस्य प्रलापपूर्वकं रोदनम् मनोनिर्वृतिहेतुः। तथाहुर्महाकवयः –

"पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया।

शोकक्षोभेन हृदयं प्रलापैरेव धार्यते[1]।।" इति।

एवं शोकस्य प्राधान्येऽपि शोकस्यापि भक्तिमूलकत्वात्, शोककृतप्रलापेषु स्तुतेरेव व्यज्यमानत्वात् भक्तेरेव प्राधान्यम्।

अपिचानुपदमेव शोकानुतप्तस्य, विजयस्य गीतास्मरणेन शमप्राप्तेः एकान्तभक्तेश्चोपवर्णनात्[2] शोकशमावतिरिच्य भक्तिरेव रसः प्रतीयते।

**उत्तरा** –[3]

मत्स्यदेशाधीशस्य विराटस्य दुहिता उत्तरा। अज्ञातवासस्य समाप्तौ ताम् अर्जुनस्य पुत्रः अभिमन्युः उपयेमे। भारतयुद्धारम्भकाले सा अन्तर्वत्नी आसीत्। युद्धावसाने (सौप्तिकपर्वणि) अश्वत्थाम्ना उपपाण्डवाःहताः। घटोत्कचाभिमन्युप्रभृतयः कुमाराः युद्धे निहताः। अतः पाण्डवानां वंशोन्मूलनम् अचिरादेव भवितव्यमासीत्। उत्तरा गर्भस्थशिशुः एक एव वंशाङ्कुरो भविष्यतीति कुन्त्याः पाण्डवानाञ्च महती आशा बभूव। नववैधव्यमसह्यवेदनम् बिभ्राणापि उत्तरा जनिष्यमाणं कुमारं दृष्ट्वा निर्वृतिमाप्स्यामीति समाश्वसन्ती कथञ्चित् जीवति स्म। एवं स्थितान् सर्वान् निराशोपहतान् कुर्वन्नश्वत्थाम्ना प्रयुक्तः ब्रह्मशिरोनामकास्त्र समुद्भूताग्निः उत्तरागर्भं दग्धुमारेभे।

अत्रान्तरे हस्तिनायां कतिचिन्मासानुषित्वा, श्रीकृष्णः द्वारकां गन्तुं कृतमतिरभूत्। तं जिगमिषुमेव महात्मानं अभिधावन्ती उत्तरा भयविह्वला श्रीकृष्णं शरणं गत्वा प्रार्थितवती। अष्टमेऽध्याये स्तुतिरियं वर्तते।

---

[1] उत्तररामचरितम् - III -29

[2] गीतं भगवता ज्ञानं यत्तत्सङ्ग्राममूर्धनि। कालकर्मतमोरूद्धं पुनरध्यगमद्विभुः।।
विशोको ब्रह्मसम्पत्या संच्छिन्नद्वैतशयः। लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसम्भवः।।
निशम्य भगवतन्मार्गं संस्थां यदुकुलस्य च। स्वः पथाय मतिं चक्रे निभृतात्मा युधिष्ठिरः।।
पृथाप्युपश्रुत्य धनञ्जयोदितम् नाशं यदूनां भगवद्गतिञ्च ताम्।
एकान्तभक्त्या भगवत्यधोक्षजे निवेशितात्मोपरराम संसृते।।

श्रीमद्भागवतम् - । - 15 -30 प्रभृति 33 पर्यन्तम्

[3] । - 8 - 9,10

प्रयोजनमुद्दिश्य कृता याचना प्रार्थना। कृष्णगतगुणकीर्तनम् स्तुतिः। उत्तराकृतप्रार्थनायां कृष्णस्य जगत्पालकत्वं, शरणागतरक्षकत्वं, विभुत्वमित्यादि सर्वोत्कृष्टगुणाः वर्णिताः।

*हे देवदेव! कृष्ण! त्वमेव योगेश्वरः, जगत्पतिः, त्वत्तः अन्यं न पश्ये। त्वमेव मम गर्भरक्षणं कर्तुं समर्थः।

"अनागतमतीतञ्च वर्तमानमतीन्द्रियम्।

विप्रकृष्टं व्यवहितं सम्यङ्पश्यन्ति योगिनः"[1]।।

इति योगिनः लक्षणम्। तादृशयोगिनामप्यगम्यः त्वं महायोगी इति वक्तुं समर्थः।

'देवदेव' इति पदं ईश्वरमहेन्द्रादिष्वप्यवस्थितम्। तन्निवारणाय 'जगत्पते' इति विशेषणम् कृतम्। देवानामपि देवः त्वमेव। जगत्पतेस्तव मद्गर्भरक्षणं कीदृक्कष्टम्? इति उत्तरायाः मनोगतो भावः। अत्र अर्थापत्तिरलङ्कारः ध्वन्यते।

लोके सर्वेमृत्युग्रस्ताः। ते मां रक्षितुमसमर्थाः। अतः त्वत्तः अन्यमभयङ्करं न पश्ये।

विभो इति पदेन विष्णोः सर्वव्यापकत्वं, अपरिच्छन्नत्वं ज्ञायते। अनेकविशिष्टलक्षणः त्वं मम गर्भरक्षणं कुरु इति उत्तरायाः प्रार्थना।

उत्तरा अस्त्रपीडितेति हेतोः आर्ता। आर्तत्वाच्च भगवतो भजनम्। एषः स्तवः यद्यपि श्लोकद्वयात्मकः। तथाऽपि अनल्पार्थप्रतिपादकः भगवतः उपदेशसारभूता च।

अत्र भगवानालम्बनम्। अश्वत्थामास्त्रज्वाला परिप्लोषितत्वं आर्तिजनकत्वात् भक्तेरुद्दीपनम्। अभिधावनं विह्वलत्वञ्चानुभावः। अत्र अस्त्रज्वालायाः त्रासः पाहिपाहीति दैन्यम्, कामं मां दहतु इति निर्वेदः। नान्यं त्वदभयं पश्ये इत्यत्र यद्यपि दैन्यं, तथाऽभगवत्यभयदर्शनात् धृतिश्च सञ्चारिणः।

उत्तरा शोकः यद्यपि करुणस्य स्थायी तथाऽपि भगवदाश्रयणेन परिक्षित् रक्षित इति न शोकस्य स्थायित्वं। तात्कालिकस्तु स्यादेव। तथाऽपि पाहीति वचसा भक्तेरङ्गभूत एव।

[1] भावार्थदीपिकाप्रकाशः - 383 पृष्टम्

**द्वारकावासिनः[1]**

महाभारतयुद्धानन्तरं धर्मराजं राज्ये अभिषिच्य हस्तिनपुरे कतिचिन्मासान् स्थित्वा हरिः द्वारकां प्रययौ। द्वारवतीमुपसृत्य स्वस्यागमनम् पौरेभ्यः प्रख्यापयितुं पाञ्चजन्यं दध्मौ। तद्ध्वनिं श्रुत्वा कृष्णदर्शनोत्सुकाः पौराः अनेकान्युपायनानि स्वीकृत्य तत्रागताः। चिरवियोगदुःखार्ताः ते तत्क्षणमेव गद्गदस्वराः कृष्णागमनमभिनन्दयामासुः।

यथा अर्भकाः सर्वविधसौहार्दम् प्रकटयन्तं स्वावितारं पितरं दृष्ट्वा आनन्दमनुभवन्ति तथैव ते ननन्दुः।

अत्र "अवितार"मिति साभिप्रायं विशेषणम्। क्वचिच्च पिता केवलं जन्महेतुस्स्यात्। प्रजानां विनयाधावनं, रक्षणं भरणञ्च पितुः कर्तव्यम्। यदि पिता न नामतः केवलं, अर्थतोऽपि पितृत्वं व्यवस्थापयति तदा अर्भका अपि तस्मिन्ननुरक्ता भवन्ति। उक्तञ्चकालिदासेन

"प्रजानां विनयाधानात् रक्षणात् भरणादपि।

स पिता पितरस्तासां केवलं जन्महेतवः[2]"।। इति

श्रीकृष्णः द्वारकावासिनः सर्वोपप्लवेभ्यः पाति। अतः अन्वर्था उपमेयम्। अर्भकाः प्रीतिपात्राणि अल्पकान्यपि वस्तूनि पित्रे प्रतिपाद्य तस्मिन् स्वप्रेम प्रकटयन्ति। न तत्र वस्तुनः उपयोगित्वं, मूल्याधिक्यं वा पित्रा परिगण्यते। केवलं तेषु वस्तुषु स्तुतानां प्रेम पश्यन्ति। तथैव कृष्णोऽपि पौरोपनीतानि उपायनान्यभिननन्द। सर्वसमृद्धिमतः पुरुषस्य किमेभिरुपायनैरित्याशंक्य बादरायणः इत्थं समादधे –

"तत्रोपनीतबलयः रवेर्दीपमिवोद्यताः।

आत्मारामं पूर्णकामं निजलाभेन नित्यदा[3]"।। इति।

अत्र उपायनीकरणं उपायनदातॄणामेव लाभाय भवति। यत्किञ्चिदपि वस्तु भगवदर्पणं कृतं चेत् तदनन्तफलदं भवतीत्यत्र सूचितम्।

एवमुपायनीकृत्य भगवन्तमेवं स्तुवन्ति –

"* हे नाथ! रक्षक! रक्षाहेतोरेव तवाङ्घ्रिपङ्कजम् नतास्स्मः।

अङ्घ्रिपङ्कजपदं सुखसेव्यत्वं सूचयतीति प्रतिपादितम्। तञ्च "विरिञ्चिवैरिञ्चसुरेन्द्रवन्दतम्"। विरिञ्चिः ब्र्ह्मा, तद्भवाः वैरिञ्चाः सनकादयः।अतः ब्र्ह्मादीनां त्वं प्रभुरसि। ब्रह्मादयः कालाधीनाः। कालः त्वयि प्रभुर्न भवेत्।

[1] । - 11 -5 प्रभृति 9 पर्यन्तम्

[2] रघुवंशः - । - 24

[3] श्रीमद्भागवतम् - । - 11 - 4

सर्वेऽपि प्राणिनः स्वकर्मफलं कालेनैवाधिगच्छति। कर्मफलानुसारेण कालः भूतानि पचति।

"मासर्तुसंज्ञ परिवर्तकेन
सूर्याग्निना रात्रिदिवेन्धनेन;
स्वकर्मनिष्ठाफलसाक्षिकेन
भूतानि कालः पचति प्रसह्य"[1] ।।

एवंविधः कालोऽपि भगवति न प्रभवतीति वदतां तेषामुक्तिषु महिम्नः परा काष्ठा प्रतिपादिता।

अपि च पादपङ्कजम् परायणं क्षेममिच्छताम् योगिनामाश्रयणीयम्। विरिञ्चि वैरिञ्चादयः सर्वोत्तम क्षेमकाङ्क्षिणः। अर्थात् मुमुक्षवः। अतस्तैः नारायणस्वरूपत्वं कृष्णावतारगत एव वत्सापहार, बाणासुरयुद्ध, शक्रमखभङ्गादि कालेषु स्तुत इति वीरराघवीये विवृतम्।

परायणं क्षेमञ्च मोक्ष एव। अत्र "इच्छता"-मिति ज्ञानवतां अज्ञानिनाञ्च भेदप्रतिपादनाय। तत्र संसारः मोक्षश्च सममेव देहिनं भजतः। तयोः कतरः श्रेयानिति विविच्य धीरः मोक्षमिच्छति। मन्दः संसारमिच्छति। तथा च श्रुतिः –

"श्रेयश्च प्रेयश्च मनुष्यमेतः
तौ संपरीत्य विविनक्ति धीरः।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते
प्रेयो मन्दो योगक्षेमाद्वृणीते [2]"।।

अतः श्रेयोरूपं परायणं क्षेममिच्छताम् अस्माकं त्वं शरणमसि।

एवं शरणं प्रपन्नानामस्माकं त्वमेव स्थितिहेतु। त्वत्त एव वयमुत्पन्नाः यतस्त्वं विश्वभावनः। सर्वोत्पादक इति यावत्।

विश्वं भावयति, उत्पादयतीति व्युत्पत्तेः बाहुलकात् कर्तरि ल्युट्।

त्वमेवास्माकं सर्वधा गतिः। माता, आत्मसुहृत्, पिता, पतिः सद्गुरुः परमं दैवतञ्च। अतः त्वत्सेवया वयं धन्याः।

---

[1] महाभारतम् - शान्तिपर्वः - 309 -90

[2] कठोपनिषत् - । -2-2

धन्यत्वे हेतुमुत्पादयन्ति – यत्र त्रिलोका अपि न सुलभदृश्यं, सप्रेमस्मितमनोहरं, तव मुखसौन्दर्यं द्रष्टुमस्माकमवकाशः त्वया प्रसादितः। ततो वयं धन्याः।

सर्वसौहृदशब्दस्य सर्वोत्तमत्वमर्थः।

एवं विधं भाग्यं प्राप्तवतामपि तेषु महोत्पत्तिर्माभूदिति भगवान् तदा तदा स्ववियोगमपि तेषु घटयति। वियोगघटनञ्च भक्तमदपरिहारार्थमेवेति प्रतिपादितम् दशमस्कन्धे[1]।"

अतः तादृशमदर्शनमपि भक्तानुग्रहायेति, "यर्ह्यम्बुजाक्ष[2] ...." इत्यन्तिमे श्लोके प्रतिपादितम्।

अत्रापि द्वारकावासिनां भगवद्विषयिणी रतिः स्थायी। भगवानालम्बनम्। चिरवियोगानान्तरं भगवतो दर्शनमुद्दीपनम्। "तत्रोपनीतबलयः ...... इति उपायनानयनादि अनुभावाः। "नतास्स्म ते नाथ" इत्यत्र अङ्घ्रिपङ्कजस्य प्रभावभावना मतिः। "त्वं सद्गुरु र्नः परमञ्च दैवतम्" इति स्मृतिः, "अहो सनाथाः भवतास्स्म" इति विस्मयः, "यर्ह्यम्बुजाक्ष... इति चिन्ता, "प्रेमस्मितस्निग्ध निरीक्षणाननं पश्येम" इति हर्षः सञ्चारिणः इति भक्तिरसः परिपुष्टः।

---

[1] "तासां तत्सौभगमदं वीक्ष्य मानञ्च केशवः। प्रशमाय प्रसादाय तत्रैवान्तरधीयत।।" - श्रीमद्भागवतम् - X - 29 -48

[2] ---(115)

**भूमिः –**[1]

परीक्षितः प्रशासनसमये एकदा धरणीं विषण्णां दृष्ट्वा धर्मः विषादकारणं पप्रच्छ[2]। धर्मेण पृष्टा भगवती धरणी स्वीयं विषादं एवं विवृतवती –

"हे धर्म! त्वं यद्यप्येवमजानन्निव पृच्छसि, तथाऽपि मे विषादकारणं त्वया ज्ञातमेव। एतावत्पर्यन्तं भवानपि पादचतुष्टयेन युक्तः सुखी वर्तसे।

श्रीकृष्णः नारायणस्वरूपः। सत्यभाषणम् मनोवाक्कायकर्मसु त्रिकरणेषु शुद्धत्वम्, परपीडाऽसहिष्णुत्वम्, क्षमा, त्यागः, सन्तोषः, ऋजुस्वभावः, मनसः निश्चलता, बाह्येन्द्रियसम्भ्रमः, स्वधर्मानुष्ठानरूपं तपः, सर्वभूतेषु समबुद्धिः, तितिक्षा, लाभे उदासीनता, शास्त्रविचारः, आध्यात्मिकज्ञानम्, वैराग्यम्, सर्वशक्तिमत्वादीश्वरत्वम्, सङ्ग्रामोत्साहः, प्रभावः, दक्षता, कर्तव्यानुसन्धानम्, स्वायत्तता, क्रियानिपुणता, सौन्दर्यं, आपत्स्वपि स्थिरचित्तता, चित्तस्य काठिन्याभावः इत्यादयस्सर्वे गुणाः यस्मिन् भगवति कृष्णे एकत्र समाविष्टाः, तादृशः परमपुरुषः श्रीनिवासः इदानीं मां विहाय वैकुण्ठं जगाम। तादृश महापुरुषेण रहितां आत्मानमेव शोचामि। एवमादिभिः एकोनचत्वारिंशद्गुणैश्शोभितः महापुरुषः पुरुषोत्तमात् ऋते कश्चन नास्ति।

एवं विधे महापुरुषे स्वधाम याते वर्णधर्माः, आश्रमधर्माश्च अगतिका भवन्तीति मे विषादः।

न केवलमहमेव यतोऽहंसृष्टानां प्राणिनां आश्रयभूताऽस्मि। किन्तु सृष्टिकर्ता ब्रह्माऽपि नारायणं प्रत्यक्षीकर्तुं, तदपाङ्गानुग्रहपात्रं भवितुं चिरं तपस्यति। तादृशो भगवान् पुर्णायुः मय्युषित्वा स्व धाम गतः इति मे विषादः।

तथाभूतस्य महात्मनः पद्मरेखादि चिह्नितम् पादपद्मम् स्मृत्वा शोचामि। स एव महात्मा लोकातीतविभूतिः भूतजातं सृजति, रक्षति, प्राप्ते काले उत्सादयति।

एष महात्मा कृष्णः असुरवंशजानां राज्ञां अक्षौहिणी शतम्(शतशब्दोऽत्र संख्याधिक्ये लाक्षणिकः, बह्व्य अक्षौहिणीः इति यावत्) महाभारतयुद्धे विनाश्य मम भारमवतारयामास।

अत्र "सम्पादयत्" इत्यस्य सम्पादयितुं इत्यर्थः। "लक्षणहेत्वोः क्रियायाः[3]" इति हेतौ शतृप्रत्ययः।

भारापनोदनार्थं यदुषु आप्तजन्मा, सुन्दरः सः मां धन्यामकरोत्।

---

[1] I - 16 - 27 प्रभृति 36 पर्यन्तम्

[2] I - 16 - 23 प्रभृति 26 पर्यन्तम्

[3] अष्टाध्यायी - III - 2 - 126

पुम्सामपि मोहनरूपस्य, यदुविलासिनीनां चित्तान्यपहरतः तस्य विरहं का वा सहेत? न काऽपीति काक्वाक्षिप्तम् व्यङ्ग्यम्।

अत्रापि धरण्याः कृष्णवियोग एव भक्तिरूपतया भासते।

अत्र धरण्याः कृष्णवियोगदुःखमेव यद्यपि प्राधान्येन भासते। तथाऽपि भक्तिद्वारैव दुःखमिति भक्तेरेव प्राधान्यम्। भक्तिः भुवः मनसि दृढा अस्ति। अतस्तस्याः स्थायिरूपता। अत्र स्तोत्रे वियोगशब्दः, शोकवाची शुचधतुप्रयोगश्च वाच्यतया स्थितः। स्थायिभावानां स्वशब्दाभिधेयत्वं निषिद्धम्। अतः करुणस्य न रसत्वम्। किन्तु भगवदनुरागरूपा भक्तिः प्राधान्येन व्यज्यमानतया भक्तिरेव रसध्वनिः।

अत्र भगवच्चिन्तनमालम्बनम्। धर्मकृतप्रश्नः उद्दीपनम्। "तेनाहं गुणपात्रेण श्रीनिवासेन इत्यत्र अनुशोचामि इत्युत्तरपदेन अन्वये शोककृता चिन्ता, 'का वा सहेत विरहं पुरुषोत्तमस्य' इत्यादिषु भगवल्लीलास्मरणात् स्मृतिः। सः भारनाशाय भुवमवतीर्ण इति मतिः दुःखोपशमिका सञ्चारिणः। एवं अत्र भक्तिरसपरिपोषः कृतः।

**देवकी –[1]**

वासुदेवात् भयमाशङ्कमानेन कंसेन देवकीवसुदेवौ बद्धौ। कंसेन च कृष्णजननात् पूर्वमेव देवकीसम्भूताः षड्शिशवः हताः। सप्तमस्तु गर्भस्थ एव मायया संकृष्टः[2] देवकीगर्भात् सङ्कर्षणरूपेण रोहिणीगर्भे निवेशितः। स विषयः देवक्या न ज्ञातः। ततः ब्रह्मादिभिस्स्तूयमानः भगवान्नारायणः दुष्टनिग्रहाय अंशावतारं प्रपन्नः वसुदेवस्य मनसि आविवेश। तदा वसुदेवोऽपि नारायणरूपी[3] बभूव। धृतगर्भायां देवक्यां काप्यपूर्वा शोभा कंसेनापि प्रत्यक्षदृष्टा। मे प्राणहरो हरिः इमां ध्रुवं श्रितः। यन्न पुरेयमीदृशी[4] इति कंसोऽपि भयमवाप। ततश्शुभे मुहूर्ते भगवान् देवकीगर्भात् भुवमवततार। किन्तु प्रथमतया स्वस्वरूपेण पित्रोस्समक्षे आविरभूत्। स्वरूपस्थितोऽपि बालक[5] एवायं बभूव। तं बालकं दृष्ट्वा वसुदेवः विस्मयोत्फुल्ललोचनः स्तुतिमकार्षीत्। दर्शनमात्रादेव सोऽयं बालः परमपुरुष इति वसुदेवस्य मनसि निश्चयः[6] अभूत्। देवकी तु तादृशं निश्चयं ज्ञानं न प्राप्तवती। महापुरुषलक्षणं भगवतो दिव्यं स्वरूपं दृष्ट्वा देवकी कृष्णरूपेण अवतरिष्यमाणं नारायणं एवं स्तुतवती। -

---

[1] X – 3- 24 प्रभृति 314 पर्यन्तम्

[2] श्रीमद्भागवतम् - -X - 2 - 5 प्रभृति 13 पर्यन्तम्

[3] "भगवानपि विश्वात्मा भक्तानामभयङ्करः। आविवेशांशभागेन मन आनकदुन्दुभेः"।। X - 2 -16

[4] श्रीमद्भागवतम् - X - 2 -20

[5] पूर्वत्र - X - 3 - 9

[6] श्रीमद्भागवतम् - X - 3 - 12

भगवन्! तवरूपं वाचामगोचरम्। अत एव अव्यक्तम्। सर्वसृष्टिकारणं भगवानिति तस्य रूपं आद्यम्। परमात्मरूपत्वात् ब्रह्म। स्वयं प्रकाशनात् ज्योतिः, निर्गुणं, गुणातीतं, निर्विकारं महदादि विकाररहितम्। तथाऽपि लोकव्यवहारार्थं शुद्धसत्वरूपमित्यङ्गीकृतम्।

प्रलयकाले लोके नष्टेऽपि त्वमव्यक्तरूपेण एक एव शिष्यसे इति मुनिभिर्गीयते।

परार्थश्च[1] ब्रह्मणः आयुः प्रमाणेऽर्थभागः। मनुष्यमानप्रकारेण 8340000000 वत्सराः ब्रह्मणः अहोरात्रम् भवति। तादृशदिनानां षष्ट्युत्तरं त्रिशतं ब्रह्मणः संवत्सरः। ब्रह्मणः पञ्चाशत् समाः एकं परार्थम्। तादृशपदार्थद्वयं ब्रह्मणः आयुः प्रमाणम्। ब्रह्मणः आयुषः अवसाने आत्यन्तिको महाप्रलयः। तत्र प्रलयेऽपि भगवत्स्थितिरिति सर्वशेषित्वं भगवतस्सिद्धम्।

सोऽयमखण्डः कालः त्वयैवप्रवर्तितः। अतस्त्वं कालरूपोऽसि। काले सृष्टिः तव क्रीडाविशेषः। तत्र विभागोऽपि कालकाष्ठनिमेषादि वत्सरान्तः व्यावहारिकः। तादृशकालस्वरूपं त्वामहं शरणं प्रपद्ये।

जनस्सर्वदा मृत्यभीतः। अत एव 'मर्त्य' इति व्यवहारः। म्रियते इति मर्त्यशब्दार्थः.। कुत्रापि कुतोऽपि मृत्योः मर्त्येन अभयं न प्राप्तम्। केवलं त्वत्पादाम्बुजं प्राप्य प्राणी स्वस्थो भवति। ततो मृत्युरपैति।

मृत्युशब्दः अत्र मृत्युभयसूचकः। अमर्त्यत्वस्य सर्वदा असम्भवात्। मृत्योरपेक्षया मृत्युभयमपक्रान्तं सः अमृतो भवति। तव भक्तिरमृतत्वाय कल्पते इति यावत्।

"न वासुदेव भक्तानामशुभं विद्यते क्वचित्।
जन्ममृत्युजरारोग भयं नैवोपजायते[2]।।"

इति स्मृतिरत्र स्मरणीया।

अभयप्रदातुः भगवतः अभयं याचते। "ग्रसेनात्मजे"ति साभिप्रायं विशेषणम्। यतश्च कंसस्य जन्म न परिशुद्धम्। गार्हस्थ धर्ममनुसरता उग्रसेनेन अयं नोत्पादितः। स्वमातुः अज्ञानेनापि पत्यन्तरात् जातोऽयम्। स च स्वजनपीडायै एव उत्पन्नः। एष च शापः कंसस्यैव जनयित्रा द्रमिडनामकेन गन्धर्वेण दत्तः। कंसोत्पत्ति कथा अत्रैव[3] भागवते द्रष्टव्या।

---

[1] अमरकोशः - । - 4 - 22
"ब्रह्मणस्स्वस्यमानेनहयायुर्वर्षशतं स्मृतम्। तत्परं वै तदर्थं तु परार्थमथिधीयते।।" वीरराघवीयव्याख्या - 10-3-25

[2] महाभरतम् - विष्णुसहस्रनामफलश्रुतौ।

[3] "क्रूरस्ते तनयो भूयात्साहसी निर्गुणोदयः। नानुग्राह्यो देवतानां द्विजानाञ्च तपस्विनाम्।।
इत्थं वदन्त्यां तस्यां सः क्रुद्धायां शापशङ्कितः। तावकानां भवेच्छत्रुरित्युक्त्वान्तरधीयत।।"
श्रीमद्भागवतम् - 10 - 36 - 4,49

स्वजनकण्टकोऽयं कंसः दुस्सहः।

यद्यपि भवद्रूपं स्थानं महिमातिशयञ्च स्तोतुमस्माकमशक्यम्। तथाप्येवं प्रार्थये, कंस बाधाभ्यः अस्मान् त्राहीति।

अथ कृष्णरक्षायै कृष्णमेव प्रार्थयति – अहं तु कंसाद्भीता। यतो जातं त्वां अवश्यं हनिष्यति। तव जन्म कंसेन अज्ञातं कुरु।

तदनन्तरं भगवतो विश्वरूपं द्रष्टुमसहिष्णुः तदुपसंहर्तुं प्रार्थयते – ततः आत्मनो भाग्योदयं, प्रशंसन्, कृष्णस्य कारुणिकत्वञ्च श्लोकद्वयेन प्रशंसति।

प्रथमं वसुदेवेन पश्चात् कंसभयात् आर्तया देवक्या (प्रार्थितः) स्तुतः श्रीकृष्णः तयोः पूर्वजन्म वृत्तान्तं एवं कथयामास। -

स्वायम्भुवमन्वन्तरे वसुदेवः पृष्णिर्नाम ऋषिर्बभूव। तस्य भार्या सुतपा नाम। महत्तपः तप्यतोः दम्पत्योः भगवान् "युवयोः पुत्रो भविष्यामि" इति वरं ददौ। द्वितीयस्मिन् भवे तावेव कश्यपः अदितिश्च बभूवतुः। तयोः विष्णुः वामनः सुतो बभूव। इदानीं देवकीवसुदेवरूपयोः तयोः कृष्णरूपेण पुत्र उत्पन्नः। एष एव स्वभक्तयोरेतयोः कृते भगवतः अनुग्रहविशेषः।

अथ देवक्याः प्रार्थनानन्तरं स्वरक्षारूपमङ्गीकृत्य तदनुकूलतया नन्दगोकुलं आत्मानं प्रापयितुं वसुदेवमादिश्य भगवानन्तर्दधे।

यद्यप्येतत्सुतिद्वयं नारायणस्यैव। तथाऽपि स्तोत्रद्वयान्ते कृष्णप्रस्तावनात्-कृष्णप्रादुर्भावसमये कृतत्वाञ्च कृष्णस्यैव स्तुतित्वेन व्याख्यातम्।

अत्र नारायणत्वेन ज्ञातः भगवान् श्रीकृष्णः आलम्बनम्। अवश्यं कंसं हनिष्यतीति दृढविश्वासः उद्दीपनम्। अनुभावाश्च स्तोत्रनमस्कारादयः। कंसात्रासः महापुरुषदर्शनेन विस्मयः, उपधावन् वर्णनात् शरणागत रक्षणस्याभिव्यक्तेः धृतिः, 'विश्वं यदेतत् ... ' इति वर्णितस्य महापुरुषोऽपि स्वगर्भेऽवतीर्ण इति औत्सुक्यं हर्षश्च सञ्चारिणः। एवं भक्तिरत्र स्फुटतया परिपोषः कृतः। कंसाद्भीतेति यद्यपि भयानकस्यापि अत्रावकाशः तथाऽपि तमुपाधावत् इति वर्णनेन धैर्यप्राप्तेः भयस्य गौणता।

**कालियपत्न्यः [1]–**

कालियः कश्चन नागराजः। पुरा प्रजाभिः नागेभ्यः दीयमानासु उपदासु आहारादिषु च गरुत्मान् संविभागभाक् भवतिस्म। कालियस्तु स्वस्मै दीयमानेष्वाहारेषु गरुडाय भागं दातुं

[1] X -16 -33 प्रभृति 53 पर्यन्तम्

नैच्छत्। ततस्तार्क्ष्यस्तं हन्तुमुद्यतः। वैनतेयभिया कालियः यमुनाह्रदे निलीनः। ततस्सर्वं जलं तत्रत्यं विषमभूत्।

अपि च ह्रदसमीपगतान् पशून् गोपांश्च कालियः ग्रसति स्म। कृष्णस्तं ह्रदं प्रविश्य कालियफणगणे ननर्त। कृष्णपादताडनेन कालियः मृतप्रायो जातः। तदा कालियपत्न्यः भर्तुः रक्षणार्थं कृष्णमेवं प्रार्थयामासुः –

कालियः व्रजवासिनां प्राणिनामपकारः। अतः कृतापराधः। दुर्जनानां प्रशास्तुः तव दण्डः स्वीयेषु वैरिषु च समं प्रवर्तते। अतः कृतापराधे अस्मद्भर्तरि दण्डः न्याय्यः[1]।

त्वया कालिये विहतो दण्डः तवानुग्रह एव कल्मषापहारित्वात्। दन्दशूकरूपे पापयोनावुत्पन्नस्य ईदृशस्य त्वदनुग्रहावकाशः नास्त्येव। अथवा पूर्वस्मिन् जन्मनि अनेन तीव्रं तपस्तप्तं स्यात्। अथवा किमस्य जन्मना, तपसा वा? भवत एवेयं सर्वजीविदयालुताऽत्र कारणम्।

तव पादपद्मं स्प्रष्टुं श्रियाऽपि चिरं तपस्तप्तम्। अस्मद्विधानां तु स्पर्शनाधिकारोऽपि नास्ति। तादृक् पदं आस्माकं भर्तुमूर्धसु निधाय तं सर्वधा अनुजगृहिथ।

ये तव पादरजः प्रपन्नाः ते स्वर्गवासं ब्रह्मपदं, पातालाधिपत्यं, योगसिद्धं मोक्षं वा न वाच्छन्ति। भक्तानां भगवत्सेवने एतादृशी निर्वृतिः पूर्वमेव विस्तरेण प्रतिपादिता[2]।

*तमोगुणप्रधानजन्मा, क्रोधपरवशः अयमहीन्द्रः तव प्रभावं न जानीते। संसारचक्रे भ्रममाणाः मोहान्धाः तव पादरजः बहुना यत्नेनापि प्राप्तुमक्षमाः। तादृशं पादरजः अनेन प्राप्तमपि इदानीं तन्महिमा नाधिगतः।

एवं स्वभर्तुरपराधाङ्गीकारं, अज्ञताञ्च प्रकटयन्त्यः ताः भगवतः क्षमां संप्रार्थ्य इदानीं तस्य महिमानं स्तुवन्ति।

*सर्वप्राणिशरीरव्यापकाय, भूतानां निवासस्थानाय, महासत्वाय, परमात्मस्वरूपिणे, तुभ्यं नमः।

भूतावासः इति नाम भगवतः विष्णुः सहस्रनामसु सुप्रसिद्धम्[3]। कृष्णस्य नारायणरूपित्वात् सत्वभूतत्वं तत्रैव प्रतिपादितम्। -

"एको विष्णुर्महद्भूतम्, पृथग्भूतान्यनेकशः।

---

[1] न्यायादनपेतं न्याय्यम्।
"धर्मपथ्यर्थन्यायादनपेते। इति सूत्रेण यत्। अष्टाध्यायी - IV - 4-12

[2] नाहं वन्देतव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः .. इत्यादिषु ( उपोद्घातप्रकरणे)।

[3] "भूतावासो वासुदेवः सर्वासु निलयोऽनलः"। विष्णुसहस्रनामस्तोत्रम्।

त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः[1]।" इति।

*त्वं कारणातीतः। अपि च ज्ञानविज्ञाननिधिः। सर्वगुणानामुत्पत्ति स्थानमपि गुणातीतः।

अत्र ज्ञानं ज्ञप्तिः। समग्रतया अवबोधनम्। विज्ञानं चिच्छक्तिः। अन्तर्मुखत्वात् इन्द्रियातीतं ज्ञानम्। ज्ञानस्य च विज्ञानस्य च निधिः। अत एव अप्राकृतानन्तशक्तियुतः, इति।

भगवान् कालस्वरूपः। लोकं देहयात्रया यः गमयति सः कालः। भगवतैव प्रेरितः निखिलप्रपञ्चः गच्छति। स्वरूपेण तिष्ठति च।

"कालः कलयतामहम्[2]"।

"कालोऽस्मि लोकक्षयकृत्प्रवृत्तः[3]।"

इत्यादि वाक्यान्यत्रानुसन्धेयानि।

कालस्त्वखण्डरूपः। अहोरात्रादयः लोकव्यवहारार्थं कल्पिताः। यतश्चायं परमात्मा कालाधारः। नाभिशब्दः आश्रयसूचकः। कालशक्तेराश्रयस्य कर्मसाक्षिणे ते नामः।

*विश्वस्वरूपाय, विश्वहेतेवे ते नामः।

इदानीं साङ्ख्यमतेन भगवत्स्वरूपं वर्णयन्ति। -

पुरुषः मायया प्रकृतिमुपेत्य लोकान् सृजति। सृष्टौ तटस्थो भवति च । अत एव पुरुषस्य "तटस्थः" इत्येवार्थः। तत्र पञ्चभूतानि पञ्चतन्मात्राः, पञ्च ज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, प्राणं,मनः, बुद्धिः, अहङ्कारः, चित्तमिति पञ्चविशति विकारैर्युक्तोऽपि अविकारी पुरुषः सृष्टिहेतुर्भवति।

गुणहेतुरपि गुणातीतः, गुणेष्वपि सृष्टिस्थिति लयकारकत्वं भगवतः प्रतिपादितम्।

असङ्ख्याकानाम्, परस्परमैक्यमभजतां वादानामपि भगवानेवाकरः। वादप्रकारास्तु अस्ति, नास्ति, सर्वज्ञः, किञ्चिदज्ञः, बद्धः, मुक्तः, एकः, अनेकः[4] इत्यादि भेदरूपः।

शब्दस्य वाच्यवाचकभावो यस्सम्बन्धः सोऽपि भगवानेव।

---

[1] महाभारतम् - आनुशासनिकपर्वः -135 -140

[2] भगवद्गीता - 10- -30

[3] पूर्वत्र - 11 -32

[4] भावार्थदीपिका - X- 16 -43

शक्तिशब्दः अत्र शब्दव्यापारद्योतकः। सैव शक्तिः अभिधेत्युच्यते। अर्थस्य शब्दगतः, शब्दस्यार्थगतो वा सम्बन्धविशेषोऽभिधा[1]।

प्रमीयते अर्थानुकूलं ज्ञानं अनेनेति प्रमाणम्। तत्र शास्त्रवैविध्यमनुसृत्य प्रमाणानां सङ्ख्याऽपि भिन्ना भवति। तथा च –

"प्रत्यक्षमेकं चार्वाकाः प्रमाणमिति मन्यन्ते।

प्रत्यक्षानुमाने द्वे प्रमाणे इति कणादाः।

प्रत्यक्षानुमान शब्दास्त्रयः प्रमाणानीति साङ्ख्यकापिलाः। प्रत्यक्षानुमानोपमानशब्दाश्चत्वारि प्रमाणानीति नैयायिकाः। प्रत्यक्षानुमानउपमानशब्दार्थापत्यनुपलब्धयः षट् प्रमाणानीति मीमांसकाः। सम्भवैतिह्याभ्यामष्टाविति पौराणिकाः।

सम्भवैतिह्यचेष्टाभिस्समं नव प्रमाणानीति भरतः[2]।"

प्रमाणं ज्ञानमूलम्। तन्मूलं भगवानिति वर्णनात् कारणकारणमित्यर्थः। अत एव शास्त्रयोनिः सर्वेषां शास्त्राणां मूलम्। शास्त्रयोनित्वादेव भगवतः प्रवर्तकत्वं निवर्तकत्वञ्च। सर्वशास्त्राणां वेद एव आकरः इति भगवतो वेदात्मकत्वम्।

अत्र चतुर्मूर्तित्वम् चतुर्व्यूहरूपेण प्रदर्शितम्। एतदग्रे वितनिष्यते[3]।

गुणाः अन्तःकरणानि। ज्ञानप्रदानेन तानि प्रकाशयतीति गुणप्रदीपः कृष्णः। गुणात्मा छादनं यस्य। उपासकानां फलप्रदाने, आराधने च वैचित्र्यं दर्शयितुं गुणैः आत्मानमाच्छाद्य भगवान् नानात्वेन प्रकाशते।

गुणस्य मनसः वृत्या व्यापारेणोपलक्ष्यः दर्शनीयः चित्तनिरोधेन अनन्यया धिया द्रष्टुं योग्य इत्यर्थे 'गुणवत्युपलक्ष्याय' इति स्तुतम्।

गुणानां द्रष्टा साक्षी। स्वसंविदे – स्वयं प्रकाशवतः। अथवा स्वेन संविदे – आत्मनैव ज्ञातव्याय ते नमः।

अतर्क्यप्रभावाय, सर्वकार्यहेतुत्वेन प्रकाशमानाय, आत्मारामाय, ते नमः। परापर गतिज्ञाय, विद्याद्वयप्रवृत्तिज्ञात्रे ते नमः।

विद्यायाः मोक्षरूपायाः अविद्यायाः संसाररूपायाश्च गतिं भगवानेव जानाति। तस्मादेव सर्वाध्यक्षत्वं भगवतः। विश्वव्यापी अपि भगवान् न विश्वस्वरूपः। किन्तु विश्वस्य साक्षी। तादृशे साक्षिणे ते नमः।

---

[1] वृत्तिवार्तिकम् - अभिधा लक्षणम्

[2] पारिभाषिकपदार्थसङ्ग्रः - । - 18 पृष्टम्

[3] अक्रूरकृतस्तोत्रे - 365 पृष्टम्

जन्मस्थितिलयानां गतिः, गुणत्रयरूपत्वात् त्वयैव ज्ञायते। तथाऽपि निरीहः। लोकस्य स्वभावमनुसृत्य तस्य कर्मणो विधायकः तेन क्रीडसे। त्वं सर्वसमः। तवावताराः लोकरक्षार्थं धृताः। सज्जनानां रक्षणाय दुष्टशिक्षणार्थञ्च त्वं भूमावुत्पन्नः।

अस्माकं भर्ता कालियेन मनाक् कृतोऽथमपराधः क्षन्तव्यः। अस्माकमनुगृह्य पतिभिक्षां देहि।

भर्तुः प्राणरक्षार्थं अस्माभिः किं करणीयमिति त्वयैवाज्ञा देया –

एवं स्तुवन्त्यः कालियपत्न्यः तद्भर्त्रुप्राणदानेनानुगृह्य ह्रदममुं त्यक्त्वा अन्यत्र याहीति कालियमादिश्य भगवान् ततः निर्जगाम।

अत्र कालियविमर्दन दुःखितानां कालियपत्नीनां भयं शोको वा यद्यपि प्रधानप्रतिपत्तिमर्हति। तथाऽपि आश्रितान् कृष्णः रक्षिष्यतीति विश्वासः तासां भयं शोकञ्च दूरीचकार। यद्यपि विश्वासो भक्तिकृतः इति भक्तेः प्राधान्यम्।

अत्र भगवद्रतिः स्थायी। भगवानालम्बनम्। भर्तुः प्राणभयमुद्दीपनम्। "तास्तां सुविग्नमनसः" इति श्लोके नमस्कारः, 'आर्ताः ल्शथवसन भूषणकेशबन्धाः' इत्यत्र आर्तरूपेण वर्णनात् शोकः अश्रुपातश्च सात्विकानुभावाः। भर्तुः भग्नगात्रदर्शनेन तस्य जीविते शङ्का, "न्याय्यो हि दण्डः" इति श्लोके पक्षपातराहित्यवर्णनात् मतिः, 'शरणं प्रपन्नाः' इति निर्वेदः ग्लानिश्च सञ्चारिणः। एवमत्र भक्तिः अतीव परिपुष्टा वर्तते।

## **महेश्वरज्वरः**[1] -

कृष्णेन सह प्रवृत्ते युद्धे ईश्वरसहायः बाणासुरः ज्वररूपिणीं शक्तिं कृष्णं हन्तुं प्रयुयुजे। नारायणोऽपि तं ज्वरं रोद्धुं वैष्णवं ज्वरमुत्पादयामास। वैष्णवेन ज्वरेण पीडितः माहेश्वरज्वरः श्रीकृष्णमेवं तुष्टाव –

[1] X - 63 -26 प्रभृति 29 पर्यन्तम्

*अनन्तशक्तिं परमेश्वरं, सर्वव्यापिनं, केवलज्ञानरूपिणं, सृष्टिस्थितिलयहेतुं त्वां नमामि। त्वमेव वेदवेद्योऽसि। सर्वविकारदूरोऽसि।

अथ भगवतः सर्वशेषित्वमुपपादयति –

शेषः सर्वोऽपि भौतिकपदार्थः। ईश्वरस्तु सर्वान् भौतिकपदार्थानतिरिच्य वर्तते इति सर्वशेषी।

लोकस्थिति हेतवः कालः, दैवं, कर्म इत्यादयः। ते सर्वेऽपि त्वमेव।

तेषु कालः प्राणिसञ्चालकः। क्षोभक इति श्रीधरः[1]। क्षुभ्नातेरपि सञ्चलनमेवार्थः[2]। कर्म फलानुभवनिमित्तम्। कर्मैव अभिव्यक्तं फलाभिमुखं दैवम्। कर्मवासनावासितः जीवः। पञ्चभूतानां सूक्ष्मांशाः द्रव्यम्। क्षेत्रं प्रकृतिः। अथ इन्द्रियाणि, मनः इति एकादश। तेषां पञ्चभूतैस्सह संयोगे षोडशविकाराः। देहस्तु साङ्ख्यानां मते षोडशविकारसम्भूतः। देहेन कर्मानुभवः, कर्मणा देहप्राप्तिः इत्यन्योन्याश्रयणेन संसारचक्रप्रवर्तनम्।

त्वमेतादृशानां विकाराणामतीतः। जननमरणादि दुःखनिवारकं त्वामहं शरणं प्रपद्ये।

सर्वोऽपि लोकः तत्तत्कारणैरुत्पादितः भवति। कारणमेवोपाधिरिति कथ्यते। जन्मप्राप्त्यर्थं कर्म, (पापपुण्यादि) कालश्च कारणं भवति। त्वं तु सर्वोपाधिविनिर्मुक्तः. लीलया स्वीकृतावतारः, लोकोपकारकान् सज्जनान् रक्षसि। वर्णाश्रमधर्मान् पालयसि। इदानीं कृष्णावताररूपमिदं जन्म भुवो भारावतरणार्थं त्वया गृहीतम्। दुष्टसंहारोऽपि तादृश भारावतरणैकशेषः।

अहं तु भवता सृष्टेन वैष्णवज्वरेण अतितया पीडितः इदानीं तव पादमूलमुपागतोऽस्मि। त्वां शरणं प्रपन्नानां कदाऽपि तापः न भवेत्। अतः ममापि तापं परिहर।

एवं त्रिशिरोनामकज्वरेण स्तुतः श्रीकृष्णः तस्मै अभयं ददौ।

अत्र भगवतः दिव्यकर्मकथनेन दिव्यं स्तोत्रम्। अत्र भयत्राणहेतुः भगवानालम्बनम्। वैष्णवज्वरात् त्रासः, तत्कृता शरणार्थिता च उद्दीपनविभावौ। प्रयताञ्जलिरित्यत्र प्रणामोऽनुभावः। अत्र वैष्णवज्वरप्राप्तत्रासः भयानकरसस्थायी भक्तिरसाङ्गभूतः। न तु व्यभिचारी। भयानकरसमिलितः भक्तिरसः आलङ्कारिकसमय एवेति नवरसमिलितमित्यत्र प्राक् प्रदर्शितः[3]।

---

[1] भावार्थदीपिका - - X - 63 -27

[2] क्षुभ - सञ्चलने।

[3] उपोद्घातप्रकरणे -

वैष्णवज्वरार्दितत्वात् ग्लानिः, भगवतः शरणागते भयकृतत्रासस्सञ्चारिणः। भयोत्थितत्रास इत्यत्र तु भयशब्दो भयानकरसहेतुः स्थायी। त्रासस्सञ्चारी।

औत्पत्तिकप्रभवः त्रासः, स्वापराधोत्थं भयमिति भयत्रासयोर्भेदः। ज्वरस्य कृष्णहननप्रयत्नः स्वापराधः। ततः वैष्णवज्वरात् तस्यैव त्रासः इति दिक्। एवमत्र भक्तिरससामग्री सम्पन्ना भवति।

**राजानः[1]** –

जरासन्धेन बाधिताःराजानः तद्बाधानिवारणार्थं कृष्णानुग्रहप्राप्त्यर्थं गिरिव्रजादेकं पुरुषं प्रेषयामासुः। सः कृष्णान्तिकमागत्य कृष्णाय राज्ञां विज्ञापनं तेषामेव वाक्यैः श्रावयामास। राजानः एवं कृष्णं तुष्टुवुः –

*हे कृष्ण! आपन्नानामभयप्रदातुः अप्रमेयात्मनः तव शरणं गच्छामः।

प्रमेयं च तर्केण अनुमातुं शक्यम्। अप्रमेयश्चासौ आत्मा चेति अप्रमेयात्मा। परमात्मेत्यर्थः। परमात्मनः स्वरूपं तु न प्रमाणगम्यम्।

"नैषा तर्केण मतिरापनेया[2]" इति श्रुतिः। आपन्नानां भयं भञ्जयतीति आपन्नभयभञ्जनः "कृत्यल्युटो बहुल[3]"मिति बहुलग्रहणात् कर्तरि ल्युट्। प्रपन्नानां भयापनेता, अभयप्रदायकश्च इत्यर्थः। साभिप्रायमिदं विशेषणम्। यतश्च राजानः जरासन्धभयेनापन्नाः। अत एव कृष्णस्य शरणं प्रपन्नाः। तेषां भयं जरासन्धादेव। अत्र भयहेतोः जरासन्धस्य कारणत्वात् भयस्य कार्यत्वात् कार्यकारणयोरभेदः वृत्तिगतः लाक्षणिको वा उन्नेयः। जरासन्धं कृष्णः अचिरादेव हनिष्यतीत्यर्थः अनेन द्योत्यते। तादृशं आपन्नार्तिहरं त्वां संसाराद् भीताः शरणं यामः।

पृथग्दृशः भेदबुद्धिमन्तः। वयं मूढा इति कृष्णं प्रति स्वदैन्याविष्करणम्। पृथक्दृक्त्वादेव तत्वतो वयं त्वां न जानीमः।

लोकस्सर्वदा मोहान्धः संसारं सेवते। निषिद्धं काम्यं कर्माचरति। संसारोत्तारके त्वदर्चनाविधौ बुद्धिं न कुरुते। काम्यवर्ती जनोऽपि कर्म कृष्णार्पणं कुर्वन् मोक्षमाप्नोति। तादृशमर्पणम् अपुनर्भवाय कल्पते इति व्यङ्ग्योऽर्थः। एष च व्यङ्ग्योऽर्थः जीविताशां सद्यश्छिनत्तीत्यत्र पर्यायोक्त्या सूचित इत्यलङ्कारकृतो वस्तुध्वनिः।

पुनर्जन्मनाशकाय, मोक्षदात्रे भवते नमोऽस्तु।

---

[1] X - 70 - 26 प्रभृति 32 पर्यन्तम्

[2] कठोपनिषत् - I - 2 - 9

[3] अष्टाध्यायी - III - 3 - 113

भगवान् केषां मोक्षप्रदाता? इति शङ्का न कार्या। यः कृष्णे रतः स्वाचरितं कर्मफलनिरपेक्षः कृष्णार्पणं करोति तं भगवान् भवबन्धेभ्यः मोचयति। उक्तं भगवता

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।

यत्तपश्यसि कौन्तेय! तत्कुरुष्व मदर्पणम्[1]।।" इति।

त्वं नारायणः। अपि च स्वकलया सद्रक्षणार्थं, असतां निग्रहार्थाय च भुवि अवतीर्णः। युष्मच्छासनं विलङ्घ्य लोके को वा फलं प्राप्नोति? कुशली वा भवति? तं न पश्यामः। सर्वोऽपि लोकः त्वदाज्ञया प्रवर्तते।

इदानीं वयं राजानः इति तेषां व्यावहारिकं गर्वं स्वराजपदवीं निन्दन्ति –

स्वप्नवदाचरितं – स्वप्नायितम्। स्वप्नतुल्यक्रियमिति यावत्। तादृक् राज्यसुखं प्राप्य पुनःपुनः येनकेनापि भयेनाक्रान्ताः मृतकल्पाः अन्यायत्ताश्च भूत्वा इमां राज्यधुरं वहामः।

अत्र गर्वराहित्येऽपि वहामः इति उत्तमपुरुषप्रयोगः नाहङ्कारद्योतकः। राजसु ज्ञानोत्पत्तेः। लोकव्यवहारनिर्वहणमात्रमिति ज्ञेयम्। अन्यथा राज्ञां मूढत्वापत्तेः। उक्तञ्च भगवता –

"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।

अहङ्कारविमूढात्मा कर्ताहमिति मन्यते[2]।।" इति।

किन्तु तेषां मूर्खतां प्रकारान्तरेण निरूपयन्ति – एवं राजमानिनो वयं त्वच्चरणामबुजसेवां हित्वा वृथा सुखार्थं यतामहे इत्यत्र भवतो मायैवहेतुः।

भगवान्! तस्मादस्माकमपराधं क्षमस्व। जरासन्धरूपकर्मपाशेन बद्धानस्मान् तस्माद्विमोचय। योऽयं जरासन्धः वीराणां दशसहस्रं स्वभवने बबन्ध।

त्वामष्टादशवारं जरासन्धः योधितोऽपि त्वां निरोद्धुं न शशाक। यतस्त्वमनन्तवीर्यः। इदानीं तं जित्वा अस्माकमभयं देहि। -

इति राजभिः प्रार्थितः कृष्णः तथाकर्तुं मनश्चक्रे। तथाऽपि तस्मिन्नेव काले यियक्षमाणेन पार्थेनाहूतः उद्धवमतमनुसृत्य राजसूयं जगाम। ततः भीमं गिरिव्रजं नीत्वा भीमेन जरासन्धं घातितवान्।

अत्र राज्ञां भगवद्गता रतिस्स्थायी। भगवानालम्बनम्। जरासन्ध भयात् प्रपदनमुद्दीपनम्। "शरणं याम ..... भवभीताः" इति दैन्यम्। "स्वप्नायितं नृपसुख"मिति

---

[1] भगवद्गीता - IX - 27

[2] पूर्वत्र - III - 27

ज्ञानोदयात् मतिश्च (सञ्चारिणः)। अद्यावधि त्वदस्मरणेन शोकमुपगता इति क्लेशस्मरणात् स्मृतिः, क्लिश्यामहे इति ग्लानिश्च सञ्चारिणः।

अत्र निर्वेदः जगदनित्यालम्बनः शान्तरसस्थायी यद्यपि व्यज्यते तथाऽपि रभगवद्रतेः तस्याङ्गत्वम्। यद्वा "तन्नो भवानित्युत्तर श्लोके तन्निर्वेदस्यापि भगवद्रतिपोषकत्वप्रतिपादनात् निर्वेदो व्यभिचारी वा। अनित्यत्वेन ज्ञातं नृपसुखं यद्यप्यालम्बनं, तथाऽपि भूयिष्ठ विभावजत्वाभावात् स्थायित्वायोग्योऽपि सञ्चारी भवत्येव।

आहुश्चालङ्कारिकाः –

"रत्यादयः स्थायिभावाः स्युर्भूयिष्ठ विभावजाः।
स्तोकं विभावैरुत्पन्नाः त एव व्यभिचारिणः।।" इति।

**प्रथमोध्यायः समाप्तः**

# द्वितीयोऽध्यायः

## अर्थार्थस्तुतिप्रकरणम्

**रुक्मिणी** *[1]

स्तुवन् न को ,कल्याणात्मिका विष्णुकथाः श्रुण्वन्ऽपि भक्तः तृप्यति। जगत्प्रसिद्धासु भगवत्कथासु रुक्मिणीकल्याणकथा सर्वमनोहरा। यद्यपि भगवत्कथाः सर्वाः रमणीयाः , तथाऽपि गजेन्द्रमोक्षकथा ,अम्बरीषोपाख्यानम् ,वामनावतारः ,प्रह्लादचरितम् , रुक्मिणीकल्याणकथा इति काश्चन कथाः लोके अतीव प्रचुराः। तास्वपि काश्चित् आपत्तरणार्थं गजेन्द्रमोक्षकथायाः पारायणिका भवन्ति। अनूढाः कन्याः उद्वहार्थं रुक्मिणीकल्याणकथां गृहीतदीक्षाः पारायणं कुर्वन्तीति प्रसिद्धमेव।

तादृशी कथा न केवलं रुक्मिणीश्रीकृष्णयोः उद्वहमात्रकथनेन न पर्याप्ता। किन्तु भगवते आत्मनिवेदनम् कृतवतां भक्तानां लोके सर्वथा शुभं भवति। भगवान् तान् स्वयमनुगृहणातीत्युपदिशत्यपि। किञ्चेयं कथा भगवतो भक्तवात्सल्यस्य उदाहरणमपि।

विदर्भाधिपतिः भीष्मकः। सः समर्थोऽपि पुत्रवशंवदः। अथवा दुश्चरित्राः पुत्राः तं परायत्तमकुर्वन्। भीष्मकस्य रुक्मिप्रभृतयः पञ्चपुत्राः। रुक्मिणी च एकैव पुत्रिका। रुक्मिणी बाल्यात्प्रभृति कृष्णस्य गुणान् श्रुत्वा कृष्णेऽनुरक्ताऽसीत्। भगवानपि श्रुतरुक्मिणीगुणः तस्यामनुरक्तोऽभूत्। बान्धवाश्च रुक्मिण्याः कृष्ण एव अनुरूपो वर इति मत्वा कृष्णाय रुक्मिणीं दित्सन्ति स्म।

भीष्मकपुत्रेषु सर्वाग्रजः रुक्मी कृष्णे जातमत्सरः चैद्याय शिशुपालाय रुक्मिणीं दास्यामीति निश्चित्य विवाहसन्नाहमकरोत्। तदा खिन्ना रुक्मिणी आप्ततमं कञ्चित् ब्राह्मणमाहूय राक्षसविवाहेन स्वां नेतुं कृष्णाय सन्देशं प्राहिणोत्। रुक्मिणीसन्देशमादाय " – द्वारकांगतः स ब्राह्मणः कृष्णं दृष्ट्वा रुक्मिण्याः स्तुतिपूर्वकं सन्देशं एवं कृष्णं श्रावयामास

*भुवनमोहनतव भवसन्तापहरान् गुणान् जनमुखात् श्रुत्वा त्वयि निविष्टधीः अभव !म्। तव रूपं द्रष्टूणां सर्वाणि हितानि सम्पादयति। अत एव त्रपां विहाय मे चित्तं त्वयि प्रविष्टम्।

त्रपादयो लौकिकगुणाः भगवति सर्वथा वर्जनीयाः। इदञ्च – अत्रेदं भक्तिरहस्यम् – भगवता स्वयं सन्दिष्टम् गोपिका वस्त्रापहरणसमये

दृढं प्रलब्धास्त्रपया च हापिताः"

प्रस्तोभिताः क्रीडनवञ्च कारिताः।

[1] X -52 – 39 प्रभृति पर्यन्तम् 45

वस्त्राणि चैवापहृतान्यथाप्यमुं

तानभ्यसूयन् प्रियसङ्गनिर्वृताः[1]।।"

त्रपात्यागानन्तरमेव भगवान् गोपीरनुजग्राह इत्येतावतैवायमर्थः स्थिरीकृतः। – रुक्मिणीकृत शरणागतावपि त्रपात्यागस्सूचित इति तस्याः अचिरादेव फलसिद्धिःव्यज्यते।

*लोके न का कन्या त्वत्सदृशं पतिं न वृणोति त्वत्सदृशस्तु त्वमेव। अतः का त्वां न ? वृणीतयतस्त्वं न केवलं नेत्राह् ?लादकरः। अपि तु मनोभिरामः।

*अत एव मयाऽपि त्वमेव पतिरिति वृतः। चैद्यश्शिशुपालः सिंहस्य बलिं गोमायुरिव त्वदायत्त जीवितां मां हर्तुमिच्छति। तस्मात् मां रक्षितुमर्हसि। मम रक्षणञ्च तव कर्तव्यम्।

असद्भ्यः यदा सतां बाधा जायते तदा सतां परित्राणं करोमीति भगवतः प्रतिज्ञा।

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।"

धर्मसंस्थापनार्थाय सम्भवामि युगे युगे[2]।।"

अतः मद्रक्षणं त्वय्यायत्तमिति रुक्मिणी कृष्णं सूचयतिस्मारयति वा। ,

*इष्टाः सोमयागादयःवापीकूपतटाकादि निर्माणानि। नियमो ;पूर्ताः धर्मकार्याणि ; व्रतानि कृच्छ्र चान्द्रायणादीनि। ,योगः

देवविप्रादिपूजनं इत्येते सद्गतिसम्पादकाः। यदि भवानाराधितो भवतिपूर्वोक्ताः ; इष्टापूर्तादयः सर्वे आचरितप्राया एव।

यतः भगवान् स्वयं यज्ञस्वरूपः। इति श्रुतेः। "यज्ञो वै विष्णुः[3]"

"यज्ञ इज्यो महेज्यश्च क्रतुस्सत्रं सतां पतिः[4]इति भगवन्नामसु दर्शनाच्च। "

भक्तरक्षणप्रकारं जानतोऽपि भगवतेलौकिकवासनया वा प्रेमातिशयेन वा स्वरक्षणोपायमावेदयति अनन्तरोक्तश्लोकत्रये। -

*श्वः नगराद्बहिःगौरीमर्चयितुमहमागमिष्यामि। तदानीं चैद्यादीन् प्रमथ्य राक्षसविधिना वीर्यशुल्कां मां नेतुमर्हसि – "इति।

भगवांश्च तथैवाकरोत्।

---

[1] श्रीमद्भागवतम् -X27 -22 -

[2] भगवद्गीता -IV 8 -

[3] तैत्तिरीयसंहिता 6 - 5 - 1 -

[4] विष्णुसहस्रनामानि

भगवतः लोकमोहनकरणम् सौन्दर्यं अत्र यद्यपि वर्णितम्। तथाऽपि चित्ताकर्षकं कर्म तात्पर्येण वर्णितमिति हेतोः कर्मस्तोत्रम्।

अत्र यद्यपि विवाहार्थं सन्देशस्तथाऽपि प्रपत्तिःआत्मनिवेदनरूपा , भक्तिश्चोपवर्णितेति भगवतः स्तुतिरेवैतत्। अपि च भगवान् रुक्मिणीं भक्तामेव परिगणितवान्। चैद्यादयः दुर्मदान्धाः। तेषां मदापहरणमपि रुक्मिणीहरणे आनुषङ्गिको हेतुः।

कामुकः कृष्णः परस्मैदीयमानां कन्यां अपहृतवानित्यधर्मा शङ्का न कार्या। रूक्मिणी केनाऽपि शिशुपालाय वाचा न दत्ता। यतो जीवति भीष्मके रुक्मी कन्यां दातुं नाधिकारी। अतः न सा तदायत्ता। किञ्च सा न परकीया। इति निषेधस्तु दत्तायमेवान्वेति। "[1] अनन्यपूर्वां" रुक्मिणीविषये नैतत्सङ्गच्छतेइति रुक्मिणीविवाहः धर्मसम्मतः।

लोके ग्रन्थे च सर्वत्र एवमेव व्यवहारो दृश्यते। रुक्मिणी स्वयं ;किमयं राक्षसो विवाहः राक्षसेन विधिना नेतुमर्हतीति सन्दिष्टवती। तथाऽपि बलेन कन्यावतः जयः यदि स्यात् तर्हि राक्षसोविवाहो भवति। यथा महाभारते अम्बादीनां त्रयाणां हरणे भीष्मस्य शत्रुजयः। किन्तु अत्र रुक्मिण्यां श्रीकृष्णः अनुरक्तः। रुक्मिणी च वनिता[2]। अतः गान्धर्व एवायं विवाह इति वक्तुं समुचितम्। यद्वा रुक्मिणः पराभवः कन्यावतः पराभवः इत्यङ्गीकृत्य कथञ्चित् पुराणोक्तिः सङ्गमनीयम्।

अत्र यद्यपि विवाहविषयकत्वात् भगवतः सौन्दर्यवर्णनात् ,भगवदालम्बनात्मकः , कीर्तनाद्यनुभाववतः स्मरणादिभिस्सञ्चारितः रुक्मिणीगतः श्रुङ्गारो ,तत्सौन्दर्योद्दीपनात्मकः व्यज्यते। तथाऽपि –

,पूर्तेष्टदत्तनियमव्रतदेवविप्र"
गुर्वर्चनादिभिरलं भगवान् परेशः।
आराधितो यदि गदाग्रज एत्य पाणिं
गृह्णातु मे न दमघोषसुतादयोऽन्ये ।।"

इति भगवतः कृष्णस्यैव सर्वात्मरूपतया वर्णनाद्भक्तिरेव रसः। स च श्रुङ्गारेण पुष्ट इति संलक्ष्य क्रमविषयः। भगवतः श्रृङ्गारस्य नात्रावकाशः यतः षष्टितमेऽध्याये भगवता

---

[1] " गृहस्थस्सदृशीं भार्यां विन्देतानन्यपूर्वां यवीयसीम्" इति गौतमधर्मसूत्रम्। अनन्यपूर्वां- अन्यस्मै वाचामदत्ताम् - इति मिताक्षरायां हरदत्तः।

[2] या पतिं तस्य गुणादि श्रवणेन जातरागा यदि स्वयं वृणुते सा वनिता। "वनिता जनितात्यर्थानुरागायां च योषिति" अमरकोशः -III- नानार्थ वर्गः 74 -

एतद्विषयस्य निराकरणात्[1]। तथा च रसाभासशङ्कापि एकत्रैवानुरागश्चेदित्य)ुक्तदिशान (बलादाहरणे पाणिग्रहणे च ,कार्या। यतो हि अनुरागाभावाभाव एवात्र वर्णितः। अनुरागाभावे कृष्णस्याप्रवृत्तिर्दृश्यते।

इति धिया तस्याः प्रार्थनामङ्गीकृत्य सा कृष्णेन उधृता। "भगवतैव" अपि च रुक्मिणी स्पष्टमेतत् भगवतः वाक्येषु[2]।

---

[1] श्रीमद्भागवतम् -X पर्यन्तम् 20 प्रभृति 10 - 60 -

[2] श्रीमद्भागवतम् -Xपर्यन्तम् 50 प्रभृति 29 -6 -

**भूमिः– [1]***

नरकासुरवधानन्तरं नरकपुत्राय भगदत्ताय अभयं याचमाना भूमिः कृष्णमेवं स्तौति –

*सर्वान्तर्यामिन्भग !वान् भक्तानुग्रहार्थं भक्तानामभीष्टं रूपं धत्से। अत एव त्वं देवदेवेशः देवानाञ्च ये शासकाः इन्द्रादयः तेषामपि शासकोऽसि। शङ्खस्य पाञ्चजन्यस्य , चक्रस्य सुदर्शनस्यगदायाः कौमदक्याः धरः असि। ,

इत्यत्र अच् इति 'अच् प्रत्यवपूर्वात् सामलोम्नः' पङ्कजं नाभौ यस्यसः पङ्कजनाभः योगविभागात् बहुव्रीहावप्यचः दर्शनात् समासान्तप्रत्ययस्सिद्धः। तत्पङ्कजञ्च ब्रह्मणः तज्जनकत्वात् नारायण एव ज ,उत्पत्तिहेतुः। अतः ब्रह्मा जगत्कारणंगत्कारणम्। जगत्कारण्तवादेव पङ्कजमालीति विशेषणमत्र सङ्गच्चते।

पङ्कजशब्दः सत्कीर्तिसूचकः सत्कीर्तिमयी पङ्कजानां माला यस्य विद्यते पङ्कजमाली। ततःमत्वर्थीय प्रत्ययश्च[2] ,तस्मै नम इत्यर्थः। श्रीधरेण प्रथमं षष्ठीसमासः विवक्षितस्स्यात्। यतः पङ्कजानां माला इति प्रागेव बहुव्रीहौ मत्वार्थीय प्रत्ययस्य निष्फलत्वात्।

पङ्कजनेत्राय इत्यत्र पङ्कजवन्नेत्रे यस्य सः इत्युपमानपूर्वपदो बहुव्रीहिः। तत्र इवार्थेनैव सादृश्ये सिद्दे श्रीधरेण वतिप्रत्ययान्तेनार्थबोधने एषोऽर्थः विवक्षितस्स्यात्। वतिः तेन तुल्यं " "क्रिया चेद्वतिः[3]इति तुल्यक्रियार्थे प्रवर्तते।

तापोपशमनं पङ्कजस्य लक्षणम्। पङ्कजे इव तापोपशमके नेत्रे यस्य सः पङ्कजनेत्र इति साभिप्रायं विशेषणम्।

पङ्कजाङ' एवं्घ्रयेइत्यत्र बहुव्रीहिर्बोध्य 'ः। तत्र वति प्रत्ययेन सुसेव्यत्वं साधारणधर्मतया विवक्षितम्। पङ्कजाङ्कितौ अङ्घ्री यस्य सः इति पक्षे उत्तरपदलोपेन उपमानपूर्वपदो बहुव्रीहिः। यद्यप्ययं शब्दः भगवतः उत्तमं सामुद्रिकालक्षणं सूचयति। तथाऽपि सुसेव्यत्वमेव वक्तुं साम्प्रतम्।

*पुरुषाय ,जगत्कारणाय ,सर्वस्मात् कार्यभूतान् सृष्टेः प्रागेव स्थिताय आदिबीजाय –सर्वज्ञाय ,पूर्णबोधाय ते नमः। वासुदेव शब्दः विष्णुशब्दः सर्वाश्रयत्वं भगवतो बोधयतः।

परमात्मने ते नमः। ,अपरिमेयशक्तये ,ब्रह्मणः जनकाय ,जन्मरहिताय

---

[1] X31 - प्रभृति 25- 59 -

[2] इष्टदिथ्यश्च (अष्टाध्यायी) -V88 - 2 -

[3] अष्टाध्यायी -V115 - 1 -

सृष्टिस्थित्यादिहेतु ,भगवतः गुणत्रयात्मकत्वंत्वं बहुशः प्राक् प्रतिपादितम्[1] ।

एवमेव साङ्ख्ययोगप्रकारेणपाञ्चभौतिकैः पदार्थैः भगवता क्रियमाणा सृष्टिरपि प्राक् , प्रतिपादितः[2] । तत्र जगतः मिथ्यात्वात् परब्रह्मणः विष्णोस्सत्यत्वात् ब्रह्मणः विवर्ते जगति नानारूपदर्शनेन नानात्वभ्रमः लोकेनानुभूयते। किन्तु त्वमद्वितीयः इत्यद्वैतवेदान्तदिशा स्तुतिः।

अयं नरकासुरपुत्रः भगदत्तः भीतः भवन्तं शरणं गतः। अमुमभयप्रदानेनानुगृहाण।

इति धरण्या प्रार्थितः भगवान् भगदत्तमनुजग्राह .

इदञ्च भगवतः दिव्यप्रतिपादकमिति हेतोः दिव्यं स्तोत्रम्। अत्र भूगता भगवद्रतिस्थायी। भगवानालम्बनम्। पुत्रवधात् भीतिरुद्दीपनम्। प्रणामः अनुभावः। नरकासुरस्य संहर्ता हरिरेव तद्वंशरक्षणे प्रभवतीति मतिः। आश्रितान् पालयतीति बुद्धिकृता धृतिःभगवतः पराक्रमसन्दर्शनात् सञ्जातः ,नरकवंशः प्रणश्यतीति भीतिकृतं दैन्यम् , विस्मयश्च सञ्चारिणः। इति भक्तिरससामग्री।

---

[1] उपोद्घातप्रकरणे पृष्टम् 26 -

[2] तत्रैव पृ 32,33 -

**बहुलाश्वः** – [1]*

एकदा कृष्णः स्वभक्तेन जनकवंशजातेन बहुलाश्वनामकेन प्रार्थितः तस्य गृहं ययौ। यदृच्छया गृहमागतं भगवन्तं दृष्ट्वा भगवदनुग्रहं अतर्कितोपनतं आनन्दभरेण सोढुमशक्नुवन् क्रमेण जातवाग्व्यापारः कृष्णमेवं स्तोतुमुपचक्रमे –

*भगवन् त्वं सर्वभूतकर्मणांभूतानां च साक्षाद्द ,रष्टा[2]। सततं त्वच्चरणारविन्दयोः स्मर्तुः मम गृहं प्राप्तोऽसि।

इति यदवोचः तत्सत्यं कर्तुं इदानीमागतो "ते गृहमागच्छामि" पूर्वंऽसि। अपि च तव वचः मे ,न तस्माल्लक्ष्मीः ,न मे कश्चिदस्ति -तस्मात्प्रियतर ,यः मामनन्यचिन्तया स्मरति" प्ियतराइति तद "नो वा ब्रह्मा ,्वचः इदानीं मयि सत्यतयानिरूपितम्। यदाह भगवान् –

"न साधयति मां योगो न साङ्ख्यं तप उद्धव[3]इति। "

*एवं भक्तसुलभस्यएकान्तभक्त्या ?भक्ताननुगृह्णतः तव चरणाम्बुजं को वा विसृजेत् , योजयसि। (नारायणरूपेण) त्वामाश्रितान् त्वं स्वरूपेण

*भवतः यदुवंशेऽवतारः भक्तानां नृणामनुग्रहार्थं त्रैलोक्यपापहरणार्थञ्च। किन्तु यदुवंशः सकलं कीर्तिमवाप्य तव जन्मना त्रिलोकपूज्यो भवतु।

कतिचिद्दिनानि द्विजैस्सह अस्मद्गृहे उषित्वा मम गृहं कुलञ्च !भगवन् !हे नारायण स्वगृहे (अत्र भक्तेः) तव पादरजसा पवित्रं कुरु। इयं बहुलाश्वस्य प्रार्थना।हरेः निवासाभ्यर्थनया सः अर्थायी भक्तः।

अत्र भक्तेः गृहमागतः भगवानालम्बनम्। भगवद्वात्सल्यस्मरणमुद्दीपनम्। अभ्युत्तानसत्कारादयो अनुभावाः। भगवतः निवासाय अभ्यर्थना राज्ञि सञ्जातं हर्षं सूचयति। नारायण एव यदुवंशेऽवतीर्ण इति स्मृतिस्सञ्चारिणः। एवं भक्तिरसपरिपोषः कृतः

---

[1] X पर्यन्तम् 37 प्रभृति 32-86 -

[2] प्रत्यक्षज्ञानेन इह यो विषयं पश्यतिस तस्य साक्षी। साक्षाद्द्रष्टरि संज्ञायाम्। इति इनि प्रत्ययः टिलोपश्च। अष्टाध्यायी -V91 - 2 -

[3] भागवतम् -XI20 - 14 -

**ब्रह्मादिदेवाः– [1]***

कृष्णावतारप्रयोजनं समग्रतया निर्वृत्तमिति मन्वानाः ब्रह्मादयः देवाः पुनः वैकुण्ठगमनाय भगवन्तमनुनेतुं कृष्मसमीपमागत्य तम् तुष्टुवुः। अत्र स्तोत्रमपि दिव्यीकृतम्। हरेश्च दिव्यमहिमा वर्णित इति दिव्यस्तोत्रमिदम्। यद्यप्येते देवाः ज्ञानिनः , परन्तु वैकुण्ठस्य पुनरागमनप्रार्थनाकरणात् अर्थार्थिनः।

*लोकरक्षकज्ञानेन्द्रियैः कर्मेन्द्रियैश्च यस्सर्वधा त्वां शरणं प्राप्य अनन्यगतिस्तिष्ठति ! स मुमुक्षः कर्मपाशैः मुच्यते। तादृशस्य तव पादारविन्दम् नतास्स्मः।

*सत्वरजस्तमोरूपया मायया लोकानां सृष्टिस्थितिलयान् नियम्यसे। तदानीं गुणस्थोऽपि गुणैर्नलिप्यसे। जरामरणादि रहितः आत्मनस्स्वरूपे सुखे सर्वदा स्थितः , मुमुक्षुभिः आत्माराम इति स्तुतोऽसि।

– एवं समादधिरे ,आत्मारामस्य कर्मकरणेन किं प्रयोजनमिति आशंक्य कर्माचरणमपि सत्त्वगुणाश्रितानां भगवति नारायणे एवं मनो निवेशनात् शुद्धान्तःकरणानां ; तत एव प्रवृद्धश्रद्धानां भगवतः कीर्तेरेव वितानाय कर्माचरणं भवति।

तवाङ्घ्रिः अशुभनाश हेतुः। एते सात्वतपुङ्गवाः आत्मविदः त्वामर्चितवन्तः !भगवन् धन्याः बभूवुः। ते च वैकुण्ठप्राप्तये त्रिकालं तव अर्चनं चक्रुः।

त्वद्दर्शनार्थमेव सज्जनाः याज्ञिकाः आहवनीयादौ अग्नौ हविषा जुह्वति।

लक्ष्मी वनमालया पर्युषितयाऽपि स्पर्धते इव तव वक्षस्सेवते। लक्ष्म्याः अपि भागवता एव प्रियतमा इति द्योतयितुमिव त्वं वनमालां न त्यजसि। अत्र वनमालायां भगवत्तत्वं ) ( आरोपितम्।

त्वच्चरणस्यभक्तपक्षपातः प्रसिद्द एवेति स्तुवन्तः प्रार्थयन्ते –

बलिनिग्रहसमये त्रिविक्रमावतारे द्वितीयविक्रमे ब्रह्मलोकं गतः तव पादः केतुरिव असुरसेनायाः भयहेतुश्चाभूत्। तादृशः तव पादः भजतः अस्मान् ,सुरसैन्यानां विजयद्योतकः पुनातु।

---

[1] XI पर्यन्तम् 19 प्रभृति 6 - 6 -

येन कालेन बद्धाः ब्रह्मादयोऽपि नाथहराः पशव इव अस्वतन्त्राः स्वकर्मणि कृतार्थाः भवितुं यं तव पादमाश्रयन्तेचरणः अस्माकमपि शरणं भवतु। ,

सर्वनियामकः कालोऽपि त्वया नीतः इति त्वमेव पुरुषोत्तमः। परमात्मस्वरूपात् त्वत्तः अधिगतवीर्यः पुरुषः अर्थात् जीवात्मा मायायां शक्तिं योजयति। सा माया लोकान् सृजति।

गभीररथः उत्तमपुरुषः त्वमिस इति वदन्तः त्वत्तः पुमान् शक्तिं समधिकृतवानिति मायां ;पुनर्वदन्ति। किमेवं साङ्ख्यानां मते पुरुषोत्तमः पुरुषश्चेति पुरुषद्वयमङ्गीकुरुते स्वीकुर्वता पुरुषेण सृष्टिः क्रियते इति साङ्ख्यैरुच्यते। स्वयं शक्तिमान् पुरुषः पुरुषोत्तमान्तरात् किमिति शक्तिमादत्ते इति संशयः।

अत्र उत्तमपुरुषस्तु कालस्वरूपः पुरुषः। स एव स्वशक्तिं मायायां निधाय सृजति। एवं निहिता शक्तिरेव द्वितीय पुरुषशब्देन व्यवहृतस्स्यात्। किन्तु त्वत्तः प्राप्तवीर्यः इति वर्णनेन पुरुषान्तरमङ्गीकार्य एव। अत एव व्यवहारार्थं द्वितीयः जीवात्मेति अङ्गीकृतः।

*स्थावरजङ्गमात्मकस्य सर्वस्यापि जगतः त्वमेवाधीशः। मायाकृता गुणविक्रिया विकारोपात्ता अर्थचिन्ता गुणाश्रितमपि त्वां न लिम्पति। तादृशालेपनमेव स्मेरावलोकलव ..... इति श्लोके प्रतिपादितम्[1]।

ताः अपि स्त्रियः तवामृतरूपाः कथाः गायन्त्यः गङ्गाद्याः नद्यः इव तव पादमेव प्रपद्यन्ते।

– एवं स्तुत्वा ब्रह्मा पुनः उवाच

भूमेर्भारावताराय अस्माभिरेव पुरा विज्ञापितः त्वं भुवमवतीर्णोऽसि। धर्मश्च त्वया अत्र स्थापितः।

"यानि ते चरितानीश मनुष्यास्साधवः कलौ।
श्रुण्वन्तः कीर्तयन्तश्च तरिष्यत्यञ्जसा तमः।।
यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम।
शरच्छतं व्यतीयाय पञ्चविंशाधिकं विभो[2]।।"

---

[1] " स्मेरावलोकलवदर्शित भाव हारि -
भ्रूमण्डलप्रहितसौरतमन्त्रशौण्डेः।
पत्न्यस्तु षोडशसहस्रमनङ्गबाणै -
र्यस्येन्द्रियं विमयितुं करणैर्न विख्यः।।"
श्रीमद्भागवतम् -XI18 - 6 -

[2] श्रीमद्भागवतम् -XI24,25–6 -

अधुना गर्गशापेन नन्दकुलं यदुवंशञ्च नष्टप्रायमभूत् इत्यागामिनीं मूसलपर्वकथा सस्मार।

श्रीकृष्णोऽपि नाशः इदानीमेवारब्ध इतिएतदद्दष्ट्वा अहमप्यागमिष्यामीति ब्रह्मादीन् , समाश्वासयामास। ते सधिष्ण्यं गताः।

भूलोके ,अत्र श्रीकृष्णरूपः भगवानालम्बनम्। भगवतः प्रत्यागमनप्रार्थना इत्यत्र नमस्कारः "......... नतास्स्म ते नाथ" भगवतानिर्वृताः क्रियाश्च उद्दीपकविभावाः। इति सर्वत्र पुरुषोत्तममहिम्नः स्मरणात् स्मृतिः। "....... त्वं मायया" अनुभावः। सृष्टिस्थितिहेतुर्भगवानेवेति मतिः प्रभृतयस्सञ्चारिणः। भगवद्विषयिणी रतिः स्थायी सर्वत्रानुस्यूता।

# तृतीयोऽध्यायः

## ज्ञानस्तुति प्रकरणम्

**शौनकादि मुनयः[1]***

पुरा कलियुगारम्भे कलिबाधाभ्यः मुमुक्षवः ऋषयः तत्सदृशं प्रदेशं दर्शयितुं ब्रह्माणं प्रार्थयामासुः। ब्रह्मा मनोमयमेकं चक्रं निर्माय" ,तं चक्रमनुसृत्य गच्छथ" इति मुनीनुपदिदेश। ते च तथा जग्मुः। एकत्र हिमवतः पार्श्वे तस्य चक्रस्य नेमिः शीर्णः। तन्नैमिषं क्षेत्रम् नैमिशारण्यमित्यपि कथ्यते। ब्रह्मणः आज्ञया तत्र स्थिताः ऋषयः (ब्रह्मणः) तस्मिन् देशे स्थिताः तपश्चरन्तः तस्थुः।

तदानीं व्यासमहर्षेश्शिष्यः रोमहर्षणस्य पुत्रः "सूतः" सर्वपुराणवित्तत्रागतः। सूतस्यैव 'उग्रश्रवा' इत्यपि नामान्तरम्। पुराणानां वेत्तुः कृष्णतत्वविदः सूतात् विष्णुतत्त्वं जिज्ञासवः मुनयः तमेवं प्रार्थयामासुः –

हे महामुने" !अस्मान् श्रीकृष्णकथाः उपदेष्टुमर्हसी"ति। एवं वदन्त एव श्रीकृष्णस्य महिम्नः तुष्टुवुः –

अत्र स्तोत्रे मुनयः कृष्णतत्वजिज्ञासवः भक्ताः। तेऽपि ज्ञानिनः। स्वयं कृष्णतत्त्वं वदन्ति। कृष्णकथाश्रवणे तृप्तिमनाप्तुवन्तःसूतं पुनः पर्यपृच्छन्। तैश्च नारायणस्य अद्भुतकर्माणि विदितान्येव। तेषां तात्पर्यन्तु "भूरीणि भूरिकर्माणिश्रोतव्यान ,ि विभागशः[2]– " इति भगवतः अद्भुतचरितान्यसङ्ख्याकानि। तेषामाशये प्रथमो भूरिशब्दः लीलाबाहुल्यद्योतकः। द्वितीयस्तु लीलासु प्रत्येकं महत्वद्योतकः। एवमनन्ताः कृत्याः भगवतो विभागशः ते श्रोतुमिच्छन्ति। श्रवणं भद्राय भवतीति तेषां प्रत्ययः। कीदृशं भद्रं तैरवाप्यम्?

केवलं मनोनिर्वृतिरूपमेव। भगवतः कथाश्रवणेन आत्मा संप्रसीदतीति सिद्धान्तोक्तिः स्तोत्रलक्षणमत्र साधयति।

---

[1] । – 1 -13 प्रभृति 23 पर्यन्तम्

[2] श्रीमद्भागवतम् -।11 -1 -

सगुणस्य परमात्मनः सेवां प्रशंसन्ति – भगवान् सात्वतांपतिः लोकरक्षणायावतीर्णः इति महात्मभिस्सर्वैः विदितचरमेव। किन्तुस्वभक्तान् विशेषतः अनुगृह्णन् भगवान् तेभ्यः तत्त्वमुपदिशतीति तेषामाशयः।

सात्वतांपतिरिति यद्यपि वंशविशेषणं तथाऽपि भक्तपरतया व्याख्यातं श्रीधरेण -

"विभागशःश्रवणं तु क्षणमप्यच्युतकथा श्रवणपराङ्मुखत्वनिवारकम्[1]"। एवं विभागशः शुश्रूषवः भक्ताः। तादृशानां भक्तानां रक्षकः नारायणः इति सात्वतां पतिरिति ,विशेषणम्।

'सत्' शब्देन सत्वमूर्तिभगवानभिधीयते। स उपास्यतया विद्यते एषामिति सत्वन्तो भक्ताः। सत्वन्त एव सात्वन्ताः"तदेवं सात्वन्तानां पतिः पालकः भक्तरक्षक इति (स्वार्थे अण्)

।(अणः अश्रवणमार्षम्)

तादृशस्य भगवतः महिमाश्रवणं कृष्णरूपस्यैव ते ज्ञातुमिच्छन्ति। तज्जिज्ञासया - "देवक्यां वसुदेवस्य जातो यस्य चिकीर्षया इति कृष्णावतारप्रयोजनं जानन्तोऽपि विशेषतः ज्ञातुमिच्छन्ति पृच्छन्ति च।

"यस्यावतारो भूतानां" इति श्लोकः भगवतः अवतारप्रयोजनमेव सूचयति।

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत

अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्।।

परित्राणाय साधूनांविनाशाय च दुष्कृताम्। ,

धर्मसंस्थानार्थाय संभवामि युगे युगे[2]"।।

अपि च भगवतः अवतारप्रयोजनं श्रीशुकः एवं प्राह दशमस्कन्धे –

"तृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप।

अव्ययस्याप्रमेयस्य निर्गुणस्य गुणास्ततः[3]"।। इति।

संसार भयविमुक्तिरेव निःश्रेयसम्। नृणां निःश्रेयसार्थाय व्यक्तिरिति श्रीशुकोक्तिः मुनिप्रश्नेन संवदति।

भगवतः सङ्कीर्तनस्मरणादि मुक्तिदायकमिति वदन्ति " -नः प्रशमाय" इति। शमः अन्तरिन्द्रियनिग्रहः[4]। प्रशमस्तु अन्तरिन्द्रियशान्तिः। तथा च शान्त्या बहिरिन्द्रियाण्यपि

---

[1] भावार्थदीपिका -I13 -1 -

[2] भगवद्गीता -IV7,8 -

[3] श्रीमद्भागवतम् -X14 - 29

[4] दमः बाह्यकरणोपशमः -

दम्यन्ते। ततः निस्सङ्गत्वं सिध्यति। भगवतः कथाश्रवणेन मोहव्यावृत्तिः। ततो मनः प्रसादः। ततः लौकिकविषयध्याननिवृत्तिःततो मुक्तिरिति कारणमाला। भगवतः ,ततो निस्सङ्गत्वं , कथाश्रवणं लौकिकविषयध्याननिवर्तकमिति मुनिप्रश्नेन व्यक्तम्। तादृशनिवर्तनमेव जीवन्मुक्तित्वम्। सूतः सज्जनःसज्जनात् सत्कथाश्रवणम्। तेन निस्सङ्गत्वम्। ,

अतः भगवतः कथाश्रवणं निस्सङ्गत्वसाधकम्। आहुश्च –

"सत्सङ्गत्वे निस्सङ्गत्वं निस्सङ्गत्वे निर्मोहत्वम्।

निर्मोहत्वे निश्चलतत्वं निश्चलतत्वे जीवन्मुक्तिः[1]।।"

विषयध्यानमेव नाशहेतुरिति स्वयं प्रतिपादितं भगवता –

"ध्यायतो विषयान् पुम्सः सङ्गस्तेषूपजायते।

सङ्गात्संञ्जायते कामः कामात्क्रोधोऽभिजायते।।

क्रोधाद्भवति सम्मोहो सम्मोहात्स्मृति विभ्रमः।

स्मृतिभ्रंशात् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति[2]।।"

एवं परम्परयां 'प्रशमाय' इति पदं मोक्षहेतुः भगवत्कीर्तनमिति सूचयति। "तुमर्थाच्च भाववचनात्[3]" इति चतुर्थी।

गङ्गाम्भसि भगवतः पादजन्यत्वाद्धेतोः सन्निधिमात्रेण प्राणिनः पुनन्ति। पादोद्भूतस्यैव अम्भसः ईदृशी महत्वसम्पत्तिरिति चेत् – का कथा भगवतो महत्वस्य ?

अपि च भगवत्कथा श्रवणं कलिमलापहम्। कलियुगदोषव्यावर्तकमिति सामान्यतया अर्थः। संसारदुःखोपशमनमिति विशेषार्थः।

अतः ब्रह्मादिभिस्सेव्यमानस्यसकलविश्वस्वरूपस्य भगवतः कथाः श्रोतुमिच्छामः , इति महामहिमरूपपराक्रमोक्तिः। लीलया दधतः कलाः इत्यत्र कलाः ब्रह्मरुद्रादिमूर्तीः इति श्रीधरः। अस्मिन् पक्षे भगवतः सृष्टिस्थितिलयरूप हेतुत्वमपि सूचितम्।

भगवान्नारायणः सत्वगुणं स्वीकृत्य विश्वं सृजति। रजोगुणमाश्रित्य पालयति। तमोगुणमाश्रित्य विश्वं नाशयति।

---

शमः - अन्तः करणोपशमः

तैत्तिरीयोपनिषत् -9 -शाङ्करभाष्यम्

[1] शाङ्कराचार्यकृत भजगोविन्दश्लोकः.

[2] भगवद्गीता -II62,63 -

[3] अष्टाध्यायी -II15 - 3 -

"रजोगुणं समाश्रित्य विरिञ्चिरूपेण भूतानि करोतीति भूतकृत्।

तमोगुणमास्थाय स रुद्रात्मना भूतानि कृन्तीति कृणोति हिनस्तीति भूतकृत्।

सत्वगुणमधिष्ठाय भूतानि बिभर्तीति पालयतिपोषयतीति वा भूतभृत्[1] ,धारयति ,।" इति।

सर्वोऽपि जनः प्रारब्धादि स्वकर्मणा नियन्त्रितः कर्तव्ये प्रवर्तते। मायया बद्धाः लौकिककर्तव्येषु प्रवर्तन्ते। भगवांस्तु सर्वं स्वेच्छया स्वयं मायां प्रवर्तयित्वा सृजत्यवत्यत्ति च विश्वमिति भावः।

कृष्णावतार प्रयोजनप्रश्नेनैव तच्चरित्रप्रश्नोऽपि जात एवेति यद्यपि ज्ञेयम्। तथाऽपि मुनीनां पुनः पुनः शुश्रूषायां सङ्गतिरेवं प्रतिपादिता श्लोकद्वये –

अत्र नारायणस्य सर्वसम्पत्समृद्धित्वं दर्शितमिति विभूतिः। मोक्षदायित्व प्रतिपादनात् सिद्धान्तोक्तिः। "यत् श्रृण्वता" मित्यादौ प्रार्थना चोपपद्यते इति स्तोत्रलक्षणं सुसम्पन्नम। अपि च कृष्णरूपस्य नारायणस्य "सात्वतांपति"रिति विशेषणेन अभिजनस्तोत्रम्। "ततस्सद्यो विमुच्येत" इति दिव्यस्तोत्रम्। "पुण्यश्लोकेड्यकर्मणः" इति कर्मस्तोत्रम्। "लीलां विदधतः" इति विधिस्तोत्रमिति स्तोत्रलक्षणं सुसम्पन्नम्।

अत्रस्तोत्रे प्रायः भगवतः अलौकिकमहिमैव वर्णिता। अतः महिमैव आलम्बनम्। वैष्णवक्षेत्रे सूतेन सज्जनेन समागमः उद्दीपनविभावः। कृष्णलीलावर्णनम्, तन्मयत्वच्चानुभावः। हर्षादयः सञ्चारिणः इति समग्रतया भक्तिरसनिष्पत्तिः।

[1] विष्णुसहस्रनामशाङ्करभाष्यम् पृ 75 -

**सूतः**– [1]*

मुनिभिः कृष्णकथाः श्रावयितुं प्रार्थितः सूतः तेषां प्रार्थनायां कृष्णकथाशुश्रूषायाञ्च सामञ्जस्यं प्रतिपादयितुं स्वयं भगवतः महिम्नः गायति। सूतः स्वयं ज्ञानी। पुराणज्ञानं परम्परया तेन व्यासस्वरूपात् नारायणात् प्राप्तम्। सूतस्य ज्ञानित्वं मुनिभिरेवं प्रतिपादितम्।

"त्वया खलु पुराणानि सेतिहासानि चानघ।
आख्यातान्यप्यधीतानि धर्मशास्त्राणि यान्युत।।
यानि वेदविदां श्रेष्ठो भगवान् बादरायणः।
अन्ये च मुनयस्सूत परापरविदोविदुः।।
वेत्थ त्वं सौम्य तत्सर्वं तत्वतस्तदनुग्रहात्।
ब्रूयुस्स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत।।
तत्र तत्राञ्जसा युष्मन् भक्ता यद्विनिश्चितम्।
पुम्सामेकान्ततश्श्रेयस्तन्नः शंसितुमर्हसि[2]।।"

अतः सूतः ज्ञानी। भगवद्भक्तः। सूतकृता स्तुतिरपि भगवत्सिद्धान्तोक्तिपरा।

सूतकृता स्तुतिः नारायणस्य साधारणमहिमास्तोत्रपरेव दृश्यते। किन्तु मुनिभिः सात्वतः श्रीकृष्णः कथं ज्ञेयः? तस्य कथाः भवता वक्तव्याः इति सूतं प्रति प्रश्नः। सूतोऽपि तानभिनन्दन्" भवद्भिः कृतः कृष्णसंप्रश्नः मनः प्रसादकः भवती'ति मुनिवाक्यानि श्रीकृष्णपरत्वेनैव गृहीतवान्।

सर्वत्रास्मिन् स्तोत्रे प्रवृत्ताः हर्यधोक्षजवासुदेवशब्दाः नारायणंद्वारकानाथञ्च ,वैकुण्ठं , नारायणलीला कथनारम्भे ,प्रतिपादयन्तः। ग्रन्थे श्रीकृष्णस्यैव प्रसङ्गः प्रचलतीति हेतोः ,कृष्णकथाश्रवणे कृष्णस्य महिम्नः हेतुत्वात् ,कृष्णभक्ते कार्यैकत्वात् ,उपोद्घातत्वात् लोकमङ्गलसाधकत्वेन अवसरप्राप्तत्वाञ्च सूतकृतस्तुतेः अत्र सङ्गतिः।

नारायणः भक्तसुलभसाध्यः भक्तिरेव परोधर्मः। धर्मोऽपि द्विविधः। प्रवृत्तिलक्षणः निवृत्तिलक्षणश्च। तत्र प्रवृत्तिलक्षणः वैदिकक्रियारूपः। भगवत्स्तुत्यादि लक्षणस्तु

---

[1] । 6 -2- प्रभृति पर्यन्तम् 35

[2] श्रीमद्भागवतम् -। पर्यन्तम् 9 प्रभृति 6-1 -

निवृत्तिरूपः। तयोः निवृत्तिरूप एव धर्मः वासुदेवे सद्यः फलदायको भवति। यतो निवृत्या इन्द्रियाणां शान्तिःतस्मात् मुक्तिलाभः। यदि स्यात् भगवद्ज्ञानायोपकरोति। अतः धर्मस्य , ज्ञानाङ्गत्वं सिद्धम्।

"तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति। यज्ञेनतपसा ,दानेन ,ऽनाशकेन[1]" इत्यादि श्रुतेः यद्यपि ज्ञानमेव प्रधानम्। तथाऽपि भक्तियोगेनैव ज्ञानसिद्धिरिति वक्ष्यते।

लोकोत्तरे वासुदेवे प्रयोजितः भक्तियोगः नारायणस्य ब्रह्मत्वात् भक्त्या ब्रह्मणि निवेशनादाशु मोक्षफलकं वैराग्यं जनयति।

उपनिषदः नारायणमेव परं ब्रह्म आमनन्ति। अतः नारायणे भक्तिः औपनिषदं ज्ञानं भवति। "सर्वभूतस्थमेकं नारायणं कारणपुरुषमकारणं परं ब्र्हम[2]"। तच्च ज्ञानं अहैतुकं , हेतुवादेन न प्रवाप्यमिति यावत्। हेतुश्च तर्कः। तर्कः क्वचिच्छङ्का निवर्तकोऽपि परब्रह्मण्यप्रयोजकः। उक्तञ्च –

"नैषा तर्केण मतिरापनेया[3]" इति।

प्रवृत्तिरूपो धर्मः यद्यपि सम्यगनुष्ठितः तथाऽपि भक्तेरभावे स सर्वः विफल एव। क्षयिष्णुत्वात् – तदुक्तम् –

"आम्नायाभ्यसनान्यरण्यरुदितंवेदव्रता ,न्यन्वहम्।

मेदच्छेदफलानिपूर्तविधयस्सर्वे हुतं भस्मनि। ,

तीर्थानामवगाहनानि च गजस्नानं विना यत्पद-

द्वन्द्वाम्भोरुहसंस्मृतिं विजयते देवस्स नारायणः[4]।।

लौकिकधर्मोऽपि भगवद्भक्तिं जनयति।

एवं भक्तिहीने कर्ममार्गः निरस्तः। तथैव भक्तिहीने ज्ञनमार्गौऽपि निरस्यते। हरिकथा अमृतस्वरूपा। पिपासुस्सर्वोऽपि जिज्ञासुः "अविद्यया मृत्युं तीर्त्वा विद्यया अमृतमश्नुते[5]। हरिकथावर्जितं औपनिषदं ज्ञानम् अमृतसुखानुभवाय न कल्पते।

---

[1] बृहदारण्यकोपनिषत् -IV22 -4 -

[2] विष्णुसहस्रनामा शाङ्करभाष्यम् 73पृ -

[3] कठोपनिषत् -I9 -2 -

[4] मुकुन्दमाला 25श्लो -

[5] सदेर्धातोर्विशरणगत्यवसादनार्थस्य उपनिपूर्वस्य क्विप् प्रत्ययान्तस्य रूपमुपनिषदिति।

उपनिषच्छब्देन च व्याचिख्यासितग्रन्थप्रतिपाद्यवेद्यवस्तुविषया विद्योच्यते। केन पुनरर्थयोगेन उपनिषच्छब्देन विद्योच्यत इत्युच्यते ये मुमुक्षवो दृष्टानुश्रविकविषयवितृष्णास्सन्तः उपनिषच्छब्दवाच्यां वक्ष्यमाणलक्षणां

अत्र औपनिषदमित्यस्य संसारनाशकमित्यर्थः। अपि च मृत्युभयवारकमित्यपि। अर्थद्वयमेतदतिक्रम्य ब्रह्मप्रतिपादकत्वमपि उपनिषच्छब्दार्थः[1]।

अतः उपनिषच्छब्दः ब्रह्मविद्यायां रूढः। ग्रन्थपर्यायः लाक्षणिकः।

औपनिषदं ज्ञानम् ब्रह्मज्ञानम्। तस्मिन् आनन्दानुभवहेतवः द्रवच्चित्तप्रेमाश्रुपुलकोद्गमाः न सन्तीति भक्तिवर्जितम् ज्ञानं निष्फलमेव। अत्र पञ्चभिश्श्लोकैः लौकिकधर्मानुष्ठानस्य निष्प्रयोजनत्वं दर्शयति –

धर्मार्थकामरूपेषु पुरुषार्थेषु धर्मः अर्थहेतुःअर्थः कामहेतुरिति लोके प्रवादः। , किन्तु तेषामेवंविधहेतुत्वम् न निश्चयेन वक्तुं शक्यते। क्वचिद्धर्मः अर्थहेतुर्नभवेत्। अर्थश्च कामहेतुर्नभवेत्।

"धर्मार्थकामेषु धर्मोऽवरः स्यात्"

इति स्मृतिरपि आचरणे न युज्यते। यद्यपि धर्मेन अर्थलाभःतथा ,अर्थेन कामलाभश्च ,ऽपि अर्थेन कामेन वा तृप्तिर्नजायते।

" न जातु कामः कामानां उपभोगेन शाम्यति।

हविषा कृष्णवर्त्मेव पुनरेवाभिवर्धते[1]"।।

एवं समग्रतया लब्धेऽपि कामे कामोपभोगाय आयुश्शेषो न पर्याप्तः।

"कामस्य नेन्द्रियप्रीतिः"लाभो जीवेत यावता। ,

इति यदुक्तं तद्भक्तेः अवश्यानुष्ठेयतां दर्शयल्लोकसत्यम्। यतः क्षीणे आयुषि कामोपभोगः अकिञ्चत्करः। ते च भोगाः अशाश्वतिकाः। तथा च श्रुतिः –

"श्वो भावा मर्त्यस्य यदन्तकैतत्

सर्वेन्द्रियाणां जरयन्ति तेजः।

अपि सर्वं जीवितमल्पमेव

---

विद्यामुपसद्य उपगम्यतन्निष्ठतया निश्चये ,न शीलयन्ति तेषामविद्यादेः। संसारबीजस्य विशरणाद्धिंसनात् विनाशनादित्यनेन अर्थयोगेन विद्या उपनिषदित्युच्यते - तथा च वक्ष्यति " -निचाय्य तं मृत्युमुखात्प्रमुच्यते इति ," (31 - 1 - 3 - कठोपनिषत्)

पूर्वोक्त विशेषणान् मुमुक्षून् वा परं ब्रह्म गमयतीति ब्रह्मयितृत्वेन योगात् ब्रह्मविद्या उपनिषत्। तथा च - - वक्ष्यति

" ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युः (18- 2 - 3 - कठोपनिषत्) "

कठोपनिषत् 1- 1 -

[1] श्रीमद्भागवतम् -IX14 - 20 -

तवैव वाहास्तव नृत्यगीते[1]।।"

आहुश्च महाकवयः –

"मरणं प्रकृतिश्शरीरिणाम्

विकृतिर्जीवितमुच्यते बुधैः।

क्षणमप्यवतिष्ठते श्वसन्

यदि जन्तुर्ननु लाभवानसौ[2]।।"

अस्तु वा दीर्घायुः। तथाऽपि अतिदीर्घे जीविते को रमेत? अतः लौकिको धर्मः सप्रयोजनोऽवा , अप्रयोजनो वा निरर्थक एव। यतः अमृतत्‌वं त्यागेन जायते।

एवं ब्रह्मज्ञानं निरस्यते?ज्ञानकर्मणोरन्यत् किं वा परायणम् ,वैदिको धर्मः निरस्यते , इति स्वयं सन्दिहानः अवश्यानुष्ठेयम् प्रतिपादयति" -वदन्ति तत्तत्वविदः "... इत्यारभ्य पञ्चभिश्श्लोकैः –

नारायण एव परं ब्रह्म। स एव ब्रह्मेति परमात्मेति ,च गीयते। व्यवहारभेदस्तु लौकिकमतभेदकृतः। नारायणस्य ब्रह्मत्वं भगवत्तत्वञ्च श्रुतिषु बहुधा प्रतिपादितम्। ,

काश्चन श्रुतयः एतत् प्रतिपादिकाः –

"विष्णुर्नामा स वेदेषु वेदान्तेषु च गीयते।

एष एव महान् शब्दो मैत्रेय। भगवानिति[3]।।

नारायणपरं ब्रह्म तत्वं ,नारायणः परः[4]" इत्याद्याः।

अतः परब्रह्मणः हरेः तोषणमेव सर्वधर्मानुष्ठानरूपं भवति। स च मनसा गम्यः। तस्य कथानां शुश्रूषा कार्या। तस्यैव कीर्तनं कार्यम्। स एव पूज्यः ध्येयश्च। वासुदेवकथारतिः पुण्यतीर्थनिषेवणादपि श्रेष्ठतरा। कृष्णभक्तस्य सर्वाण्यशुभानि विनश्यन्ति। तथा हि –

"न वासुदेव भक्तानामशुभं विद्यते क्वचित्।

जन्ममत्यु जरारोगभयं नैवोपजायते[5]।।"

---

[1] कठोपनिषत् -I- 1 - शाङ्करभाष्यम्

[2] रघुवंशम् -VIII87 -

[3] भागवतचन्द्रिका 12 - 2 - 1 -

[4] मन्त्रपुष्पम् कुबेरसूत्रम् -

[5] महाभारतम् - आनुशासनिक पर्वम्

इत्यादि विष्णुसहस्रनाम फलश्रुतिः। – फलान्तरमपि दर्शयति -

वासुदेवभक्तेः जरामरणादिभये अपगते मनः प्रसीदति। ततो विज्ञानप्राप्तिः। विज्ञानात् सङ्गमुक्तिः। मुक्तसङ्गस्य हृदयग्रन्थिः भिद्यते – नश्यतीति यावत्।

"भिद्यते हृदयग्रन्थिःछिद्यन्ते सर्वसंशयाः। ,

क्षीयन्तेऽस्य कर्माणिदृष्टएवात्मनीश्वरे[1] ,।।"

भगवान् श्रीकृष्णः निर्गुणोऽपि त्रिगुणात्मकः। तस्य त्रिगुणात्मकत्वं पूर्वमेव प्रतिपादितम्। सः अधोक्षजः। अधः कृतं अक्षजं ज्ञानं येन सः अधोक्षजः।

"अधो न क्षीयते जातु"यस्मात्तस्मादधोक्षजः[2] , इन्द्रियसुखनिराकर्ता इत्यधोक्षजशब्दार्थः। ध्रुवं वासुदेवभक्तः जितेन्द्रियो भवति।

ये च इन्द्रादयः देवाः ते सर्वे विष्णोरंशोद्भाव एव। अतः सर्वदेवात्मको हरिः यदि सेव्यते तेन सर्वं सुसम्पन्नं भवतीति निरूपयितुं वासुदेवपरत्वं सर्वेषां पदार्थानां प्रतिपादयति।

निर्गुणोऽपि गुणीव आत्ममायया यो भासतेतमधिकृत्य भवद्भिः कृताः प्रश्नाः , श्रीकृष्णमहिमाः गायन् श्रकृष्णं सूतः तुष्टाव। ,लोकोत्तराः इति मुनीनभिनन्दन्

समग्रेयं स्तुतिः भगवतः परमैश्वर्यप्रतिपादिका इति हेतोः नारायणविभीतिरूपा। अपि च नारायणस्य दिव्यलीलागायनी हेतोः दिव्यस्तोत्ररूपा च।

इतः परं विद्यमानेषु श्लोकेषु स्तवांशापेक्षया कथा कथनस्यैव प्राधन्यमिति हेतोःनात्र तेषां परामर्शः क्रियते।

अत्र वासुदेवरूपेण ज्ञातः भगवानालम्बनम्। भक्तेर (अत एव)ाश्रयः सूतः। विप्रपश्नः उद्दीपनम्। भक्तिं विना सर्वोऽपि व्यर्थ इति निर्वेदः। धर्मस्वनुष्ठित इति श्लोके .... तादृशज्ञानात् मतिः। श्रुतमप्यौपनिषदम् इत्यादिभिः द्रवच्चित्तत्वप्रतिपादनात् हर्षः सञ्चारिणः इति भक्तिरसपरिपुष्टिः।

---

[1] मुण्डकोपनिषत् -II8 - 2 -

[2] विष्णुसहस्रनामशाङ्करभाष्यम् पृ 156 -

**नारदः–[1]***

एकदा व्यासमहर्षिः अलब्धमनः प्रसादः चिन्ताकुलः आसीत्। किमर्थमस्य चिन्ता? तस्य अभिजनं तु साक्षाद्ब्रह्मणः उत्पन्नम्। ब्रह्मणो मानसपुत्रः वसिष्ठः ,वसिष्ठात् शक्तिः , पराशरस्त्वस्य जन्मेति हरेरवतारः भगवान् व्यासः। ,शक्तेः पराशरः

"व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम्।

पराशरात्मजं वन्दे"शुकतातं तपोनिधिम्।।,

इति प्रसिद्धानुगीतेः परम्परा। तस्य माताऽपि वसुवीर्य समुद्भवा सत्यवती[2]।

एतादृशस्यापि भगवतः व्यासस्य मनश्शान्तेरभावः। तस्य च कारणं तेनापि न ज्ञातम् इत्याश्चर्यमेव। तथाऽपि लोकानुग्रहचिकीर्षया स्वतत्वंभागवतमाहात्म् ,यंविष्णुभक्तेः , महिमानञ्च नारदमुखात् लोके प्रकाशयितुं भगवतः हरेरयं सङ्कल्प इति वा वक्तुं शक्यते। भगवतः सङ्कल्पनिर्वहणं तु नारदागमनेन निर्व्यूढम्। एवं चिन्ताकुलं सरस्वतीतीरे स्थितं – व्यासं नारदः उपसृत्य एवं पप्रच्छ

"जिज्ञासितमधीतञ्च ब्रह्म यत्तत्सनातनम्।

तथाऽपि शोचस्यात्मानं अकृतार्थ इव प्रभो[3]।।" इति।

नारदेन ज्ञातम्व्यासेन स्वयमङगीकृतञ्च व्यासस्याकृतार्थत्वं सिद्दम्। एवं व्यासेन , स्वयमङ्गीकृते स्वीयनिष्फलत्वे तरणोपायं दर्शयन् भगवन्तं स्तौति। उपदेशोऽपि भगवद्विभूतिवर्णनपरमिति स्तव एव। यः उपदेशप्रकारः एवं भूतः –

"ब्रह्मन्! त्वया भागवतवर्ज्यं सर्वाणि पुराणानि कृतानि। महाभारतसंहिताऽपि गृहीता। तथाऽपि तत्पुराणदर्शनमसमग्रमेव।

यतस्त्वया भारतसंहितायां पुराणेषु च धर्मादयः वर्णिताः। तथाऽपि न वासुदेव महिमा तत्र समग्रतया वर्णितः। महाभारतेऽपि –

---

[1] । पर्यन्तम् 22 प्रभृति 8 - 5 -

[2] " द्वापरे समनुप्राप्ते तृतीये युगपर्यये।
जाते पराशरात् योगी वासव्यं कलया हरेः।।"
श्रीमद्भागवतम् 14 - 4 - 1 -

[3] श्रीमद्भागवतम् -I4 - 5 -

"धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।

यदिहास्ति तदन्यत्रयन्नेहास्ति न तत्क्वचित्[1] ,।।"

इति यद्यपि प्रतिज्ञा कृतानिर्व्यूढा च। तथा ,ऽपि महाभारते न समग्रतया नारायण प्रशंसा कृता। केवलं शान्तिपर्वणि भीष्मकृत स्तोत्रद्वये ,आनुशासिकपर्वणि , – विष्णुसहस्रनामसु च भगवतः महिमा उपवर्णिता। तस्य सर्वव्यापकत्वञ्च सूचितम्

"एको विष्णुर्महाभूतम् पृथग्भूतान्यनेकशः।

त्रीन् लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः[2]।।इत्यादिषु। - "

तथाऽपि शतसहस्रिकायां भारतसंहितायां तत्समुद्रे जलबिन्दुरिव कियत्परिणामः? अतः नारदोक्तिस्सङ्गच्छते।

विष्णुपुराणं तु न व्यासकृतम्। किन्तु पराशरकृतमिति प्रसिद्धिः। हरिवंशस्तु न केवलविष्णुकथात्मकः। किन्तु कथान्तरैर्बहुभिस्सङ्कीर्णः। सोऽपि महाभारतखिल भाग एव। अतः प्रत्येकं भगवतो महिमा वर्णनीयेति नारदाशयः। अत एव "भगवन्महिमा नोपवर्णित" इत्यनुक्त्वा "अनुदितप्रायम्" इत्युक्तम् नारदेन।

यत्र भगवतः कीर्तनमकृत्वा अन्यत्पवित्रं वस्त्विति कीर्त्यतेतन्मनश्शुध्यै न भवति। , तथा ,यथा वायसाः यदृच्छया तीर्थेष्ववगाहन्तेऽपि तीर्थं पवित्रमिति तेषां सङ्कल्पाभावात् न तदवगाहनं तेषां पुण्यहेतुः।

अत्र "उशिक्षयाः" इति पदं पृथक् पृथक् व्याख्यातं व्याख्यातृभिः –

अत्र श्रीधरः – चित्रपदमपि यद्वचो हरेर्यशो न प्रगृणीतःतद्वायसं तीर्थं काकतुल्यानां , – कामिनां रतिस्थानं उशन्ति मन्यन्ते। कुतः मानसाः सत्वप्रधाने मनसि वर्तमानाः हंसाः यतयः यत्र न विरमन्ति कर्हिचिदपि नितरां न रमन्ते। ,

उशिक्षयाः – उशिक्कमनीयं ब्रह्म क्षयो निवासः येषाम्। यथा अद्धाः प्रसिद्धाःहंसाः , मानससरसि चरन्तः कमनीयाब्जषण्डानि विहाय वायसा इव परित्यक्तोच्छिष्ट वििविधचित्रान्नयुक्तेऽप्युच्छिष्टगर्तेकाकक्रीडास्थाने न रमन्त इति श्लेषः[3] ,।

श्रीधरस्यायमभिप्रायः –

उशिक्षयशब्दो श्लिष्टः। उशिक्षयाः मानसाः हंसाः इति प्रथममन्वयः। मनोहरपद्मावासं मानसं सरः निवासः येभगवद्यशोरहितं ) हंसानां ते इत्यर्थः। तादृशा हंसाः ,

---

[1] श्रीमद्भारतम् - आदिपर्वः 33- 56 -

[2] महाभारतम् - आनुशासनिकपर्वः 140 - 135 -

[3] भावार्थदीपिका -I10 - 5 -

काव्यं यदि सरश्चेत् तत्सरःयथा उच्छिष्टादि मलबाहुल्येन दूषितं वायसैराद्दतं सरः यथा न ( प्रविशन्ति तथा इति श्लोषोत्थापिता उपमा।

मतान्तरे तु उशिक्षयाः – उशिकब्रह्म क्षयः – निवासः उशिक्षयाःब्रह्मणि रताः। मानसाः हंसाः मनश्शुद्धिं गताः योगिनः भगवद्भक्तिरहितं जनं काव्यं वा वायसं तीर्थमिव परिहरन्ति। वायसतीर्थशब्दार्थस्तु मनश्शुद्धिराहित्यपर्यवसायीति प्रागेवोदाहृतम्।

अस्मिन् श्लोके हंसशब्दः परमात्मनि योगरूढः। अतः शब्दशक्तिमूलध्वनिः।

"अनेकार्थस्य शब्दस्य वाचकत्वेनियन्त्रिते।

संयोगाद्यैरवाच्यार्थ धीकृद्व्यापृतिरञ्जनम्[1]।।"

वीरराघवीयव्याख्यानं तु –

"उशिक्षयाः – उशिरिच्छा। वश – कान्तावित्यस्मात् कि प्रत्ययेसम्प्रसारणे च , उशिरिति रूपसिद्धिः। वशेः कान्त्यर्थकत्वेऽपि धातूनामनेकार्थत्वात् "वष्टिभागुरिरल्लोपमि"त्यादाविव प्रकृतेऽपि इच्छार्थकत्वं; उशेः कामस्य क्षयः येषां ते उशिक्षयाः निष्कामा इत्यर्थः।

अस्यार्थस्तु सुज्ञेयमेव।

यस्य भगवतः कीर्तने ग्रन्थरूपेण अग्रथितान्यपि भगवतो (अबद्धवत्यपि) कीर्तयन्ति च । यदृच्छया भगवतो नामस्मरणेनैव जनानां ,गायन्ति ,नामानि साधवः श्रृण्वन्ति पापसमूहो नश्यति। यदिते श्रद्धालवः भगवदर्पितमनसः ध्यानं कुर्वन्तितेषां लोकोत्तरा , गतिर्भवतीत्यर्थापत्तिः।

कर्मसन्न्यासिनोऽपि भक्तिहीनाः ज्ञानसम्पन्नाः भवन्तोऽपि तेषां ज्ञानं न शोभते। एवं निष्कारणं कर्म कुर्वाणोऽपि ज्ञानिनःज्ञानं न फलहेतुः। अतः सर्वं कर्म भगवदर्पणं कृत्वा , मनः भगवति निवेश्य सिद्धिं समधिगच्छतीति भावः।

तदुक्तम् –

"न कर्मणामनारम्भात् नैष्कर्म्यं पुरुषोऽश्नुते।

न च सन्यासनादेव सिद्धिं समधिगच्छति[2]।।

---

[1] काव्यप्रकाशः -II19-

[2] भगवद्गीता 4 - 3 -

तस्मादशक्तस्सततं कार्यं कर्म समाचर।

असक्तोह्याचरन् कर्म परमाप्नोति पूरुषः[1]।।"

मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा।

निराशीर्णिर्ममो भूत्वा स्वकर्तव्ये प्रवर्तय[2]।।" इति।

कृष्णद्वैपायन! भवान् सर्वं वेत्ति। उरुक्रमस्य विष्णोः विचेष्टितम् समाधिना अनुस्मर। वासुदेवे भगवति मनो निवेश्य चित्तैकाग्रेण भगवतः लीलाः स्मृत्वा वर्णय। तादृशवर्णनम् न केवलं तव बन्धविमोचनाय अपि तु लोकस्यापि बन्धमोचकं भवति। एवं स्वयं तीर्णः परान्स्तारयतीति लोकोक्तिः त्वयि संयुज्यते।

भगवत्तत्वमजानन्तः निश्चलचित्ताभावेन नानादेवतोपासनं कृत्वा इतस्ततो धावन्ति। एवं बहुदेवताराधने मतेरस्थिरत्वात् मनश्शान्तिर्न लभ्यते। निदर्शनार्थमुपमिनोति - "वाताहतनौरिवास्पदम्" इति। आस्पदं सुस्थिरं स्थानम्। प्रतिष्ठा इत्यर्थः। चञ्चलं मनः प्रतिष्ठां न लभते इत्यर्थः। तदुक्तम् –

"व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन।

बहुशाखाह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्[3]।।"

अच्युतभाववर्जितम् न केवलं निष्फलम् प्रत्युत ,प्रत्यवायजनकोऽपि भवतीति निरूपयति –

भगवद्भक्तिः मुख्यो धर्म इति प्रतिपादितम्। भक्तिरहितं काम्यं कर्म भगवद्व्यतिक्रमहेतुकं सत् शास्त्रोल्लङ्घने पर्यवस्यति। तच्च निवारणीयम्। अभक्तिकादपि कर्मणः कर्मत्याग एव वरमित्यर्थः। भक्तियुतः कर्मत्यागः अमृतत्वाय कल्पते इति पूर्वमेव प्रतिपादितम् " -न कर्मणा"[4].... न प्रजया ,इत्यनेन।

एवं यदि प्रवृत्तिमार्गो निन्द्यते तर्हि निवृत्तिमार्गे स्वक्रियात्यागेनैव परमेश्वरसुखस्वरूपानुभूतेः किं भगवतः यशः कथनेन? इति शङ्का न कार्या – यतः भगवद्भक्तिं विना केवलकर्मानुष्ठानं कुर्वतः भगवद्भक्त्यभावेन भगवत्प्रीतेरनुत्पत्तेःप्रीत्य , उपक्रान्तकर्मणो ,भावे पापनिवृत्यभावात् अनिवृत्ते पापसमुदायेऽपि च्युतिप्रसङ्गात् , स्वकर्मपरित्यागे आरूढपतितत्वप्रसङ्गात्। तथा सति कालविशेषे देशविशेषे च श्रेयः

---

[1] भगवद्गीता 19 -3 -

[2] पूर्वत्र 30 - 3 -

[3] भगवद्गीता 41 - 2 -

[4] महानारायणोपनिषत् 5 - 10 -

प्राप्तिप्रसङ्गाभावेन अधोगतिप्रसङ्गात् भक्तिविरहितकेवलकर्मानुष्ठानेन न कस्यचिदपि पुरुषार्थस्य सिद्धिः [1]।

अतः एतावत्पर्यन्तम् कृतस्य भवद्यत्नस्य भगवत्प्रीतिपादकराहित्यात् वैयर्थ्यमेव। इदानीं भगवद्गुणानुवर्णनेन सफलस्सन् स्वपूर्वचरितान्यपि सफलानि कुरुष्व – इति नारदोपदेशः।

अपि च स्वधर्ममपि त्यक्त्वा हरिपदाश्रयणे हरिः भक्तान् तारयति। यतः सर्वधर्माः वासुदेवपराः। न तत्रस्वधर्मपरित्यागेन पापप्राप्तिः। यतः भगवान् भक्तेभ्यः स्वयमेव मभयं प्रादात् –

"सर्व धर्मान् परित्यज्य मामेकं शरणं व्रज।

अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः[2]।।"

अतः विचक्षणः भक्तिरूपं धर्मं साधयितुं सदा यतेत। तादृशे धर्मे सम्यगनुष्ठिते अधोगतिः कदाऽपि न भवति। लौकिकधर्मानुष्ठाने कदाचिदनुष्ठान भेदेप्रमादाद्वा , – तत्कथं परित्यज्यते ,अधोगतिर्भवेत्। अतः लौकिको धर्मः दुरनुष्ठेयः। धर्मानुष्ठानं सुखहेतुः इत्यपि न शोचनीयम्। सर्वैः जीविभिः यथा दुःखं कालेन प्राप्यते तथा सुखमपि प्रयत्नं विना लभ्यते।

आहुश्च एवं प्राज्ञाः –

"यस्माच्च येन च यथा च यदा च यच्च।

यावच्च यत्र च शुभाशुभमात्मकर्म।

तस्माच्च तेन च तथा च तदा च तच्च।

तावच्च तत्र च विधातृवशादुपैति[3]।।"

ततः सुखदुःखे दैवाधीने इति मत्वा मुकुन्दसेवी जनः तत्परः भवेत्।

एवमाराधितमुकुन्दचरणाय भक्ताय भक्तेस्सुखान्तरं नास्तिन रोचते। यथा , मन्दाकिनीतरङ्गविहारी ,दिव्यपादपसुममकरन्दतुष्टः मिलिन्दः अस्वादुपुष्पान्तरं न सेवते हंसः पल्वलेषु न रमते। तथैव नारायणाङ्घ्रिसेवकः सुखान्तरं नेच्छति।

---

[1] भागवतचन्द्रिका 16- 5 - 1 -

[2] भगवद्गीता -XVIII66-

[3] हितोपदेशः मित्रलाभम् -

त्रिगुणात्मकं जगदपि भगवतः प्रवृत्तम्। तच्च भवानपि जानाति। तथा*ऽपि हरिस्तोत्रमहिमानुवर्णने तृप्तिमनाप्तुवता मया भगवन्महिमैकदेशः पुनः पुनरथिधीयते।

त्वमपि परमात्मनः नारायणस्य चरितं जगतश्शिवायोपवर्णय। गुणोपवर्णनमपि भक्तिपूर्वकं क्रियताम्।

एतादृशोत्तमश्लोकस्य भगवतः गुणानुवर्णनमेव तपसः फलम्। अग्निष्टोमादि यागाद्यनुष्ठानफलंपात्रदानफलञ्चेत्यनेकशः ,तटाकादि पूर्तसंस्थापनफलं सत्यव्रतफलं , – कविभिः विर्णितम्। यतः भगवान् भक्त्या प्रीणाति न तथेतरैः। सुस्पष्टमेतत् प्रह्लादवाक्येषु

"नालं द्विजत्वं देवत्वमृषित्वञ्चासुरात्मजाः।

प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता।।

न दानं न तपो नेज्या न शौचं न व्रतानि च ।

प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम्[1]।।

एवं नारदः विष्णुमहिमावर्णनम् कृत्वा कृष्णद्वैपायने भागवतरचनेच्छां उद्बोधयामास। ततः व्यासः स्वस्थ चित्तो भूत्वा सङ्कल्पे नैव गतव्यथः नारदाज्ञामनुष्ठातुं प्रवृत्तः।

एवं व्यासाय भागवतरचनानुज्ञां दत्वा नारदःभगवद्भक्त्यैव अहमिदानीं देवर्षित्वं , प्राप्तवानिति स्वकथां व्यासं श्रावयामास। बाल्ये एव नारदे समुत्पन्ना भगवद्रतिः स्थायिरूपेण जन्मान्तरेष्वपि न मुञ्चतीति भगवद्रतिरत्र स्थायीभावः। यथाह नारदः –

"तत्रान्वहं कृष्णकथाः प्रगायताम्।

मनुग्रहेणाश्रुणुवं मनोहराः।

ताश्श्रद्धया मेऽनुसवं विशृण्वतः

प्रियश्रवस्यङ्ग ममाभवद्रतिः[2]।।"

अत्र भक्तेराश्रयः नारदः। भगवानालम्बनम्। व्यासप्रश्नः उद्दीपनम्। निरन्तरसङ्कीर्तनादयोऽनुभावाः इति भक्तिरसः स्तोत्रेऽस्मिन् स्फुटं प्रतिपादितः। अपि च पञ्चमाध्यायान्ते केचन पुनरपि व्यासमुद्दिश्य नारदेनोक्ताः कृष्णस्तुतिपराः श्लोकाः वर्तन्ते। , तेऽपि पूर्वं प्रतिपादितां श्रीकृष्णभक्तिं द्रढयन्तीति सर्वेषामेकवाक्यता।

---

[1] श्रीमद्भागवतम् -VII53,54 - 7 -

[2] श्रीमद्भागवतम् -I26 - 5 -

**नारदः *[1]–**

नारदशब्दस्य ज्ञानप्रदाता[1] इत्यर्थः। गान्धारीधृतराष्ट्रवियोगशोकार्तं धर्मराजं सान्त्वयन् तस्मै ज्ञानोपदेशरूपेण सर्वं दैवाधीनमिति प्रतिपादयन् भगवन्तमेवं सौति। स्तोत्रेऽस्मिन् सर्वाणि विशेषणानि यद्यपि भगवत्सामान्यवाचकानितथा ,ऽपि स्तोत्रान्ते कृष्णावतारप्रयोजनवर्णनेन स्तोत्रमिदं कृष्णसम्बन्धीति निश्चेतुं शक्यते।

एष च कथांशः महाभारतेआश्रमवासपर्वारम्भे दृश्यते। सर्वमिदं स्तोत्रं , निर्वेदप्रतिपादनेन ज्ञानबोधकमपि ईश्वरमहिम्नः कीर्तनेन भक्तिरूपमेव।

!राजन्* वनं गतान् गुरूनुद्दिश्य शोकं मा स्म गमः। ईश्वरेच्छा तान् भवतो वियोजितवती। भगवानेव भूतानि संयोजयतिकालः ,वियोजयति च । अत्र नारायणः कर्ता , – उक्तञ्चान्यत्र

"यथा काष्ठञ्च काष्ठञ्च समेयातां महार्णवे।

समेत्य च व्यपेयातां कालमासाद्य कञ्चन।।

एवं भार्याश्च पुत्राश्च ज्ञातयश्च धनानि च।

समेत्य व्यवधायन्ति ध्रुवो ह्येषां विना भवः।।

यथा फलानां पक्वानां नान्यत्र पतनाद्भयम्।

एवं नरस्य जातस्य नान्यत्र मरणाद्भयम्[2]।।"

सर्वे लोकपालाः नासिकारज्जुबद्धाः गावः गोपालेन बलान्नीयन्तेतथैव हरिणा , नियन्त्रिता भवन्ति।एवं कर्मठाः लोकपालाःब्राह्मणाश्च तेषां कर्मभिः बद्धाः ,ऋषयः , परमेश्वरप्रेरिताः कर्मणि प्रवर्तन्ते अतस्ते भगवतः क्रीडासाधनानि।

भगवान् स्वेच्छया जगतां सृष्टिं संहारञ्च करोति। भगवतः क्रीडनकत्वात् जगदिदं न ध्रुवम्। भगवतः इच्छा शाश्वती। ततो जगतः ध्रुवत्वमपि। अतः जगदिदम् आत्ममयमिति फलितम्।

अतः भगवल्लीलया निष्क्रान्तं स्वपितरमधिकृत्य वैक्लब्यम् न प्राप्तव्यम्। वैक्लब्ये तु स्नेहजः मोह एव कारणम्। तस्माद्दैवलीलां ज्ञात्वा मोहं जहीति उपदेशफलम्।

तव पितरः कथं वर्तेरन् इति शोकोऽपि न कार्यः। "अहं गुरून् रक्षामि" इति ते मतिः भ्रमजन्या। काल एव सर्वेषां कारणम्। पाञ्चभौतिकोऽयं देहः कदाप्यवश्यं नश्यत्येव। तस्मात्

---

[1] नारं - ज्ञानं नारं ददातीति नारदः। -

[2] श्रीमद्रामायणम् - अयोध्याकाण्डम् 26,27,17 - 105

भूतांशापायेदेहस्य पञ्चत्वं भवति। तव देहो ,ऽपि पाञ्चभोतिकः। तस्मात् नश्वरः। अजगरेण ग्रस्तः कश्चिदन्यं तादृशमेव रक्षितुं न यतेतयतमानो ,ऽपि रक्षणेऽसमर्थो भवतितद् ,वत् त्वमपि पितृव्यं रक्षितुं नार्हसि।

सर्वोऽपि जीवः अन्यस्य जीवस्य जीवनाधारो भवति। अतः अन्यः यः कश्चदपि जीवः स्वरक्षार्थं परान् ग्रसति।

एतेन सर्वेषां प्राणिनां सर्वदामृत्युग्रस्तत्वं सिद्धम्। अतः द्वैतं सर्वत्र नोपपद्यते। अहमपि भगवत्सदृश एव। अतः शोकमोहातीतः अस्मीति सर्वदा भावयेत्।

श्लोकोऽयं अद्वैत– उभयथा व्याख्यातः। तत्र अद्वैतिनां मते ,विशिष्टाद्वैतवादिभिः,

तदिदं अहस्तसहस्तादिरूपं जगत्स च एक एव ,न ततः पृथक् ,स्वदृक् भगवानेव , – न तु नाना। ननु सजातीयविजातीय भेदे प्रत्यक्षे कुत एतत्तत्राह आत्मनां भोक्तॄणां आत्मा स्वरूपम्। अतो न सजातीय भेदः। अन्तर इति – अन्तरो अनन्तरश्च।

"अन्तर्बहिर्भोक्तृभोग्यरूपश्च भाति। अतो न विजातीयभेदोऽपि। नन्वेकः कथं तथा प्रतीयते? तत्राह – मायया बहुधा भान्तं तं पश्येति[1]।

विशिष्टाद्वैतिनस्तु –

जीव एव जीवस्य जीवनं भवति। अतः भगवतैव जीवानां जीवनव्यवस्था कृतत्वात्। वृद्धाः अनाथाश्च मामृते कथं भविष्यन्तीति चिन्ता न कार्येति भावः।

आत्मनां जीवानां आत्मा अन्तर्यामी। स्वदृक् स्वयं प्रकाशकः। एको भगवान्नारायणः। अन्तरस्सर्वपदार्थान्तर्यामी। अनन्तरः तेषां बहिश्च व्याप्तः। "श्रु – अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः" इति श्रुत्यर्थो अत्रानुसन्धातव्यः। स नारायण एव तदिदं भाति दृश्यमाननिखिलजगद्रूपेण भाति। तं भगवन्तमेव मायया "बहुस्याम्" इति सङ्कल्परूपेण ज्ञानेन। माया शब्दस्य ज्ञानपर्यायत्वोक्तेः तेन ज्ञानेन उरुधा बहुधास्थितं पश्य। अत्र आत्मनामिति जीवभेदः। आत्मेति तेषामप्यन्तर्यामित्वप्रितपादनेन जीवपरमात्मभेदश्च। स्वदृगिति भगवतस्सगुणत्वंअन्तरो ,ऽनन्तरश्चेति अन्तर्बहिश्चेति श्रुत्यर्थविवरणेन जगत्सत्यत्वं तदिदमिति सामानाधिकरण्येन शरीरशरीरि भावप्रयुक्तं विशिष्टाद्वैतम्। "माययोरुधे" प्रतिपादनेन "सोऽकामयत बहुस्यां प्रजायेये"ति श्रुतिसूचनेन तत्प्रकरणसिद्धं निखिल विशिष्टाद्वैतं तत्वञ्च सप्रपञ्चमुपपादितमित्त्यनुसन्धेयम्[2]" इत्यभिप्रयन्ति।

---

[1] भावार्थदीपिका -। -पृ 107 - 51 - 13

[2] भागवतचन्द्रिका पृ 107 ,106 ,51- 13 - 1 -

एवं वेदान्तिभिः बहुधा प्रतिपादितः सर्वभूतोत्पत्तिहेतुः भगवान्नारायणः इदानीमस्मान् सर्वानवति।

अथञ्च सुरद्विषां नाशायदेवकार्यनिर्वहणाय भूलोके जातः। यत् किञ्चिदवशिष्टं , तत्कृत्यमपि निर्वर्तयित्वा वैकुण्ठं यास्यति।

यावत्कालं भगवान् भुविस्थास्यति तावता कालेन युष्माभिरपि जिजीविषा अङ्गीकार्या इति।

नारदवचः श्रृत्वा युधिष्ठिरः तत्सारं हृदि कृत्वा शुचः अजहात्।

अत्र नारायणःआलम्बनम्। "नाहं वद गतिं पित्रोः" इत्यादि युधिष्ठिराक्रन्दनमेव अनुभावः" युधिष्ठिरात् तथा श्रवणमपि उद्दीपनम्। .यन्मन्यसे ध्रुवं लोकं ,इत्यत्र मतिः .... कालकर्मगुणाधीनो देहो ,इति स्मृतिः ......तदितं भगवान् राजन्ऽयं पाञ्चभौतिक' इति निर्वेदस्सञ्चारिणः।

अत्र शोकः युधिष्ठिरे वर्तते। भक्तिरसप्रतिपादनञ्च मुनिनिष्ठतेति भक्तिशोकयोः भिन्नालम्बनत्वात् न विरोधः। यद्वा भक्तिशमयोः शोकोपशमनं फलमिति तद्व्यवधानाद्वा रसद्वयस्य न विरोधः। अथवा शान्त एव अङ्गिभूतः रसः। भक्तिः शान्तस्य अङ्गभूतेति प्रतिपादनेऽपि न काचित् क्षतिः।

**नारदः**–[1]*

नन्दगोकुलस्थितस्य भगवतः द्वादशे वर्षे प्राप्ते कंसवधस्यायं समय इति देवैः प्रेरितः नारदः श्रीकृष्णं कंसवधेद्यमिनं कर्तुं नन्दगोकुलमाजगाम। कृष्णं प्राप्य रहसि तमेवं बोधयामास –

!अपरिच्छेद्यस्वरूप* योगेश्वर! सर्वभूतव्यापिन्! यदुश्रेष्ठ! सर्वेषां प्राणिनां त्वमेव रक्षकः। यतः तेषामन्तस्सूत्रमिव सर्वेषु भूतेषु व्याप्तः। सर्वभूतबुद्धिस्थोऽपि योगिभिरेव गम्यः। सर्वलोकप्रवर्तने साक्षीभूय स्थितोऽसि। अत एव त्वं रक्षकोऽसि।

अत्र कृष्णकृष्णेत्यादरे द्विरुक्तिः। प्रमेयः परिच्छेद्यः। न प्रमेयः आत्मा यस्य अप्रमेयात्मा। तस्य सम्बुद्धिः।

स्वयं स्वतन्त्रः भवान् मायया युक्तः सत्वरजस्तमोगुणान् सृष्टवान्। तैर्गुणैः क्रमशः * तमसा लयश्च त्वया प्रकल्प्यते। ,रजसा स्तितिः ,सत्वेन सृष्टिः

परित्राणाय साधूनांविनाशाय च दुष्कृताम् भवान् भुवमवतीर्णः। ,

एतावत्पर्यन्तं दिव्यस्तोत्ररूपेण भगवतो महिमानं प्रख्याप्य इदानीं अद्भुतकर्माणि स्तौति –

अद्य त्वं केशिनं घोरदानवं हतवान्। तस्य दानवस्य हेषा निस्स्वनेनैव दिवौकसः भीताः। तेषां अभयदोऽसि।

इदानीं कृष्णस्य करिष्यमाणानि अद्भुतकर्माणि ज्ञापयति चाणूरादिवधेन। इतः प्रभृति आस्तोत्रान्तं कथा प्रस्ताव एवेति नैतेषां श्लोकानां व्याख्यापेक्षा।

अन्ते द्वाभ्यां श्लोकाभ्यां पुनर्भगवतः दिव्यं कर्मस्तौति गुणत्रयेण असङ्कीर्णेन - स्वसङ्कल्पेनैव परमानन्दरूपेण प्राप्ताखिलकामं मायानिवृत्तया चिच्छक्त्या ,विज्ञानेन परिपूर्णं नित्यनिर्वृत्तं तंगुणप्रवाहं सृजन्तं भगवन्तं त्वां नमस्करोमि। ,

सर्व भूतानामीश्वरं स्वेच्छया निर्मितलोकजातं लीलार्थं स्वीकृतमानुषदेहं यदुनाथं त्वां नमामि। अत्रापि भगवानालम्बनम्। केशिदानववधमुद्दीपनम्। नमस्कारादयोऽनुभावाः। "त्वमात्मा सर्वभूतानामिति" मतिः" ,स त्वं भूधरभूतानां " ... इत्यादिना स्मृतिः, कृष्णस्य भाविकार्य कथनेप्यौत्सुक्यं ,चाणूरमुष्टिकञ्चैव निहतान् द्रक्ष्ये इत्यौत्सुक्यम् इत्यादयस्सञ्चारिणः।

[1] X– पर्यन्तम् 14 प्रभृति 11 - 37

**नारदः**–[1]*

नरकवधानन्तरं श्रीकृष्णमभिनन्दितुं तत्रागतः नारदः कृष्णमेवं स्तौति –

भगवन्! सर्वलोकेश्वरस्य तव दुष्टसंहारः नाश्चर्यकरः। यतस्त्वमेव लोकस्थित्यै , रक्षायै च स्वेच्छया स्वीकृतावतारः नारायण इति वयं जानीमः। अत एव जगतश्रेयस्साधने यतसे। उक्तञ्च –

"नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप।

अव्ययस्याप्रमेयस्य निर्गुणस्य गुणास्ततः[2]। इति।

निश्चितं श्रेयः – निःश्रेयं[3]। प्रत्यक्षदृष्टं श्रेयस्साधनम्।

जनसमूहस्य तापहरंब्रह्मादि ,भिरपि ध्यानसम्पन्नैर्ध्येयंसंसारमग्नानामुत्तारकं भवतः , – पादाम्बुजमिदानीं दृष्टम्। यथा ते पादयोः स्मृतिः सर्वदा भवेत् तथा मामनुगृहाणइति।

एवं कृष्णं स्तुत्वा उद्धवेन कृतसत्कारः कृष्णस्य गृहान्तरं जगाम। एवं कृष्णमन्दिराभ्यन्तरे सर्वत्र चरन् नानारूपिणं कृष्णं नानास्थलेषु ददर्श। ततः विस्मितः भगवतो मायां जानन्नपि प्रहसन्निव भगवन्तं दृष्ट्वा एवं तुष्टाव –

योगेश्वर! कृष्ण! त्वां योगिनामप्यगम्यं जाने। भवतः पादसेवया अस्माकमेतादृशं ज्ञानं भवति। नत्वस्माकं प्रज्ञाप्रभावेन। अहमिदानीं तव यशसा व्याप्ताल्लोकान् द्रष्टुं यास्यामि। अनुजानीहि – इत्युक्त्वा नारदः निर्जगाम।

---

[1] X17.18.38.39- 69 -

[2] श्रीमद्भागवतम् -X14- 29 -

[3] अचतुरविचतुरसुचतुरस्त्रीपुंस धेन्वनडुहकर्सामवाङ्मनसाक्षिभ्रुव दार गवोष्ठीवपदष्ठीवनक्तन्दिवसात्रिन्दिवाहर्दिवसरजस निःश्रेयस पुरुषायुषद्वयायुषर्ग्यजुष जातोक्षमहो क्षवृद्धो क्षोपशुनगोष्ठश्वाः(214) ------ .

**नारदः**-[1]*

जरासन्धपीडितैः राजभिः प्रार्थितं श्रीकृष्णंयुधिष्ठिरेण प्रारब्धम् राजसूयं प्रति गन्तव्य , – इति इन्द्रसन्देशमादाय नारदः कृष्णान्तिकमुपागत्य तमेव स्तौति

हे भगवन्! तव मायायाः प्रवृत्तिरनन्ता। ब्रह्मणाऽपि दुरत्यया। त्वमिदानीं भस्मना छिन्नः अग्निरिव स्वप्रकाशनमप्रकटयन् सामान्य इव लोके चरसि।

जगतः स्रष्टुःसंहारकस्य तवेच्छा कीदृशीति केनापि ज्ञातुं न शक्यते। त्वां ,नियन्तुः , कोऽपि लक्षयितुं न प्रभवति। लक्षणं हि नाम स भवति। " -येन पुनः पुनः लक्ष्यतेन सकृद ,पि निमित्तत्वाय कल्पते[2]।" लक्षणस्य सर्वत्र लक्ष्यदर्शनेऽपि न निमित्तत्वम्। भगवतः सर्वनिमित्तत्वमिति विलक्षणत्वम्। अतस्स्वरूपेण भगवानचिन्त्यः। तादृशाय ते नमः।

संसारे वर्तमानस्य प्राणिनः मोक्षमार्गः दुर्ज्ञेयः। शरीरमनर्थकारणम्। यतश्शरीरस्थैरिन्द्रियैः पुनः पुनः बाध्यमानः संसारादात्मानं मोचयितुं न प्रभवति। तादृशे मनुष्यलोके मनुष्याननुग्रहीतुं जातः त्वं तेषां मोक्षमार्गद्रष्टा अभवः।

सर्वं लोकतत्वं जानतः तव विज्ञाप्यं न किञ्चिदस्ति। स्वचापलेनाहं नरलोकवृत्तं आश्रावयिष्ये। तव पैतृष्वसेयः युधिष्ठिरः राजसूयेन यक्ष्यते। तस्याह्वानं भवाननुमोदताम्।

तत्र साजसूये नानादेशगताः राजानः त्वां द्रष्टुमागमिष्यन्ति।

तत्रागत्य त्वां पूजयित्वा धन्याश्च भवन्ति। अतः तत्रभवानवश्यं गच्छतु।तव पादस्पर्शेन लोकः पुनीतः। यतः लोकपावनी गङ्गा त्वत्पादमूला।

एवं देवसन्देशमाकर्ण्य उद्धवेन सह मन्त्रयित्वा कृष्णः राजसूयं प्रति गतः। तत्र दिग्विजयप्रस्थाने भीमः कृष्णेन प्रेरितः जरासन्धं द्वैरथं ययाचे। तत्र द्वैरथे जरासन्धः भीमद्वारा घातितः। एवं राजसूयगमनरूपा एकक्रिया द्व्यर्थकरी बभूव। कृष्णोप्येवं जानाति। अतः राज्ञां प्रार्थनाऽपि न मोघीकृता त्युभयत्रापि भगवतस्समता प्रकाशिता।

सर्वत्र नारदस्तोत्रेषु कृष्ण एवालम्बनम्। तत्तत्क्रियादर्शनंमाहात्म्यदर्शनं वा , उद्दीपनम्। प्रणामादयोऽनुभावाः। "तवेहितं कोऽर्हति साधुवेदितुमित्यत्र मतिः तत्र कारणं स्वमायया सृजतीति स्मृतिः"। "नरलोकविडम्बनमाश्रावये इत्यत .....्र अध्यात्मविषये त्वयि एतत् श्रवणं तिरस्करणमपि श्रावयामि इति धृतिश्च सञ्चारिणः। एवं भक्तिरसः सर्वत्र परिपोषितः।

---

[1] X पर्यन्तम् 45 प्रभृति 38- 70 -

[2] " अनुर्लक्षणे" सूत्रे भाष्ये लक्षणस्य लक्षणमेतत् । 83 - 4- 1

**भीष्मः –[1]***

नारदादि महाभागवतैस्समं भक्तेषु परिकीर्तितः भीष्मः भागवतोत्तमः इत्यत्र न कश्चित् सन्देहः। केवलभक्तेषु ये च विशेषांशाः नोपलभ्यन्ते ते भीष्मे लभ्यते इति तेभ्यः अस्य विशेषः।

अयञ्च प्रह्लाद इव भक्तःअप्रतिद्वन्द्वो ,ध्रुव इव भगवत्प्रीतिपात्रः ,नारद इव ज्ञानी , स्वगुरोः परशुरामस्यापि विजेता। अन्यैर्भागवतैरलभ्यम् मरणस्य स्वच्छन्दमपि तस्य ,वीरः विशेषतां प्रतिपादयति।

अयञ्च अष्टसु वसुषु कनिष्ठः। ब्रह्मर्षिणा वसिष्ठेन शप्तस्सन् शन्तनोर्गङ्गायां जातः। अस्य 'शान्तनव' इव पैतृको व्यवहारः। 'गाङ्गेय' इति गङ्गापत्यत्वात्। लौकिकं नाम तु देवव्रत इति। सत्यवतीं शन्तनोः कृते दाशराजात् स्वीकृत्य पितुर्विवाहं चकार। तयोर्विवाहसमये दाशराजेन याचितकन्याशुल्कः स्वराज्यत्यागः ब्रह्मचर्यञ्च पितुः कृते कन्याशुल्करूपेण प्रदत्त इति लोकेन भीष्म इति कीर्तितः। महाभारतसङ्ग्रामे दशमाहनि स्वनाम सार्थक्यं कृत्वा प्रतिदिनम् योधानामयुतं हत्वा दशमे दिने स्वयमस्त्रसन्न्यासं चकार। ततः युधिष्ठिरेण याचितः स्ववधोपायं तस्मै कथयामास। शिखण्डिनं पुरस्कृत्य अर्जुनस्तं शरैर्निपात्यशरतल्पे , तस्यैवाज्ञया पातयामास। एषा सर्वाऽपि कथा महाभारते भीष्मपर्वणि विस्तरेण द्रष्टव्या।

युद्धानन्तरं धर्मराजः राज्यविमुखोऽपि बन्धुभिः बलादभिषिक्तः। एवं विमनस्कं युधिष्ठिरं कर्तव्ये योजयितुं श्रीकृष्णः भीष्मसमीपं निनाय।

अत्र महाभारते भीष्मभक्तेः निकषोपलभूतः कश्चिद्वृत्तान्तः उपनिबद्धः। भीष्मसमीपगमनात् पूर्वं श्रीकृष्णः ध्यानमग्न इव युधिष्ठिरेण दृष्टः। भवान् किं ध्यायति? इति राज्ञा पृष्टः श्रीकृष्णः " -भीष्मो मां स्मरति। ततोऽहं मनसा गतः– " इत्यूचिवान्।

अनन्तरं पाण्डवैस्सह तत्र गत्वा युधिष्ठिराय धर्मानुपदेष्टुं भीष्मं नियोजयामास श्रीकृष्णः। श्रीकृष्णः सर्वधर्माणां वेत्ता। पाण्डवाश्च कृष्णस्य भक्ताश्शिष्याश्च। कृष्ण एव युधिष्ठिराय धर्मानुपदेष्टं समर्थः। तथाऽपि किमर्थं गाङ्गेयः नियुक्त इति शङ्कायाः कृष्णस्यैव समाधानमिदम्। –

"स्वयं किमर्थं तु भवान् श्रेयो न प्राह पाण्डवम्।

किं ते विवक्षितञ्चात्र तदाशु वद माधव।।"

इत्युक्ते वसुदेव उवाच –

---

[1] पर्यन्तम् 24 प्रभृति 16 - 9 -1
पर्यन्तम् 43 प्रभृति 32- 9 - 1

"यशसश्श्रेयसश्चैव मूलं मां विद्धि कौरव।

मत्तस्सर्वेऽभिनिवृत्ता भावाः सदसदात्मकाः।

शीतांशुश्चन्द्र इत्युक्ते को लोके विस्मयिष्यति।

तथैव यशसा पूर्णे मयि को विस्मयिष्यति।।

आधेयं तु मया भूयो यशस्तव महाद्युते।

ततो मे विपुला बुद्धिस्त्वयिभीष्म समाहिता।।

यावद्धि पृथिवीपाला पृथिवी स्थास्यते ध्रुवा।

तावत्तवाक्षया कीर्तिर्लोकाननुचरिष्यति।।

यच्चत्वं वक्ष्यसे भीष्म पाण्डवायानुपृच्छते।

वेदप्रवादा एव  ते स्थास्यन्ति वसुधास्थले।।

यश्चैतेन प्रमाणेन योक्ष्यत्यात्मानमात्मना।

स फलं सर्वपुण्यानां प्रेष्य चानुभविष्यति।।

एतस्माद्कारणाद्भीष्म मतिर्दिव्या मया हि ते।

दत्ता यशो विप्रथेत कथं भूयस्तथेति ह[1]।। " इति।

एवं कृष्णस्यानुग्रहपात्रः भीष्मः सर्वदा धन्यः।

प्रथमस्खन्धे नवमेऽध्याये भीष्मः धर्मराजं प्रति श्रीकृष्णस्तुतिपराणि वाक्यान्यवोचत्। सा स्तुतिः भागद्वयात्मिकेति वक्तुं शक्यते।

धर्मोपदेशानन्तरमागतं उत्तरायणं समीक्ष्य भीष्मः पाञ्चभौतिकं शरीरं त्याक्तुमनाः कृष्णं स्तोतुकामः "इति मतिरुपकल्पिता[2]".... इत्यादिना आरेभे। तत्प्रभृति कृतं स्तेत्रं लोके भीष्मकृतस्तुतिरिति प्रसिद्धम्।

किन्तु तत्पूर्वं श्रीकृष्णगुणादिकं वर्णयन् "न ह्यस्य कर्हिचिद्राजन् पुमान् वेदविधित्यतम्। यद्विजिज्ञासया युक्ता मुह्यन्ति कवयोऽपि हि[3]।।"

इत्यादिना भगवतः श्रीकृष्णस्य परतत्वं प्रकाशितवान्।

---

[1] महाभारतम् - शान्तिपर्वम् - राजधर्म पर्वः  पर्यन्तम् 32 प्रभृति 24

[2] श्रीमद्भागवतम् 32 - 9 - 1 -

[3] पूर्वत्र 16 - 9- -1 -

"इतिमतिरुपकल्पिता "..... इत्यादि स्तोत्रं अधिकतया श्रीकृष्णस्य बाह्यरूपवर्णनपरतयास्वस्य मोक्षप्रदातुः कृतज्ञतापूर्वकतया स्वात्मसमर्पणपरतया कृतम्। ,

भीष्मः परमभक्तः। अपि च योगिश्रेष्ठ इति वक्तुं शक्यते। योगमार्गेण भगवत्सारूप्यं प्राप्तुं सर्वथा प्रयतितवान्। स्वसर्वस्वं ईश्वराधीनं कर्तुं तस्य भक्तिः मार्गदर्शिनी अभूत्। अत एव सः परमभक्तः ज्ञानी च।

कुन्त्याः बन्धुः श्रीकृष्णः पाण्डवाः श्रीकृष्णस्य सुहृदः सन्निहिताश्च। गदापाणिः वृकोदरः गाण्डीवचापधारी अर्जुनःइत्यादि सर्वबलसम्पन्ना अपि तेषामापदस्सर्वे ,सारथिरूपश्रीकृष्णः, –समुपस्थिताः। तदत्यन्ताश्चर्यमिति प्रश्नस्य समाधानमेव भीष्मवचनम्।

तथा च ब्रह्मादयः अपि तत्स्वरूपस्वभावादि विषये मोहं प्राप्नुवन्ति। तेऽपि परब्रह्मणः श्रीकृष्णस्य महत्वादिकं न जानन्ति। सर्वे प्रारब्धपुण्यपापानां फलं सुखदुःखस्वरूपेण लोके अनुभवन्ति। श्रीकृष्णोऽपि तादृशविषये निर्लिप्ततयानिर्विकारतया प्रवर्तते। सुहृदां भक्तानां , विषयेऽपि तस्य तादृशप्रवर्तनं दृष्ट्वा ब्रह्मादयोऽपि मुह्यन्तिका कथा अस्माकम्। ,

वेदान्तवेद्यःवेदसारः परमात्मा ,ऽपि अर्जुनसारथिः भूत्वा पाण्डवानां सहायकस्सन् कष्टानुभवस्थितौ सहचरस्सन् सामान्यमानव इव क्लेशाननुभावितवान्। तादृशपरमात्माऽपि तथा पुण्यपापादि कर्मानुभोक्ता चेत् किमुत पाण्डवानां सुखदुःखानुभवविषये वक्तव्यमस्ति।

"ईश्वरो वा भवेत्कर्ता पुरुषो वाऽपि भारत।

हथो वा विद्यते लोके कर्मजं वा फलं स्मृतम्[1]।।"

इति स्मृतिश्लोकं प्राणिनः पुण्यपापकर्मानुभवमवश्यं भोक्तव्यमितिन , कदाचिदपि स्वेच्छावर्तित्वमिति बोधयति। भगवतः कृष्णस्यापि दिव्यं धाम मनुष्यलोकेऽवतारणात् सुखदःखकर्मानुभवसिद्धिः जाता। भगवतः एतदवस्था – पाञ्चभौतिकरूपं प्राप्तस्य सर्वस्य कर्मानुभवमवश्यमितितदतिक्रमणानन्तरमेव भगवतः , कर्मराहित्यमिति च भवेदिति प्रकटयति। ,अपि निर्गुणत्वं निर्विकारत्वं

अपि च परमात्मा याननुगृहीतुमिच्छति तेभ्यः दारिद्र्यादिकं कष्टं प्रथममनुगृह्णाति – इति विषयस्य –

"यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः।

ततोऽधनं त्यजन्त्यस्य स्वजना दःखदुःखितम्[2]।।

---

1 सुबोधिनीप्रकाशव्याख्या पृ 437 -

2 श्रीमद्भागवतम् -X8 - 88 -

इत्यादि वचनानि द्रढीकर्वन्ति।

ईश्वरः कालकर्माद्युद्बोधयिता अपि कालानुवर्ती सन् स्वमायया लोकं मोहयन् वृष्णिषु कृष्णरूपेण चरति। सोऽयं षाड्गुण्यपरिपूर्णः कृष्णः भगवच्छब्दवाच्यः।

"ऐश्वर्यस्यसमग्रस्य वीर्यस्य यशसस्मृतः।,

ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरिता[1]।।

"आपो नारा इति प्रोक्ताः आपो वै नरसूनवः।

अयनं तस्य ताः पूर्वं तेन नारायणस्स्मृतः[2]।।

इति स्मृत्युक्तः जलशायी भगवान् सोऽयमेव। सर्वेषामवताराणां मूलभूतस्य नारायणस्यापि मूलभूतत्वं" विश्वहेतुत्वं विराट्स्वरूपत्वञ्च ,आद्यः पुमान्" इत्यनेन व्यज्यते। अर्थात् सारालङ्कारः[3] व्यज्यते; अलङ्कारध्वनेः उदाहरणमेतत्।

एष कालरूपः कृष्णः आद्यः पुरुषोत्तमः। स एव नारायणःब्रह्माण्डविग्रहः। स , प ुमान् स्वराट्। स्वशरीरे भारप्रतिभा**वे,** तन्निवारणार्थं समागतः यदुषु प्रविष्टो वर्तते।

अनेन कालस्य कृष्णत्वंपुरुषोत्तमस्य ,भगवतः पुरुषोत्तमत्वं ,तस्य भगवत्वं , स्वराट्पुरुषत्वमिति क्रमः व्यज्यते।

अयं श्रीकृष्णः आत्मानं कोऽपि न जानाति तथा मायया नरचेष्टाः ,लोकं व्यामोहयन् सर्वथा भगवत्वं संगोप्य सर्वान् भक्षयितुं चरति[4]।

एतादृशं परमपुरुषं शिवः नारदश्च जानाति। तत्स्मरणादेव लयकरोऽपि शिवः कल्याणरूपःअभवत्।

तथैव "महर्षीणां भृगुरहं"देवर्षीणाञ्च नारदः[5] , इत्यादिनानारदस्य देवर्षित्वात् , नारं द ,नारायणांशसम्भूतत्वात्दातीति विग्रहेण नारशब्दस्य ज्ञानरूपत्वात्ज्ञानप्रदानेन , भगवतः यथार्थस्वरूप वेद्यत्वात् सः नारदः ,अज्ञानहननेन सर्वज्ञत्वात् ,अज्ञानहननत्वात् परमात्मानं जानाति।

---

[1] विष्णुपुराणम् VI74 - 5 -

[2] मनुस्मृतिः 10 - 1 -

[3] कुवलयानन्दम् 178 -पृ

" अत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते।"

[4] सुबोधिनी व्याख्या पृ 444 -

[5] श्रीमद्भागवतम् -XI – 14- 16

एवमेव कपिलोऽपि नारायणांशसम्भूतत्वात् (एकविंशत्यवतारेषु अन्यतमत्वात्) प ,प्रकृतिपुरुषविवेकित्वात्रमात्मस्वरूपं जानाति।

एवञ्च सत्वरजस्तमोरूपत्रिगुणातीतानामेव परमात्मा ज्ञातुं शक्य इति भीष्माचार्यवचनेन व्यासः श्रीकृष्णस्वरूपं प्रपञ्चयति।

"यं मन्यसे " .... इति श्लोके परमात्मनः बन्धुत्वप्रियमित्रसौहृदादितः क्रमात् साचिव्यदौत्यसारथ्यादि नीचकर्मादिषु नियुक्तत्वं दर्शितम्।

दौत्यसारथ्यादि क्रियाकृतं मतिवैषम्यं सर्वात्मकत्वात् श्रीकृष्णस्य नास्ति। अर्जुनस्यापि आत्मा स एव। सारथिः रथी च स एव। चिदचिच्छक्तिमतःसर्वत्र तुल्यतया , प्रकृतिपुरुषाद्यात्मकम् ,पश्यतः तस्य समदृशत्वात् सः अद्वयः। देहात्मभ्रान्तिरहितस्य उच्चावचम् स्वनियाम्यकतया एकरूपं पश्यतः भगवतः ,द्वितीयाभावादेव गर्वरहितस्य , सामान्यपुरुषेषु वर्तमानम् मतिवैषम्यं कदा ,रागादिशून्यस्य श्रीकृष्णस्यऽपि किञ्चिदपि न प्रतीयते।

हे धर्मराज! अनन्यभक्तेषु परमात्मनः वात्सल्यमनिर्वचनीयम्। तादृशभक्ताः यूयम्। अहं न तादृशभक्ताग्रणीः। तथाऽपि हे युधिष्ठिर! मम विषये तस्यानुकम्पां पश्य। आनन्दमयब्रह्मस्वरूपः सः बीभत्सितं मरणासन्नं मां द्रष्टुमागतः। एतादृश समये सर्वे बान्धवा विमुखा भवन्ति।

अपि च मत्सदृशः अपराधी भक्तद्रोही" शत्रुपक्षपाती च नास्ति। ,प्राणत्यागसमये भक्तो भवति दुष्टः" इत्यादि लोकोक्त्यातादृशभक्ताभासं मां आत्मसाक्षात्कारेण उद्धर्तुं , स्वयमागत इत्यनेन तस्य दयास्वभावः स्पष्टी भवति।

यस्मिन् भगवति भक्त्या मनः निक्षिप्यनारायणादि नामादिकं तद्रूपञ्च कीर्तयन् , समाहितचित्तः योगी संसारबन्धहेतुभूतैः पुण्यपापरूपकाम्यकर्मभिः विमुक्तो भवति। नामकीर्तनमेव कामकर्मविमोचनद्वारा निःश्रेयसफलकंकिमुत तव साक्षाद्दर्शनं लब्धवतः , मम विषये किं वक्तव्यमिति भीष्माशयः।

स्वच्छन्दमृत्युः भीष्मः उत्तरायणकालमागतं दृष्ट्वा पुनः भगवन्तं स्तौति –

देवानां वस्वादीनामपि देवः पूज्यः पूर्णः देवदेवः ममापराधं क्रौर्यञ्च स्मृत्वा भयङ्कररूपेण मा तिष्ठतु। प्रसन्नहासारुणलोचनयुक्तवदनाम्बुजस्सन् मम चित्ते तिष्ठतु।

धर्मादि चतुर्विधपुरुषार्थप्रदसमर्थः चतुर्भुजः मम मरणसमयपर्यन्तम् मम दृष्टिगोचरो भूत्वा तिष्ठतु।

अनेन अजुनादिभिस्सर्वैः द्विभुजयुक्तकृष्णरूपेण दृष्टःभगवान् भीष्मेण चतुर्भुजतया उपासनादि ध्यानविषयीभूततया दृष्टः। सर्वदा भीष्मस्य दृष्टिः श्रीकृष्णविषये तादृश्यैव। परमात्मरूपेणैव कृष्णं यः भावितवान्। "अन्ते या मतिः" इति सिद्धान्तात्- ,

"यो यो यां यां तनुं भक्तश्श्रद्धयाऽर्चितुमिच्छति।

तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् [1]।।"

इति गीताश्लोकेन च यः भक्तः यद्रूपेण भक्त्या भगवन्तं ध्यायतितस्य तथैव , इत्यर्थो - भगवान् प्रत्यक्षो भवतिऽत्र स्पष्टीभवति। अत एव भीष्मेण कृष्णः अन्त्यकाले चतुर्भुजरूपविष्णुरूपेण दृष्टः।

विशुद्धया धारणया भगवतः ईक्षानुग्रहेण च गतायुधव्यथो भीष्मः निवृत्त सर्वेन्द्रियविभ्रमः – स्तोतुमारेभे (एवः)

काम्यं कर्म विनिन्द्यते विज्ञैः। किन्तु भगवति कामनाअथवा मोक्षकामना अनुमोदते , सर्वज्ञैः।

प्रकृते भीष्मस्य रतिः भगवदासक्ता भगवदर्पणरूपा च। निराकारो निर्गुणः परमात्मा साकारो भूत्वा नामरूपे व्याकृत्य साधारणजीववत् सञ्चार्य पुनः क्रीडानन्तरं परमात्मत्वेन यदवभासतेतदेषा पद्धतिः भीमस्तुत्या निपुणं निरूपितम् महर्षिणा व्यासेन। - ;

"इति मतिरूपकल्पिता– " इति श्लोके इति शब्दः हेत्वर्थे प्रकरणार्थे वासमाप्त्यर्थेवा , – उपकल्पिता ,प्रवर्तितः। मननशीला बुद्धिः मतिः विषयीकृता अथवा उपायनीभूता। इति ।

मरणसमये कृपाभवेन समीपमायान्तं श्रीकृष्णं प्रति यत्किञ्चिदुपायनम् दातुमुचितमिति बुध्या मतिरेव उपायनत्वेन कल्पिता भीष्मेण। विष्णुमननशीला विगततृष्णा , निष्कामा बुद्धिः उपायनी भूता। ,विष्णौ तृष्णायुक्ता ( विः पक्षिः परमात्मनोः इति कोशात्[2])

"भूमात्वेव विजिज्ञासितव्यो; यो वै भूमा तत्सुखं; नाल्पे सुखमस्ति[3]इति श्रुतेः -" ;षडैश्वर्यपूर्णे भगवति ,यादवश्रेष्ठे ,तादृशपरमपुरुषे ,यदपेक्षया अन्यत् महत्वं नास्ति

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्[4]– " इति श्रुत्या क्वचित् सृष्ट्युपक्रमसमये , नानावनलीलां कर्तुं निजामचेतनशक्तिं प्रकृतिमधिष्ठाय स्थितवति।

---

[1] भगवद्गीता 21- 7 -

[2] वैजयन्ती कोशः -VIII – 1 -60

[3] छान्दोग्योपनिषत् -VII 1- 13 -

[4] सिद्धान्तप्रदीपव्याख्या 451 (श्रीमद्भागवत महापुराणम्) -पृ

"यतो वा इमानि भूतानि जायन्ते[1]" इत्यादि श्रुत्या भवप्रवाहस्य मूलकारणे परमात्मनि मतिः भीष्मेण स्थापिता।

स्तुतिप्रारम्भे श्रीकृष्णस्य अत्यन्तमधुररूपं वर्णयति। यद्रूपं महाभारतयुद्धसमये भीमस्य हृदि निश्चलतया मुद्रितम्। तद्रूपम्तत्समयञ्च स्मरन् तादृशार्जनसखे पार्थसारथौ , अनुरागयुक्ता रतिश्चास्तु इति अन्त्यकालमनोरथम् स्तोत्ररूपेण ,प्रार्थनायुक्ता मतिः विशदयति भीष््मः।

तमालवृक्षवन्नीलंतथा ,ऽपि कमनीयं वपुःप्रातःकालिकस्वच्छ रविकिरणा इव , कृष्णे फलाभिसन्धिरहिता अहैतुकी रतिः ,कुन्तलजालैरावृतमुखपद्मे ,पीतवर्णाम्बरं दधाने दृढं तिष्ठतु।

अत्र विशिष्टे जयः येषां ते विजयाः। अतः करणादि जेतारःये ते विजयाः। ते सखायः , यस्य सः वि्जयसखा।

अपि च विजयो यस्य सः विजयः। विजयस्य सखा विजयसखाः (राजाहस्सखिभ्यष्टप्) ,सर्वदुर्लभा ,इत्यादि विग्रहे विशिष्टविजयसखे श्रीकृष्णे अलौकिकी परमा प्रीतिः श्रीकृष्णेतरविषयप्रयोजनरूपदोषशून्या रतिः अस्तु। ,तत्वरूपा ,भगवदेकनिष्ठा

युद्धसमये अर्जुनरथोपरिस्थितस्य कृष्णस्य पीताम्बरद्वयं सूर्यकिरणसम्पर्कात् पीतमिव भीष्मेण दृष्टम्।

"तमालवद्वर्णो यस्यौत्पत्तिकौ निरतिशयः सदैकविधः तमालः वृक्षेषु नीलवर्णः। अनेन वर्णे एतत् ज्ञापितं सर्वथा परहितजनकमिति। रविकरवत् यद्गौरं वरमम्बरं यस्य भगवतः सर्वमुक्त्यर्थं प्रादुर्भूतस्य पीताम्बरमाच्छादकमिति दुष्टत्वं न शङ्कनीयम्। सूर्यरश्मयःघटादौ पतिताः तान् प्रकाशयन्त्येव। न तदाच्छादका भवन्ति। तथा पीताम्बरं परमानन्दं प्रकाशयति यथा वेदार्थं प्रकाशयत्येव। वेदानां प्रार्थनया अस्मदावेष्टितो भवान् तिष्ठतु। वेदाः ) पीताम्बरत्वमापन्नाः भगवन्तमाच्छाद्य तिष्ठन्तीतिअप्राकृतत्वञ्च ,अनेन व्यापकता ( उक्ता। रविकरं गौरवरं आकाशः वपुरिति आकाशशरीरं ब्रह्मेत्युक्तम्।

अलकाः चूर्णकुन्तलाःतेषां कुलैः आवृतम् आननाब्जं मुखकमलमिति लौकिको ,ऽर्थः।

अलमत्यर्थं ककुलैः आनन्दसमूहैः वृतम् आसमन्ताद्वेष्टितम् करचरणादिरूपेण स्थितं ,आननं आसमन्तात् ननं सद्रूपम् अब्जसूर्यचन्द्रनक्षत्र लक्ष्मीविद्युन्मेघादिरूपं , ' आनन्दावयवे आकाशशरीरे ब्रह्मणि दन्तनेत्र भावापन्नानि सूर्यादीनि अस्येत्युक्तम्।वम्' अमृतं पुष्णाति सर्वेभ्यः प्रयच्छतीति "वपुः" परमान्दस्वरूपम् इत्यादि। ....

[1] तैत्तिरीयोपनिषत् 1- 3 -

अनेन सत्वगुणमिश्रसत्वावस्था उक्ता। एतस्याः सात्विकसात्विकीत्वं तु सर्वकमनीयतया सुखजनकत्वेन प्रकाशकत्वेन च सत्वकार्यकरणात् ज्ञेयम्[1]।"

विलसत्स्वर्णकवचयुक्तः शय्यास्यानीयः श्रीकृष्णः अच्छेद्यत्वाभेद्यत्वेऽपि असुरमोहनाय मम तीक्ष्णशरैः विभिद्यमानत्वम् यक्तःयुद्धभूमौ , तुरगखुरनिपातोत्थितधूम्रवर्णरजोभिः कलुषितकेशैः श्रमया स्वेदबिन्दुभिः अलङकृतास्योऽपि भक्तवात्सल्यात् युद्धे निश्चलत्वेन स्थिते कृष्णे मम रतिरस्तु।

"असङ्गश्चाव्ययोऽभेद्योऽ

बिर्ग्राह्योऽशोष्य एव च।

विद्धोऽसृगार्चितो बद्द ,

इति विष्णुः प्रदृश्यते।"

"असुरान् मोहयन् देवःक्रीडत्येष सुरेष्वपि। ,

मानुषान् मध्यया दृष्ट्या न मुक्तेषु कथञ्चन।।[2]"

इति स्कन्दपुराणवचनात् विष्णुः अभेद्यः"अनिर्ग्राहय इति ज्ञायते। ,

दैत्यवत् आसुरभावेन युद्धसमये भीष्मः कृष्णरूपविष्णुविषये निशितशरपीडनेन अपराधकृदपि भक्तवात्सल्यवान् सः भीष्ममनुग्रहीतुमागतः। तादृश दयासमुद्रे कृष्णे अनन्यपूर्वा रतिरस्तु – इति भीष्मस्य वेदना।

"युद्धार्थं इन्द्रियादिभिस्सह तुरगाणां – सूर्यादीनां वा यद्रजः कामः रजोगुणो वा; विधूम्राः विशेषेण धूसराः ये सकामाः कालवशाद्वा सकामाः कालपरिच्छेदकाः ह्यग्नादयः , "अग्निवद्धि ".... इत्यादि श्रुतिभिः तेषां तुरगत्वं ,वेदनां चक्रिपुत्रदाहादौ ते विष्वक्कशाश्च , तेन लुलिताः मिलिताः ऐक्यभावं प्र ,ब्रह्मविदः सूर्यादिमार्गगामिनःाप्ताः ते च ते श्रमवार्यलङ्कृताश्च गङ्गाजलपूताः ब्रह्मशिवादयः तेऽपि आननो यस्य;आसमन्ताद्रूपे वा , अनेन महासामर्थ्यसूचितं कालरूपवञ्च"[3] ...।

भक्तिर्हि अन्तःकरणसाध्याआत्मसाध्या वा। तदुभयं भगवति चेत्तदा भक्तिस्तत्र , – भवति। अपि च

---

1 सुबोधिनी व्याख्या पृ 455 -

2 (वंशीधरकृता व्याख्या) पृ 45 - भावार्थदीपिका ----

3 सुबोधिनी व्याख्या पृ 456 -

"सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत।

यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान्[1]।।"

इति युद्धप्रारम्भसमये अर्जुनवचः श्रुत्वा पाण्डवकौरवबलयोर्मध्ये रथं स्थापयित्वा अर्जुनस्य सख्यभावेन कियती सहायता कृता। दुर्योधनसैनिकानामायुः केवलमक्ष्णा कालदृष्ट्या हृतवान्। न केवलं सैनिकानामायुः। -

"असौ द्रोणोऽसौ भीष्मोऽसौ कर्ण" इति तत्तत्प्रदर्शनच्छलेन दृष्ट्या एव सर्वेषां आयुराकृष्य विजयस्य जयं सम्पादितवान्।

न केवलं शत्रूणामायुर्हरणेनैव जयं ,अपि च दूरस्थितसर्वसेनासमूहं , – पुरःस्थितभीष्मादीन् आप्तबन्धून् दृष्ट्वा

"दृष्ट्वेमं स्वजनं कृष्ण; युयुत्सुं समुपस्थितम्।

सीदन्ति मम गात्राणि मुखञ्च परिशुष्यति[2]।।"

इति प्रभृति –

एवमुक्त्वाऽर्जुनसंख्ये रथोपस्थ उपाविशत्।

उसृज्य सशरं चापं शोकसंविग्नमानसः[3] ।।"

इति पर्यन्तं स्वजनवधाद्विमुखस्य अर्जुनस्य 'कुमति ,जगदुद्धरक ,' स्वतत्वज्ञानरूपकश्री गीतोपदेशेन अहरत्। ,

अनन्तरभीष्मोक्तवाक्येषु "यमिहनिरीक्ष्य हताः गतास्स्वरूपम्" इयादिना दुर्योधनसैनिकानांतथाविधा ,विष्णुसारूप्यमुक्तिः आयातेति स्वस्य तादृशादृष्टः , मृतिश्च नायातेत्यसंतृप्तिः प्रतिभाति।

महाभारते भीष्मपर्वणिगीता प्रस्थावसम ,ये च शोकमोहकलुषितस्यार्जुनस्य आत्मविद्यां प्रकाशयन् तस्य "कुमतिं" अहरन् यः श्रीकृष्णः पूर्वं दृष्टः सः भीष्मेणात्राभिवर्णितः।

"द्रोणञ्च भीष्मञ्च जयद्रथञ्च।

कर्णं तथान्यानपि योधवीरान्।

---

[1] भगवद्गीता 21- 1 -

[2] भगवद्गीता 29 - 1 -

[3] भगवद्गीता 47 -1 -

मया हतान्स्त्वं जहि मा व्यथिष्ठाः

युध्यस्व जेताऽसि रणे सपत्नान्[1]।।"

इति भगवद्गीतावाक्यं भीष्मवचसां उपोद्घलकं भवति। 'कुमति' निवारण पदेन -

"य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।

उभौ तौ न विजानीतः नायं हन्ति न हन्यते [2]।।"

इत्यादि वचनं समन्वेति।

"नापितेन क्षोरवदत्र समाधानम् – भारायमाणाः क्षत्रियाः श्मश्रादिरूपाः। अर्जुनश्च नापितपूपः। आत्मविद्या स्वस्य विद्या ममैव ह्रियते। मम च हितं ते मयि जडांश एव दूरी क्रियते मुक्ति दानार्थमितितस्मादेवं विधे न दोषः। अत एव गुरुत्वाच्चरणरतिं प्रार्थयते। ,

परं गीयते इति परमः। तस्येति; स एव परः परमावस्थां प्राप्तस्य इति वा[3]।"

आत्मविद्योपदेशेनयुद्दकारणेन च अस्याः अवस्थायाः सात्विकराजसत्वं ज्ञेयम्। ,

भगवान् स्वस्मादपि स्वभक्तं उत्कर्षयतीति वचनम् भीष्मविषये प्रत्यक्षतया दृष्टम्। "अशस्त्रस्सन् केवलसहायमेव करिष्यामि" इति हि कृष्णवचनम्। "कृष्णेन शस्त्रं धारयिष्यामि– " इति भीष्मवचनं ऋतं कर्तुं भक्तं भीष्मं असत्यवचनात् परित्रातुं स्वप्रतिज्ञामपि विहाय असत्यवादित्वं स्वस्मिन्नारोप्य भक्तवात्सल्यं प्रकटीचकार कृष्णः।

आततायी धर्मविप्लावकः। भीष्मः कथं धर्मविप्लावकः इति शङ्का भीष्मपर्वारम्भे पाण्डवाः कौरवाश्च एकत्र समाविष्ठाः युद्धधर्मानिश्चयं चक्रुः[4]। एते च धर्माः स्वयं भीष्मेण उल्लङ्घिताः। यतः कृष्णमेवं द्रष्टुमीहते भीष्मः। अतः "सारथिः न हन्तव्य" इति कृतो धर्मः गाङ्गेयेन स्वयमतिक्रान्तः। अतः तृतीयदिवसयुद्धेनवमदिवसयुद्धे च कृष्णः धृतायुधो ,ऽभूत्। अतःभीष्मः विनयातिशयेन दोषं स्वस्मिन्नारोपयन् "आततायिनो मे– " इति वदन् तृतीयदिवसीयं युद्दमनुस्मरति[5]।

यः इभं हन्तुमुद्‌युक्तो सिंह इव रथातिवेगेनावप्लुतत्वात् गर्भस्यभुवनभारेण चलत् गतोत्तरीयः मां हन्तुमभिप्रवृत्तः सः एव कृष्णः मम गतिरस्तु।

---

[1] पूर्वत्र -XI – 34

[2] पूर्वत्र19 -2 -

[3] सुबोधिनी व्याख्या पृ 456 -

[4] महाभारतम् - भीष्मपर्वम् पर्यन्तम् 34 प्रभृति 2 - 1 -

[5] पूर्वत्र 69 प्रभृति 62 - 55 -

गतोत्तरीयपदेन भारकम्पितां भूमिं मा भैषीः इति शिरसि हस्तप्रदानेन इव समाश्वासनम् कृतम्।

यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनः[1] ।" इति श्रुत्वा भीष्महननरूपमोक्षप्रदानं श्रीकृष्णस्य ओदनं भवति। किन्तु उत्तरीयाभावे ओदनस्य भीष्मस्य ,निषिद्धत्वात् (भोजनस्य) अहङ्कारत्वात् ज्ञानशून्यत्वात् मोक्षानर्हत्वात् तदा श्रीकृष्णेन भीष्महननम् न कृतमित्यंशो गतोत्तरीयपदेन ध्वनितः।

"अभिससार" इति पदेन प्रेम्णा अभिसरन्तं नायकं दृष्ट्वा नायिकाया इव भीष्महृदयेन तद्युद्धसमयेऽपि अपारसुखमनुभावितमिति व्यज्यते।

मद्बाणैः पीडितः रक्तस्रावी सन् अर्जुनेन "स्वप्रतिज्ञां पालय भगवन्" इति संप्रार्थ्यमानोऽपि लोकैः मद्वधार्थमागत इव अवलोकितः कृष्णः मद्वाक्यपरिपालनार्थं माम् असत्यवचनात् त्रातुमेवागतः।

विजयस्य रथ एव कुटुम्बः। तत्कुटुम्बरक्षणार्थमेव धृतप्रग्रहः तच्छ्रिया अत्यन्तमनोहरः श्रीकृष्णः प्रतिभाति। यम् दृष्ट्वा अज्ञानान्धाः आसुरस्वभावा अपि कृष्णसारूप्यं प्राप्ताः , मर्तुमिच्छोः मम तस्मिन् रतिरस्तु।

श्रीकृष्णस्य शस्त्रग्रहणेन असत्यवादित्वदोषपरिहाराय भीष्मेण रथे कुटुम्बत्वारोपः कृतः।

"वृद्धौ च मातापितरौभार्या साध्वी शिशुस्सुतः। ,

अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्[2]।"

इति स्मृत्या असत्यवादित्वरूपअकार्यमपि कृष्णेनकृतंतद्विजयरूपकुटुम्बरक्षणार्थं , कृतमिति भीष्मेण समर्थना कृता।

यथा श्रीकृष्णः भीष्मस्य सत्यपरिपालनाय शस्त्रग्रहणमकरोत्तथैव भीष्मो ,ऽपि भगवद्विषये असत्यदोषपरिहाराय समर्थितवान्।

---

[1] कठोपनिषत् 25- 2- 1 -

[2] भावार्थपिका पृ 459 - (वंशीधरः) -

महाभारते द्रोणपर्वणि भूरिश्रवसे श्रीकृष्णोक्त –

" ये लोका मम विमला सकृद्विभान्ति ,

ब्रह्माद्यैस्सुरवृषभैरपीष्यमाणाः।

तान् क्षिप्रं व्रजताग्निहोत्रयाजिन्

मम तुल्यो भव गारुडोत्तमाङ्गयानः[1]।।"

इति श्लोकं युद्धसमये कृष्णेन दृष्टाः भूरिश्रवसादयःअन्ये च सारूप्यमुक्तिं प्राप्ता इति , भीष्मवचसः उपोद्बलकं भवति। तादृशमोक्षसाधक श्रीकृष्णरूपे मम मतिः रतिश्चातु इति भीष्माशयः।

सुललितगमनेनअनन्त ,मधुरतरमन्दहासेन ,हाव भावादिसुमधुरविलासचेष्टाभिः , ,प्रेमभरितवीक्षणेन च पूजिताः गौरवं प्रापिताः पुरस्त्रियः तस्मिन्नत्यत्वं कामनायुक्ताः [2] उन्मत्तीकृताःविवेकरहिताः ज्ञानशून्यास्सत्वः ,पूतनाहनन ,श्रीकृष्णबाल्यप्रभृतिचेष्टितानि , गोवर्धनपर्‌वतोद्दरणादि सर्वाणि परस्परं अनुकृतवत्यः तत्सारूप्यं प्राप्ताः मुक्ताः। तादृशी भावना तादृशमोक्षः ममापि भवतु। ,

अर्जुनादपि मुख्यतमाः प्रियजनाः गोपवध्वः कृष्णस्य सन्ति। ताः कृष्णेन अनेकवैदग्ध्यादिभिस्सम्मानिताः। तेषु राजनृत्यादि वैदग्धी कायिकीविलासः। धीरलालित्यादि वैदग्धी मानसी ,प्रणयनिरीक्षणञ्च ,वाचिकी ,परिहासवैदग्धी ,वल्गुहासश्च , प्रेममयसर्वभावव्यञ्जककटाक्षवैदग्धी चाक्षुषीप्रमुखाः। ताः स्त्रियः प्रसादयितुं स्वीयानसाधारणान् सर्वान् साद्गुण्यभावान् तासु प्रयुङ्क्ते श्रीकृष्णः। अत एव ताः गोपस्त्रियः कृष्णस्य स्वभावादिकं चेष्टादिकं प्रतिक्षणं स्मरन्त्यः अनुकृतवत्यस्सन्त्यः सायुज्यं प्राप्ता इति भीष्माशयः।

भक्तिरपि प्रमुखरस एवेति श्रीमधुसूदनसरस्वत्यादयः विभावादि समग्र निरूपणेन स्पष्टतया निरूपिताः। मधुरभक्तिरिति भक्तिरसे एको भेदः। तस्मिन् भक्तास्सर्वे नायिकाभावं प्राप्ताः नायकं भगवन्तं प्रति कामभावनया स्पन्दिताः अनुरक्ताः तदेकचित्तास्सन् तस्मिन्नैक्यं प्राप्नुवन्ति। ज्ञानी योगी च भीष्मः "ललितगतिविलाय ..... इत्यस्मन् श्लोके मधुरभक्तियुक्त इव दर्शितः। सोऽपि श्रीकृष्णस्य ललितगतिविलसादि स्मरणेन गोपवधूभावं प्राप्तः।

---

[1] सिद्धान्तप्रदीपः 461 -पृ

[2] द्रोणपर्वम् - भारतम् (-----)

"गोप्यः कामात् भयात् कंसः।
द्वेषाच्चैद्यादयो नृपाः
सम्बन्धात् वृष्णयस्स्नेहात्
यूयं भक्त्या वयं नृप[1]।।"

इत्यादि धर्मराजेन पृष्टः नारदः अवोचत्।

एतच्चलोकेन कामार्ता अपि गोपिकाः सायुज्यं प्राप्ता इति विषयः स्पष्टीक्रियते।

एष प्रकाशस्वरूपः श्रीकृष्णः मुनिराजश्रेष्ठसङ्कुले युधिष्ठिरस्य राजसूयसभामध्ये युधिष्ठिरपृष्टः मम मुखेन "अयमेव अग्रपूज्य" इति प्रतिपादितस्सन् मम भाग्यवशात् सर्वथा अदृश्यरूपोऽपि मम दृष्टिगोचरोऽभवत्। तत्समये सर्वैः ईक्षणीयः अत्यन्तसौन्दर्ययुक्तः श्रीकृष्णः मम हृदये सर्वदा निश्चलतया तिष्ठतु।

तमिममग्रेएवोपविष्टम् श्रीकृष्णं व्यष्टयन्तंर्यामिरूपेण निजांशेन स्वयमेव कल्पितानां , " ,शरीरभाजां हृदि हृदि अधिष्ठितंप्रादेशमात्रं पुरुषं वसन्तम्" इत्युक्तदिशा भिन्नमूर्तिमत्सु वसन्तमपि अभिन्नमूर्तिमिव प्रपश्यामि।

हृदिस्थः परमेश्वरः यथा यथा यं यं स्फोरयति" सः तथा तथैवाशास्ते। यथा ,अग्नेः क्षुद्राः विस्फुलिङ्गाः व्युच्चरन्ति" इति श्रुतेः सर्वे तस्मादेवं परिकल्पिताःतेषां हृदये स एव , स्वस्वरूपेण तिष्ठति।

मोहशब्देन भगवद्विग्रहस्य व्यापकत्वासम्भावनाजनित नानात्वज्ञानलक्षणमुक्तः। परमानन्दविग्रहस्य अस्यैव कृपया दूरीकृतमोहलक्षणस्सन् आकाशस्थो अर्कः जनैरवलोकितस्यन् मन्मूर्धोपरि अर्कस्थितः इति दृष्टिभेदात् अनेकधा भातमिव , प्रेमतारतम्येन पृथक् पृथक् स्फुरतो ,गोपानाञ्च हृदिषु भावभेदेन ,वसुदेवोद्धवनन्दादीनांऽपि एक एव कृष्ण इत्यहं जानामि।

सः जनिरहितः अपि शरीरभाजां हृदयेष्वधिष्ठितः।

अनेन "तत्सृष्ट्वा तदेवानुप्राविशत्[2]" इति तैत्तरीय श्रुतिः सम्यगुपनिबद्ध इति ज्ञायते। "प्रतिदृशमिवनैकधार्कमेकं" इत्यादिना "जीवेन आत्मना अनुप्रविश्य नामरूपे व्याकरवाणि[3]" इति "एकं सद्विप्रा बहुधा वदन्ति" इत्यादि श्रुतिवाक्यानि समन्वयं प्राप्तानि।

---

[1] श्रीमद्भागवतम् -VII - 1 – 30

[2] तैत्तरीयोपनिषत् - ब्रह्मानन्दवल्ली 6 - 2

[3] छान्दोग्योपनिषत् -VI - 3 -3

"प्रतिदृश्यमिव नैकधार्कमेकं" इति दृष्टान्तः देशभेदेषु अभेदबोधनायन तु , पूर्णत्वविवक्षायै। सूर्यः दूरस्थ विस्तीर्णात्मना स्वभावेन तथा दृश्यते। भगवद्विग्रहः अचिन्त्यशक्त्या तथा भासते।

तं परिपूर्णस्वरूपं इमं अग्रत उपविष्टम् ज्ञानदृशा समधिगतोऽस्मि।

अत्र परमात्मनः अर्केण दृष्टान्ततया वर्णनम् न युक्तमित्यभिप्रायोऽस्ति। परमात्मनः सूर्यस्य औपम्यं न घटते इति केचिद्व्याख्यातारः वदन्ति।

"आकाशमेकं हि यथा धटादिषु पृथग्भवेत्।

तथाऽऽत्मा एको ह्यनेकस्थः जलधारेवांशुमान्।।"

"एक एव हि भूतात्मा भूते भूते व्यवस्थितः।

एकथा बहुधा चैव दृश्यते जलचन्द्रवत्।।"

इत्युक्त्वा पुनः अम्बवदग्रहणात् न तथात्वम्[1]।

तथा च अम्बुदर्पणादिषु यथा सूर्यमुखादयो गृह्यन्ते न तथा पृथिव्यादिषु परमात्मा गृह्यते। अम्ब्वादिषु हि सूर्यादयः भ्रान्त्या तत्रस्था इव गृह्यन्ते। न परमार्थतः तत्रस्थाः। इह तु "यः पुथिव्यां तिष्टन्"य आत्मनि तिष्ठन् , इत्येवमादि श्रुत्वा परमार्थत एव परमात्मा पृथिव्यादिषु स्थितः गृह्यते।

वृद्धिह्रासयुक्तेषु घटकटकादिषु पृथक् दृश्यमानमाकाशं तद्वस्तुस्थित वृद्धिह्रासादिदोषैः न स्पृश्यतेयथा जलधारेषु विषमेषु दृश्यमानों ,ऽशुमान् तद्गत वृद्धिह्रासादिभिः न स्पृश्यते तथा अयं परमात्मा पृथिव्यादिषु अचेतनेषु नानाकारेषु चेतनेषु स्थितः तद्गतदोषैरसंस्पृष्टः सर्वत्र वर्तमानोऽपि अस्पृष्टदोषगन्धकल्याणगुणकः प्रवर्तते। - एवमुक्ते सति अर्केण दृष्टान्तः परमात्मनः युज्यते एव।

स्तोत्रेऽस्मिन् महायोगी भीष्मः सत्वरजस्तमसांतेषां परस्परमिश्रणेन , सत्वयुक्तरजोऽवस्थासत्वमिश्रतमो ,ऽवस्थारजोयुक्त तमो ,सत्वयुक्त सत्वावस्था ,ऽवस्था इत्यादि अनेकावस्थाः वेदान्तमार्गेण अभिवर्णति स्म।

एवं श्रीकृष्ण तनूवर्णनरूपेण रणश्रमालसश्रीकृष्णवर्णनरूपेणआत्महननसंसिद्ध , साक्षात् परमात्मस्वरूपेण च श्रीकृष्णं ,मधुरभक्त्यनुगत नायकरूपेण ,श्रीकृष्णरूपेण भीष्मः प्रस्तुतवान्।

एवं श्रीकृष्णस्यानुग्रहपात्रः भीष्मः सर्वदा धन्यः।

---

[1] वीरराघवीय व्याख्या पृ 465 -

"यावद्धि प्रथते लोके पुरुषस्य यशो भुवि .

तावत्तस्याक्षयं स्थानं भवतीति विनिश्चितम्[1]।। "

भीष्मः परमज्ञानी इति सहस्रशः प्रतिपादितम्। ततः अत्र भीष्मस्य मनसः सर्वव्यापारेभ्यः व्यावृत्तिरिति शान्तो रसः व्यवस्थापयितुं शक्यते। तथाऽपि भीष्मस्यात्र निर्वेदः नोपवर्णितः। अनुभूतविषयसुखस्यैव निर्वेदजननमुपपद्यते। यद्वा श्रीशुकस्येव स्वभावतः वा। भीष्मस्तु द्वयोः नान्यतरः। अतः भीष्मे निर्वेदं योजयितुं न शक्यते।

भगवति जातानुरागः मे मतिः भगवति लग्ना भवतु – इति प्रार्थनैव भीष्मः मुहुर्मुहुः कृतवान्। अतो भगवद्गता रतिरेवात्र स्थायीभावः। विजयसारथेः स्ववधोद्युक्तस्यस्वशरैः , क्षतस्य श्रीकृष्णस्य मुहुर्मुहुः स्मरणमुद्दीपनम्। श्रीकृष्णः आलम्बनम्। अश्रुवैस्वर्यादयः अनुभावाः। मतिस्मृतिहर्षादयः व्यभिचारिणः इति भक्तिरसः समग्रतया युज्यते।

एवं स्तुतवन्तं भीष्मं कैवल्यप्रदानेन कृष्णः अनुजग्राह –

"संनिरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु वै।

जगाम भित्वा मूर्धानं दिवमभ्युत्पपात च।।

महोल्केव भीष्मस्य मूर्धदेशाज्जनाधिप।

निःसृत्याकाशमाविश्यक्षणेनान्तरधीयत[2]।।"

"कृष्ण एवं भगवति मनो वाग्दृष्टिवृत्तिभिः।

आत्मन्यात्मा समावेश्य सोऽन्तश्श्वास उपारमत्[3]।।"

इति सर्वत्र भीष्मस्य सद्गति प्राप्तिरूपवर्णिता। सा गतिः भगवदनुग्रहप्राप्तैवेति दिक्।

---

[1] महाभारतम् - शान्तिपर्वम् 32 - 54 -

[2] महाभारतम् आनुशासनिकपर्वम् 5,6- 154 -

[3] श्रीमद्भागवतम् 44- 10 - 1 -

**श्रीशुकः -[1]***

सर्वेषु महाभक्तेषु श्रीशुकः नितान्तं ज्ञानवान्। यतश्च वेदव्यासादपि निरीहममुं तदानीन्तनाः मेनिरे। इयं चैका कथा भागवते महाभारते च प्रसिद्धा।

श्रीशुकः जातमात्रः युवा ज्ञानवैराग्यवान्। शरीराभिमानः तस्य सर्वथा नास्ति। अतः नग्न एव चरतिस्म। जातमात्र एव परित्यक्तविषयसुखः परिव्राट् बभूव। एवं प्रव्रजन्तं अनुनेतुमानेतुञ्च व्यासः अनुधावतिस्म। तदानीमेकस्मिन् सरसि स्त्रियः स्नान्ति स्म। तीरे सन्यस्तवाससां तासां पुरोगच्छति यूनि शुके त्रपा न सञ्जाता। किन्तु पुत्रमनुगच्छन्तं, उच्चैराक्रन्दमाणं वृद्धं व्यासं दृष्ट्वा तास्सर्वाः त्वरया वासांसि धारयामासुः।

चकितो व्यासः ताः तत्र कारणं पप्रच्छ। तदानीं ता एवमूचुः –

"ते पुत्रः भेदभावरहितः। तस्मिन् विषयविकारो सर्वथा न जायते। त्वं विदितलोकवृत्तोऽपि तव पुत्रवन्न समग्रज्ञानी। पुत्रादि संसारबन्धास्त्वामधुनाऽपि पराभवन्ति। अतस्त्वां दृष्ट्वा वासांसि वयं धृतवत्यः" इति। तच्छ्रुत्वा व्यासोऽपि ह्रीणः ततो निर्जगाम।

अतः ज्ञानिनामग्रगण्यस्य श्रीशुकस्य स्तोत्रमितरस्तोत्राण्यतिरिच्यते इत्यत्र न कश्चित्संशयः।

एवंविधः श्रीशुकः प्रायोपविष्टस्य परीक्षितः समीपमाजगाम। श्रीशुकः गोदोहनमात्रकालमपि एकस्मिन् प्रदेशे न तिष्ठति। तादृशोऽपिमहात्मा परीक्षिति जातानुग्रहः तस्मै कृष्णकथाः उपदेष्टुमङ्गीचकार। प्रायोपविष्टः परीक्षित् श्रीशुकमेवं प्रार्थयामास –

"हे बादरायणे! त्वं सर्वज्ञोऽसि। भगवान् श्रीहरिः किमर्थं भुवमवतीर्णः? कथं भुवं जुगोप? तत्सर्वं हरेरद्भुतं कर्म त्वत्तो ज्ञातुमिच्छामि? यतः भगवत्कथाः शब्दब्रह्मरूपाः।

एको भगवान् विष्णुरेव प्रकृत्या संयुक्तः गुणान् युगपत्सृष्ट्वा लोकमिमं ससर्ज। लोके यथा वेदाः प्रसिद्धाः तथा हरिकथाः। त्वं यथा वेदे निष्णातः तथैव हरिकथास्वपि तत्कथाश्रवणेन अहमपि तर्तुमिच्छामि"। इति। -

अत्र शब्दब्रह्मपदं हरिकथाश्रवणस्य मोक्षप्राप्तेः निश्चयसाधनत्वं निरूपयति – उक्तञ्च शास्त्रज्ञैः –

"शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति[2]।"

---

[1] 12 -4 -2

[2] वाक्यपदीयम् - ब्रह्मकाण्डः पृ 86 श्लो 132 ,131 -

एवं राज्ञा प्रार्थितः श्रीशुकः भागवतप्रवचनारम्भे नारायणं स्तौति। यद्यप्यत्र बहूनि विशेषणानि नारायणपराणि। तथाऽपि तत्र कृष्णावतारकृत्यानां प्रशंसाऽपि कृतेति हेतोः कृष्णपरैव स्तुतिः।

यस्य भगवतः सत्वरजस्तमोग्रहणलीलया क्रमेण सृष्टिस्थितिलयाः भवन्तितस्मै , सर्वान्तर्यामिने नमः।

अत्र भगवतः परमैश्वर्यं प्रतिपादितम् –

"उत्पत्तिं प्रलयञ्चैव भूतानामगतिं गतिम्।

वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति[1]।।"

इति भगवच्छब्दार्थः सर्वथा एवं नारायणे सङ्गच्छते। भगवान्नारायणः गुणत्रयरूपेण सृष्ट्यादिकं विधत्ते इति प्राक् प्रतिपादितम्[2]।

"अनुपलभ्यवर्त्मने– " इति भगवतः योगिनामप्यगम्यत्वं प्रतिपादयति। -

पापविध्वंसनकरायसर्वफलप्रदात्रे कृष्णाय ,अखिलप्राणरूपिणे ,असतां नाशकाय , तच्च परिव्रजनेन लभ्यमिति निरूपितम्। ,नमः। भगवतः रूपं केवलं समधिगम्यमिति तथाऽपि सर्वत्राऽत्र मानसिकत्यागो विवक्षितः। 'दाशुषे– ' इत्यार्षप्रयोगःदातुं इत्यर्थे , प्रयुक्तः[3]। तुमुन्नर्थोऽप्यत्र तृजर्थे प्रयुक्तः।

यदुश्रेष्ठाय ,परमैश्वर्येण स्वरूपे ब्रह्मणि रममाणाय ,सर्वसमाय ,योगिनां मनोगम्याय , ते नमः।

अत्र सगुणब्रह्मवादिनांविशिष्टाद्वैतवादिनां मते तु इत्थं व्याख्य ,ेयम् –

सात्वतां वृषभाय – योगाभ्यासे वर्तमानानामपि कामक्रोधादिकमत्यजतां दूरवर्तिनि , ' वैषम्याभावेन समाभ्यधिकरहित दिव्यतेजोवै भवेन स्वयं प्रकाशे ब्रह्मणिस्वस्वरूपेण' रममाणाय नमस्तेऽस्तु।

अद्वैतविशिष्टाद्वैतमतयोः प्रकाशस्य समत्वेऽपि स्वस्वरूपपदस्य निर्गुणसगुणादि भेदकृतम् वैषम्यम् द्रष्टव्यम्।

---

[1] विष्णुपुराणम् -VI78 - 5 -

[2] शौनकादि मुनिभिः कृतस्तोत्रे पृ 174 -

[3] अष्टाध्यायी 9- 4- 3 -

" तुमर्थे सेसेनसेऽसेन्वसेकसेनध्यै अध्यैन् कध्यैकध्यैन् शध्यैशध्यैन तवैतवेङ्तवेनः।"

यस्य नारायणस्य कीर्तनंलोके सद्यः पापान् ,अर्चनं ,श्रवणं ,वन्दनं ,स्मरणं ईक्षणं , तादृशाय मङ्गलकीर्तये नमः। ,विधुनोति

उक्तञ्च सप्तमस्कन्धे –

"श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।

अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।।

इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा।

क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम्[1]।।

विवेकिनः यस्य हरेः पादसेवया अस्मिंल्लोकेपरलोके च मुक्तसङ्गाः परं , तादृशाय मङ्गलकीर्तये ते नमः। ,ब्रह्मप्रयान्ति

अत्र अद्वैतिनां मते "चरणोपसादन" शब्दस्य नमस्कार इतिविशिष्टाद्वैतिनाम् मते , शरणागतिरितिचार्थः।

भगवदर्पणं विना कृतं तपःवा न क्षेमाय कल्पते। अतश्च ,सम्पादितं यशः ,दानं , भगवदर्पणं कृत्वा ,मन्त्रविदश्च स्वेषां पाण्डित्यं सर्वस्वं ,यशस्विनः ,दानपराः ,तपस्विनः सिद्धिमाप्नुवन्ति। तादृशाय सिद्धिप्रदात्रे भगवते नमः।

न केवलं योगिनः किन्तु चौर्येणपरहिंसादि पापकर्मणा जीवन्तो ,मृगयया ,ऽपि भगवच्चरणाम्बुजमाश्रित्य सद्यः शुध्यन्ति। भागवताश्च भवन्ति।

"यदुपाश्रयाश्रयाः" इत्यत्र न केवलं भगवत्सेवया भागवतसेवयाऽपि शुध्यन्तीति भगवतः महिमा आश्चर्यकरः[2]।

एवं ज्ञानिभिरुपास्यमानः धर्ममयः ,तपोमयः भगवानस्मान् सुप्रसीदतु। स च ब्रह्मणा , शिवेन च सेवितः। अनेन भगवतः नारायणस्य सर्वोत्कृष्टत्वम् सूचितम्। नारायणे मनसि - इतराः देवताश्च गणनामपि नार्हन्ति। यदाह कुलशेखरः ,स्थिते इतराणि वस्तूनि

"पृथ्वीरेणुरणुः पयांसि कणिकाः फल्गुः स्फुलिङ्गोऽनलः

तेजो निश्श्वसनं मरुत्तनुतरंरन्ध्रं सुसूक्ष्मं नभः। ,

---

[1] श्रीमद्भागवतम् -VII 23,24 - 5 -

[2] " ये पापाः पापिष्टाः तेऽपि यदुपाश्रयाः यं भगवन्तमुपाश्रिताःभागवताः ते,षामाश्रताःते ,ऽपि शुध्यन्ति। साक्षाद्भागवत्संश्रवणाभावेऽपि भागवतसंश्रयं कुर्वन्तस्सन्तः शुध्यननन्ति- " भागवतचन्द्रिका 18 - 4 - 2 -

क्षुद्रा रुद्रपितामह प्रभृतयो कीटास्समस्तास्सुराः

दृष्टे यत्र स तावको विजयते भूमावधूतावधिः[1]।।"

तादृशो भगवान् सर्वेषां पतिः। श्रियः पतिः यज्ञपतिः प्रजापतिः इत्यादयः , केचनविशेषाः अर्थवादा एव। सर्वपतित्वे इयत्ता निर्देशस्य अनावश्यकत्वात्।

भगवतः पादाम्बुजध्यानेन निष्कल्मषधिया आत्मरूपं यमात्मविदः पश्यन्ति सः मुकुन्दः मे शरणं भवतु।

'कवि' शब्दोऽत्र "आत्मवित्" पर्यायः। "कविं कवीनामृषभः"। कवयो ज्ञानिनः , यदेतदात्मतत्वं यथारूपंतत्तद्रुच्यनुसारेण यं परमात्मानं स्तुवन्ति स मे शरणं ,यथारुचि , भवतु।

"केचिद्विकल्पमनसः आहुरात्मानमात्मना;

दैवमन्ये परेब्रह्मस्वभावमपरे प्रभुम्। ,

अप्रतर्क्यादनिर्देशात् इति केष्वपि निश्चयः[2]।।" इति।

उपासकानां रूपाराधनरुचेः भिन्नत्वेऽपि सर्वेषां ध्येयः परमात्मैव।

" त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति।

प्रभिन्ने प्रस्थाने परमिदमदः पत्थ्यमिति च।

श्रुतीनां वैचित्र्यात् ऋजुकुटिलनानाफलजुषां,

नृणामेको गम्यः त्वमसिपयसामर्णव इव[3]।।"

इत्यार्षं वचनम्।

यस्यानुग्रहेण ब्रह्मणोमुखात् सरस्वती आविर्बभूव स विभुः मे शरणं भूयात्।

महदादि विकारातीतोऽपि मायया प्रकृत्या सङ्गतः षोडशगुणात्मकस्सन् विश्वं सृजति स मां पुनातु[4]।

---

[1] मुकुन्दमाला 19 -

[2] भागवतचन्द्रिका 21 - 4 - 2 -

[3] पुरुषदत्तकृत शिवमहिम्नस्तोत्रम्

[4] श्रीधरस्तु - यो महद्भिः भूतैरिमाः पुरः शरीराणि सृष्ट्वा अमूपूर्षु अन्तर्यामितया सेते वसति। अत्र , - पुरुषसमाख्यां प्रमाणयित। यत् यस्मात् पुरुष इति - अत एव यः एकादशेन्द्रिय पञ्चतन्मात्ररूपान् षोडशुणान् कलाः भुङ्क्ते - प्रकाशयतिपालयतीति वा। भुङ्क्ते इत्यात्मनेपदमार्षम ,्। तत्र हेतुः - यः षोडशानामात्मा , । - इत्याह - तत्स्वामीति यावत्। ,चेतयिता

एषा स्तुतिः भगवत्कथारम्भसमये मङ्गलरूपाऽपि। निरीहस्यापि श्रीशुकस्य हरिकथाकथनानुरक्ति वर्णनात्श्रीशुकस्य मनसि भक्तेः विशिष ,्टस्थानात्ज्ञानात् , भक्तिर्गरीयसीति विषयो स्पष्टी भवति।

अत्र भगवानालम्बनम्। परीक्षित्प्रश्नः उद्दीपनम्। अक्षिनिमीलन , नमस्कारादयोऽनुभावाः। परीक्षित् प्रश्नेन विष्णुकथास्मरणात् सञ्जातः हर्षः' ,वृजिनच्छत्' इति ज्ञानात् मतिःपूर्वमेव तपस्विनः मुक्ता इति स्म ,ृतिश्च सञ्चारिणः इति भक्तिरससामग्री।

श्रीशुकस्य ब्रह्मज्ञानसम्पत्तिरपि भगवतः अनुग्रहजन्या। साऽपि स्तुतेः कारणात् प्रागुत्पन्नं कार्यमिति अनुग्रहविशेष एव।

कदाचित्पुरुषोत्तमानुग्रहे एवं विधः कार्यकारणविपर्यासोऽपि दृश्यते।

"उदेति पूर्वं कुसुमं ततः फलम्।

घनोदयः प्राक् तदनन्तरं पयः।

निमित्त नैमित्तिकयोरयं क्रमः।

तव प्रासादस्य पुरस्तु सम्पदः[1]।।" इतिवत्।

---

भावार्थदीपिका 23 - 4 - 2 -

**वीरराघवस्तु**- विभुर्थःपुरुषः भगवान् महद्भिः भूतैःपृथिव्यादि महाभूतैः इमाः पुरः शरीराणि निर्माय उपजनय्य , अमूषु पूर्षु जीवान्तर्यामितया जीवशरीरकस्सन् जीवरूपेण शेते। यस्मात् कारणादतः षोडशात्मकः मन आदिभिरेकादशेन्द्रियैः रूपादिभिः पञ्चभिश्चमिलित्वा षोडशभिरारब्धं यच्छरीरं तदधिष्ठाता सन् षोडशकलाः भुङ्क्ते। पूर्वोक्ताष्षोडशकला अनुभवति। षोडशकलानुभवो नाम एकादशेन्द्रियाणां भोगसाधनत्वेन अनुभवः। रूपादि पञ्चकस्य भोग्यत्वेनानुभवश्च। तथाविधानुभवाश्रयो भवति स भगवान् मे वचांसि ममोपदेशरूपाणि वचांसि अलङ्कृषीष्ट - अलङ्करोतु। मन आदि षोडशकलारब्ध देहे जीवशरीरकतया जीवरूपेणावस्थाय यो भगवान् चक्षुराद्येकादशेन्द्रियाणि भोगसाधनत्वेनरूपादिपञ्चकं च भोग्यत्वेनानुभवति स एव भगवान् हृयादिपुरुषः। , ममापि सर्वेन्द्रियप्रेरकतया अवस्थानात् प्रकृतस्वीयस्तोत्रोपयोगीनि मदीयानि वचांसि अलङ्करोत्विति भावः इत्याह।

भागवतचन्द्रिका23 - 4 - 2 -

[1] अभिज्ञानशाकुन्तलम् -VII -30

**उद्धवः– [1]***

श्रीकृष्णः स्वावतारसमाप्तौ भगवतो महिमातिशयं लोके प्रकटयितुं मनसि निश्चित्य यदुकुलक्षयात्प्रागेव स्वपितृव्यम् उद्धवम् द्वारकातः बहिः प्रेषयामास। सोऽपियत्र विदुरस्थितः तत्रागत।-

विदुरः उद्दवं दृष्ट्वा कृष्णादीनां क्षेममपृच्छत्। ततः पुनः कृष्णस्मरणेन तस्मिन्नेव मुहूर्ते किञ्चिद्वक्तुमक्षमोऽपि शनैः नेत्रे विमृज्य शान्तमनाः कृष्णलीलाः कथाक्रमरूपेणैवं स्तोतुमारेभे –

कृष्णेऽस्मल्लोकान्निर्गते का वा कुशलस्य वार्ता? आदित्याल्लब्धालोकाः ग्रहाः प्रकाशन्ते। उपजीवके आदित्ये उपरते कुतो वा ग्रहाणां प्रकाशः? एवमेव कृष्णनिष्क्रमाणात् अस्मासु न कश्चित्कुशली।

कृष्णसन्निधिं प्राप्ताः तेनादृता अपि वयं कृष्णस्वरूपं न जानीमः। यथा क्षीरोदधौ अमृतमथनसमये बहिर्निस्सरणात् प्राक् स्वैस्सह संविशन्तं चन्द्रमसं तत्रत्याः मत्स्याः नाजानन् तथा यदवोऽपि कृष्णेन सह संविशन्तः कृष्णतत्वं न विदुरिति धिगस्माकं दौर्भाग्यम्। यदुषु केचिदेव अक्रूरादयः तं तत्वतो जानन्ति। ते च श्रीकृष्णं परमात्मानं जानते। स च भूतावासः इत्यपि तेषां निश्चिता मतिः। एवं ज्ञानवन्तोऽपि ते कदाचिदज्ञा इव देवस्य माययैव वर्तन्ते।

ये च शिशुपालादयः निरन्तरं श्रीकृष्णद्वेषिणः तेऽपि तत्वतः भगवत्तत्वज्ञाः। प्रभोः माययैव एवमत्यन्तं वैरमाश्रिताः लोके द्विषन्निव व्यवहरन्ति। तृतीयस्कन्धे भगवता स्वपार्श्वचरयोः अधोलोकं गच्छतोऽपि स्वस्मिन् भक्तिरनुगृहीतेति कथा प्रतिपादिता[2]।

यैर्यदुभिः तपः न तप्तम्ते कृष्णमजानन्तः बन्धुमात्रं मन्वते। एवं , तपस्विनामज्ञानिनाञ्च उभयोरनुग्रहार्थं एतावत्पर्यन्तं स्वबिम्बं दर्शयित्वा अधुना तद्बिम्बमुपसमहार्षीत्।

कीदृग् तद्बिम्बमितिश्लोकत्रयेण वर्णयति – तच्च वर्णनं भगवतो बाह्यसौन्दर्यनिरूपणपरम्। मर्त्यलीलाप्रदर्शनयोग्यसाधनम्न ,सौभाग्यातिशयस्य परं पदम् , अलङ्काराणामप्यलङ्करणरूपं वपुर्दधानः ,स्वस्यापि विस्मयकारणं ,केवलं परेषां हरिर्भुवमवतीर्णः।

---

[1] श्रीमद्भागवतम् पर्यन्तम् 20 प्रभृति 7 - 2 -3 -

[2] श्रीमद्भागवतम् 38 प्रभृति 30- 15- 3 -

महाभारते सभापर्वणि नीलकण्ठेन भावप्रदीपव्याख्यायां दन्तवक्त्र शिशुपायोः वात्येषु निन्दास्तुतिरूपेण व्याख्याता। एवं हिरण्याक्षादि वाक्येष्वपि निन्दा स्तुतिरूपेण व्याख्याता श्रीधरेण।

लोकत्रये स्थिताः प्राणिनः राजसूये अग्रपूजां गृह्णन्तममुं सुन्दरपुरुषं दृष्ट्वा विधातुः निर्माणकौशलं प्रशशंसुः। यद्विधातुः समग्रं कौशलमत्र प्रदर्शितम्। अतः परं सुन्दरं निर्मातुं विधाताऽपि अशक्त एव।

एवमेवंविधसुन्दरं विलोक्य प्राप्तानुरागाः प्रदर्शितलीलावलोकाः व्रजस्त्रियः कार्यान्तरं विहाय तं कान्तं मत्वा भेजिरे।

तत्र बिम्बप्रदर्शने कारणमाह -भगवतः रूपाणि शान्तानि अशान्तानि चेति द्विविधानि[1]। तत्र शान्तानि ज्ञानरूपाणि; ज्ञानिभिरेव ज्ञेयानि। ये च भगवतः मूर्तिदर्शनेन निश्चलचित्ताः भूत्वा मूर्तिं मनसि प्रतिष्ठाप्यतत्प्रतिष्ठापनेन लब्धनिर्वाणाः तेषामनुग्रहार्थं , अशान्तानि रूपाणि।

अयं परमात्मा सर्वस्वतन्त्रोऽपि प्राकृत इव वसुदेवगृहे जन्म प्राप। व्रजे निवासमङ्गीचकार। जरासन्धात् भीत इव मथुरां त्यक्त्वा द्वारवतीं जगाम। जन्मकाले नृसिंहवत् साक्षादाविर्भूय तत्क्षणमेव कंसं हन्तुं समर्थोऽपि एकादशसमाः जानपदो भूत्वा भुवं चचार। एवं किमर्थं चकारेति अजानता मया खेदः अनुभूयते।

कंसबन्धनात् पितरौ विमोचयन् तौ प्रणम्य तयोः विमोचने विलम्बाय, शुश्रूषाऽकरणाय च तयोः क्षमां ययाचे। एवं किमर्थं कृतवानित्यपि विषण्ण उद्धवः न जानाति। अथापि इदं सर्वं लोकरीतेरनुकरणायेति आत्मानं समाधत्ते।

एवं सर्वत्र अनीश्वर इव भासमानमपि लोकयात्रार्थं श्रद्धां प्रदर्शयन्तं तं कः नाभिनन्दति? को वा तस्य पादपद्मं सकृदाश्रित्य पुनर्विस्मर्तुं प्रभवति?

राजसूये कृष्णस्य द्विषतोऽपि चैद्यस्य मोक्षः भवद्भिरपि प्रत्यक्षं दृष्टः। द्विषतामप्येवं भगवतोऽनुग्रहश्चेत् का कथा योगिनाम्।

वस्तुतस्तु भगवतैव दत्तः वैरानुबन्धः भक्तियोगादप्यतिरिच्यते इति भागवतसिद्धान्तः[2]।

तादृशस्य कृष्णपादसरोरुहस्य विरहं को वा सहेत? महाभारतयुद्धेऽपि अर्जुनसारथिं दृष्ट्वा पार्थास्तैः निहताः मुक्तिमापुः।

---

[1] अत्र श्रीधरः - स्वीयान्येव शान्तानि अशान्तानि चेति द्विविधानि। तत्र शान्तरूपेषुइतरैः अशान्तरूपैः , स्वयमजो ,पीड्यमानेषु कृतानुकम्पःऽपि जातः आविर्भूतः। महाभूतरूपेण नित्यसिद्धः अग्निः यथा काष्ठेषु आविर्भवति तद्वदस्य जन्मनि हेतुः। भावार्थदीपिका 15 - 2 - 3 -

[2] " यथा वैरानुबन्धेननन मर्त्य तन्मयतामियात्।
न तथा भक्तियोगेनत्विति मे निश्चिता मतिः।।" श्रीमद्भागवतम् -VII – 1 - 29

अत्रेदमनुसन्धेयम् –

भगवतो दर्शनेन सद्यः प्राकृतं कर्म नश्यति। पुनः ऐहिकविषयप्रवृत्तौ पापपुण्यादि प्रारब्धस्योपचीयमानतया पुनः कर्मारम्भः ,जननमरणादिपरम्परा ,ततः भगवद्दर्शनस्य वैयर्थ्यापत्तिः। अतएव "पार्थास्त्वपूताः" इति भगवद्दर्शनसमनन्तरमेव तेषां देहादि भौतिकपदार्थनाशवर्णनेन मोक्षः सिध्यत्येव।

एवमेव महाभारते उद्योगपर्वणि दौत्यसमयेविश्वरूपप्रदर्शने भगवान् धृतराष्ट्रस्य , दिव्यचक्षुषी ददौ। विश्वरूपदर्शनोपसंहारानन्तरमपि "यदि ते रोचतेतदा दृष्टिं शाश्वतीं , "करोमि इति भगवान् धृतराष्ट्रमूचे। "तव दिव्यरूपं दृष्ट्वा नान्यत् द्रष्टुमुत्सहे" इति धृतराष्ट्रेणैव प्रार्थितः दृष्टिमुपसञ्जहार। एवं स्वावतारसमाप्तेरनन्तरं यदूनां पुनः संसारप्रवृत्तिः ततो जन्मचक्रक्रमः माभूदिति ब्राह्मणशापव्याजेन[1] यदुकुलमुपसंहृतवान्।

एवं भगवतः एतावत्पर्यन्तं कथाः श्रुत्वा विस्मर्तुमशक्नुवन् पुनः पुनः वासुदेवकथाः स्मरत्युद्दवः।

कस्यकृतेऽयं प्रयास इति चेत् – भगवदनुग्रहप्राप्त्यर्थमेवेति समाधानम्। सर्वदा भगवत्प्रीतिपात्रीकृतः उद्धवः स्मारं स्मारं दुःखमनुभवति। न केवलमेवंविधा भक्ताः रक्षांस्यपि भगवतः अनुग्रहपात्राणि। यतः पूतना यशोदासदृशीं गतिं लेभे। असुरा अपि भागवताः। यतः नारायणः स्वयमागत्य स्वदर्शनेनताननुगृह्णन् जघान इत्येवमादयः बहवः कृष्णलीलाः उद्धवेन निरूपिताः। रुक्मिणीविवाहादयःताश्च सर्वतः कथारूपाः स्पष्टाः इति न , विस्तरेणोपवर्णिताः। लीलाविस्तरस्तु अस्मिन्नेव स्कन्धे अनुपदमेव तृतीयाध्याये द्रष्टव्यः।

उद्धवः श्रीकृष्णादभिन्नः। कृष्णः अवतारसमाप्तिं चिकीर्षन् स्वयमेवं मनसि चिन्तयति -

"ब्रह्मशापापदेशेन कालेनामोघवाञ्छितः।

संहृत्य स्वकुलं स्फीतं त्यक्ष्यन् देहमचिन्तयत्।।

अस्माल्लोकादुपरते मयि ज्ञानं मदाश्रयम्

अर्हत्युद्धव एवाद्धा संप्रत्यात्मवतां वरः।।

नोद्दवोऽण्वपि मन्न्यूनो यद्‌गुणैर्नार्दितः प्रभुः।

अतो मद्वयुनं लोके ग्राहयन्निव तिष्ठतु[2]।।"

---

[1] " ब्रह्मशापापदेशेन कालेनामोघवाञ्छितः।

संहृत्य स्वकुलं स्फीतं त्यक्क्ष्मन् देहमचिन्तयत्।।" श्रीमद्‌भागवतम् 29 - 4 - 3 -

[2] श्रीमद्‌भागवतम् 31 प्रभृति 29 - 4 -3 -

एतादृशोप्युद्धवः विदुरेण पृष्टः तं भगवतो लीलाः श्रावयित्वा कृष्णतत्वं ज्ञातुं मैत्रेयः आश्रयणीय इति विदुरं यदुक्तवान् तत्र उद्धवस्याशयः अयम् –

स्वात्मनस्तव रहः रहस्यरूपतत्वस्य– प्रकाशकं ज्ञानं पूर्वनिर्दिष्टम्। स्वभृत्यार्थकृतः , यद्यस्मात् स्वभृत्यप्रयोजनसाधकाश्चरन्ति; न हि कृतार्थानामन्यत्कृत्यमस्तीत्यर्थः। नन्वेति

कौषारवो मैत्रेयः ऋषिः। ते त्वया तत्वसंराध्यः। तत्वाय तत्वोपदेशाय संराध्य इति स यद्युपदेक्ष्यति वा नवेति शङ्का न कार्या। स तु मर्त्यलोकं जिहासता भगवता अन्तिमे तत्समक्षमेव त्वदुपदेशार्थं साक्षादादिष्टः निर्दिष्टः।

अयं भावः – भगवतैव स्मरणमात्रेण तवापि तत्वमुपदिष्टप्रायम्। अतः केवलमसम्भवनानिवृत्तये ज्ञानी कश्चिदाराध्य इत्येतावदेव कर्तव्यः[1]" इति।

अत्र श्रीकृष्णः आलम्बनम्। तद्गता भक्तिः स्थायिभावः। भगवतः महाभिनिष्क्रमणं , " कृष्णस्मरणमित्यादयः उद्दीपनविभावाः। ,विदुरकृतप्रश्नःपुलकोद्भिन्नसर्वाङ्गः मुञ्चन् ...... विमृज्य नेत्रे इत्यनेन अश्रुपातः अनुभावाः ,इत्यादि श्लोकद्वये रोमाञ्चः मीलदृशा इति प्रलयः वर्णितािः ,पूर्णार्धतया उद्दववर्णनेन शोकोप्यत्र भक्त्यानन्दपोषकः अतो हर्षः सञ्चारी , " ,स्नेहप्रसरं सप्लुतः इत्यौत्सुक्यंयद्धर्मसूनोर्बत राजसूये" इति कृष्णावस्थास्मरणात् स्मृतिः , मन्येऽसुरान् भागवतान् स्त्र्यधीशो इति वैरोऽपि भगवति भक्तिहेतुरिति मतिश्च सञ्चारिणः।

अत्र शोकस्य स्पर्शोऽस्तितथा ,ऽपि शोकस्य कृष्णस्मरणमेव कारणम्। अतोऽत्र स्मरणभक्तिरेव रसोत्पत्तेः मूलम्।

उक्तञ्चात्रैव –

"आत्मानञ्च कुरुश्रेष्ठ कृष्णेन मनसेक्षितम्।

ध्यायन् गते भागवतो रुरोद प्रेमविह्वलः[2]।।

प्रेमविह्वलत्वमेव हेतुरित्यत्र स्पष्टतया प्रतिपादनात् भक्तिरेव रसः। शोकस्तु भक्तेरङ्गभूतः। परिपूर्णायां भक्तौ शोकः अन्तर्धत्ते।

"रसः सर्वोऽपि सम्पूर्णःतिरोधत्ते रसान्तरम्[3] ,।।" इति सिद्धान्तात्।

---

[1] श्रीधरः - भावार्थदीपिका 26 - 4 - 3 -

[2] श्रीमद्भागवतम् 35 - 4 -3 -

[3] प्रतापरुद्रीयम् - रसप्रकरणम्

**उद्धवः**–[1]*

एकादशस्कन्धे गर्गशापग्रस्तः यदुवंशः अचिरान्नश्यतीति ज्ञात्वा उद्धवं त्रातुमिच्छुः भगवान् तमाहूय सन्यासयोगमुपदिश्य द्वारकायाः बहिर्गन्तुं आदिदेश। ततः प्राप्तज्ञानः उद्धवः भगवन्तं स्तौति। अत्र भगवता साक्षुदुपदिष्टयोगः उद्धवः स्तौतीति ज्ञानिनः स्तोत्रमिदम्।

योगप्रदायिन्! योगिनां निक्षेपविशेषरूप! योगोत्पत्ति हेतोः भवता स्वमहिम्नैव अयं योगो उपदिष्टः। न तु वास्तवः मयि ब्रह्मज्ञानाधिकारः विद्यते।

तवपादमसेवकं एवंविधत्यागः सन्न्यासलक्षणः न सुलभानुष्ठेयः। सोऽहम् इदं मम वस्तु – इति वासनावासिताः मूढमतयः संसारे पतिता भवन्ति। अहं तु भवतः कृपयैव भवता उपदिष्टं योगमनुष्ठातुं यतामि।

तव स्वरूपं यः यथातथं वक्तुं शक्नोतिताद्दशमहम् न पश्यामि। ब्रह्मादयो ,ऽप्यत्र कर्मणि न शक्ताः।

तस्मात् निर्विकारं विषयबहिर्भूतं सर्वज्ञं वैकुण्ठवासिनंनरसखं नारायणं शरणं प्रपद्ये। ,

अत्र उद्धवः यद्यपि ज्ञानीतथा ,सन्न्यस्तसकलधर्मा ,रत्यादिरहितः ,ऽपि भगवद्रतेः न त्याज्यता अत्रापि ,ज्ञानोपदेष्टा भगवानेवालम्बनम्। ज्ञानप्राप्तिरुद्दीपनविभावः। सञ्चारिणस्तु उद्धवस्य रतिं विना भावान्तरासम्भवात् मृग्या एव। किन्तु न असंलक्ष्यक्रमध्वनेः भक्तिरसस्य न काचित्क्षतिः। यद्वा यथामति आक्षेपगम्याः।

**ब्रह्मादिदेवाः**-[2]*

दशमस्कन्धे द्वितीयेऽध्याये ब्रह्मेशादि देवगणाः देवकीगर्भस्थितं भुवमवतरन्तं परमपुरुषं श्रीकृष्णरूपं स्तुवन्ति। स्तोत्रेऽस्मिन् विषयगाम्भीर्यं अतीव द्दश्यते।

सत्यव्रतं सत्यपरं ,मिति प्रथमश्लोके सत्यशब्दस्य पौनरुक्त्या अनेकार्थाः......त्रिसत्य , अनेक विशेषणाः परमात्मनः संयोजिताः। अत्र सत्यशब्दस्य लोकरूढिप्राप्त यथार्थत्वमेव नोक्तम् किन्तु अनेकार्थेषु प्रयुक्तः तच्छब्दः परमात्मनः विशिष्टगुणत्वप्रतिपादकः अभूत्।

यतोऽयं परमपुरुषः दनुजांशसम्भूतानां खलानां भूपतीनां कंसशिशुपालादीनां हननार्थं कृतप्रतिज्ञः। तस्मात् तस्य आविर्भावसमये देवाः "सत्यव्रत"मित्यादि शब्दैः

---

[1] श्रीमद्भागवतम् -XI - 7 – 14 प्रभृति पर्यन्तम् 18

[2] X पर्यन्तम् 42 प्रभृति 28 - 2 -

तत्प्रतिज्ञासमाप्तिं स्मारयन्ति। सत्यव्रतशब्देन परमात्मनः आश्रितसंरक्षणशीलत्वं , सत्यसङ्कल्पत्वं ध्वन्यते।

"सत्यपर" इत्यत्र परशब्दस्य श्रेष्ठत्वंसत्यशब्देन तत् श्रेष्ठप्राप्तिसाधनत्वं गम्यते। तथा , च मोक्षरूपकरणत्वं परमात्मनः लक्षणमिति विवक्षितम्। अपि च – " यदन्यद्देवेभ्यः प्राणेभ्यश्च तत्सत्"अथ यद्देवाश्च प्राणाश्च तत्सत् ," इत्यादि श्रुतिभ्यः सत्य शब्देन चिदचिदात्मं जगत् 'सत्य'मित्याक्षिप्यते। चैतन्यस्वरूपजीवःजडस्वरूपप्रकृतिश्च चिदचित्शब्दार्थः। ततः परत्वं , उत्कृष्टत्वं परमात्मनः अस्ति।

'सत्य'शब्देन उपनिषदः उच्यन्ते। उपनिषदः वेदान्तर्भागाः। यथार्थवेदनात् वेदस्य वेदत्वम्। यथार्थो नाम परमात्मा। तत् परमात्मस्वरूपं वेदैरवगम्यते।

"वेदैश्च सर्वैरहमेव वेद्यः[1]" इति गीता वाक्यमपि वेदस्वरूपःवेदप्रतिपाद्यः स एवेति , स्पष्टयति।

सृष्टेः पूर्वं प्रलयान्तरे त्रिकालेष्वपि अव्यभिचारेण वर्तमानं परमात्मानं ,स्थित्यां , 'त्रिसत्य' शब्देन स्तुवन्ति देवाः। सत् शब्देन पृथिव्यप्तेजांसि' ,त्य' शब्देन वाय्वाकाशौ च 'सच्च त्यच्च अभवदि'ति[2]"तत्सत्यमित्याचक्षते , इत्यादि श्रुतिभिः अवगम्यते। तादृश पञ्चभूतात्मक जगतः कारणतया अयं परमात्मा प्रतीयते।

"सत्यस्य सत्य"मित्यस्य स्वसृष्टप्रपञ्चे अन्तर्यामितया व्रतमानत्वमर्थः। 'निहितञ्च सत्ये' इत्यत्र सत्यशब्दस्य विनाशरहितविलयस्थानमर्थः। प्रलयकालेऽपि स्थितत्वं भगवतः वैशिष्ट्यम्। स्वरूपतः विकाररहितजीव (स्वभावतः)ः सत्यशब्दस्यार्थः। किन्तु स्वभावतः विकारवतः सत्यरूपजीवेभ्यः निर्विकाररूपः परमात्मा त्वमेव सत्यपदवाच्यः इति देवानामाशयः।

"ऋतसत्यनेत्रं" इत्यत्र ऋतशब्दस्य सूनृतवाणी[3] इति" ,सत्यञ्च समदर्शन" मिति कोशेन सत्यशब्दस्य समदर्शनत्वमर्थः। नेत्रमित्यत्र नयनमेव नार्थः। किन्तु नयनमिव साधनम् समदृष्ट्याञ्च प्रवर्तक इति चार्थः। अपि च ,तथा च सूनृतवाण्यां ,नेतारं इति , "असावादित्यः सत्य"मिति श्रुतेः सत्यशब्दस्य सूर्चोऽर्थः। तत्साहचर्यात् ऋतशब्दस्य चन्द्रत्वमर्थः। तथा च "ऋतसत्यनेत्र" शब्दस्य सूर्यचन्द्रनेत्र इत्यर्थो ज्ञायते। अनेन "चक्षषी चन्द्रसूर्यौ" इति श्रुत्यर्थमनूदितम् देवैः।

हे भगवन्! निर्विकारस्वभावंसर्वप्रकारेण सत्यात्मकं त्वां वयं शरणं गताः। ,

---

[1] भगवद्गीता -XV - 15

[2] तैत्तिरीयोपनिषत् - II6 -

[3] श्रीमद्भागवतम् -XI 38- 19 -

असौ आदिवृक्षः देहरूपप्रपञ्च इति श्लिष्टरूपकेन कथितम् व्यासमहर्षिणा। "एकायनोऽसौ द्विफलः"..... इति स्तुति श्लोके उपयुक्तानि। एकं प्रकृतितत्वं परब्रह्मतत्वं आश्रयः अस्यदेहस्य। सुखदुःकस्वरूपफलयुक्तम्। सत्वरजस्तमोरूपत्रिगुणात्मकमेव मूलः। धर्मार्थकाममोक्षरूपरसाश्चत्वारः अस्य। पञ्चज्ञानरूपपञ्चभूतप्रकारेन्द्रियाण्येव शाखारूपाः। ऋभुक्षापिपासाशोकमोहजरामुतिरूपाः षडूर्मयः आत्मरूपाः। चर्मरुधिरमांसमेदोमज्जास्थिशुक्लरूपाः सप्तधातव एव अस्य देहस्य त्वग् रूपः हस्तपादशिरः कण्ठवक्षोजठरा एव अष्ठविटपाः। नवद्वारा एव कोटरस्थानानि। प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जयाख्याः दशप्राणा एव अस्य देहरूपवृक्षस्य पत्राणि। जीवात्मा परमा (प्रपञ्चस्य)त्मा च अस्मिन् स्थितखगरूपौ।

"द्वासुपर्णा सुयुजा सखाया समानं वृक्षं परिषस्वजाते।

तयोरन्यः पिप्पलं स्वाद्वत्ति – "अनश्नन्नन्यो अभिचकासीति[1] ,

अत्र श्रुतौ प्रपञ्चे वृक्षत्वमारोपितम्। जीवात्मरूपखगः पूर्वजन्मप्राप्तपुण्यपापरूपकर्मादिकमनुभवति। परमात्मरूपखगः किञ्चिदपि नानुभवति एतादृश प्रपञ्चवृक्षस्य त्वमेव प्रधानः कारणभूतः इति " -त्वमेक एवास्य सतः प्रसूतिः इति .... स्तौति देवतागणः।

एवञ्च सर्वजगत्कारणः विष्णुरेवेतिस एव परमात्मा इति च अभिव्यज्यते। अस्य , प्रपञ्चस्य एक एव जगत्कारणः सृष्टिकारणः अनुग्रहशीलः पालकः सन्निधानरूपलयकारः। !हे भगवन् सृष्टिस्थितिलयात्मकं त्वां विस्मृत्य त्वन्मायया पिहितमनस्काः पण्डितम्मन्याः ब्रह्मविष्णुरुद्राः सृष्टिस्थितिलयकारणा इति वदन्ति। अपि च रामकृष्णादिरूपेण बहुविधं वर्तमानं त्वां न जानन्ति। ये तु सत्यतया विपश्चितः ते तथा न भावयन्ति। त्वामेवसर्वजीवविलक्षणं परस्वरूपेण च जानन्ति। ,सर्वकारणत्वेन ,

चराचरलोकस्य क्षेमायमोक्षोपयुक्त शुद्धसत्वोपयुक्तानि मत्स्यकूर्मादि अवताराणि , साधूनां परित्राणायदुष्कृताम् विनाशाय च धारयसि। ,

भगवति अत्यन्तभक्ताः एके महात्मभिरूपदिष्टेन भक्तिरूपापन्नज्ञानेन त्वयि लग्नमनस्काः "इदं मायामयं" इत्यनादरं परित्यज्य भवसमुद्रं गोष्पादमिव भावयन् अनायासेन त्वत्पादसेवारुपपोतेनैव भवजलधिं तरन्ति।

अनेन समाधियोग ,ज्ञनादीनामपि भक्तेरेव प्राधान्यं देवैरपि प्रदर्शितम्। एतदर्थमेव दार्ढ्याय " -स्वयं समुत्तीर्य सुदुस्तरमिति अनन्तरश्लोके पुनरुक्तं महर्षिणा व्यासेन।

अनन्तरं भगवच्चरणारविन्द भक्तिरहितानां गतिः प्रस्तूयते।

---

[1] मुण्डकोपनिषत् -III 1 - 1 -

"यद्दुर्गमं यद्दुरापं .......

सर्वं तु तपसा साध्यं तपो हि दुरतिक्रमः"

इति तु तपसा असाध्यत्वं ,तपसः अतिकष्टत्वञ्च निरूपितम्। तादृशतपोबलेन , ज्ञानयोगेन उत्कृष्टं मोक्षस्थानं प्राप्तवन्तो ,वर्णाश्रमादि धर्माचरणेनऽपि अनादृतयुष्मदङ्घ्रयः , कलुषितमतयः विमुक्ता वयमित्यभिमानवन्तः तत् श्रेष्ठस्थानात् केवलं भक्तिराहित्यादधः पतन्ति।

"शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते[1]।।" इति गीतावाक्येन योगिनां उत्कृष्टस्थानं प्राप्तवतामपि भ्रष्टत्वं जायते इति –

"न मे भक्तः प्रणश्यति[2]" इति श्रीकृष्णवचनेन भक्तस्य यदा कदाऽपि अधोगतिः नोत्पद्यतेसः सर्वदा भगवत्पादसेवाश्रय ,ोऽपि उत्तमः उन्नतरूप एवेति ज्ञायते।

हे माधव! त्वद्भक्ताः त्वया रक्षितास्सन्तः निर्भीत्या सञ्चरन्ति। अनेकविघ्नसञ्चयानतिक्रम्य परमोत्कृष्टस्थाने तिष्ठन्ति। तथा च त्वया तादृूप्यं प्राप्य गरुडस्य मूर्धनि प्रचलन्ति च।

अनेन विष्णुभक्तानां सारूप्यमुक्तिरुक्ता।

रजस्तमोस्पर्शशून्यं शुद्धसत्वं शरीरिणां श्रेयस्साधनं वपुः त्वं धारयसि। तादृशदिव्यमङ्गलविग्रहस्यभवन्मुखोल्लासहेतुरूपस्वाध्यायस्वरूपवेदेन , ,अनशनव्रतादि तपोभिः ,सन्मङ्गलविग्रहध्यानरूप अनितरसाधारणसम्बन्धरूपयोगेन ,यज्ञादिक्रियाकार्यकलापेनभक्तियोगेन च जनाः पूजां कुर्वन्ति।

एतत् श्लोकार्थेन भगवतः सगुणोपासना) ,विग्रहाराधनादिकंव्यज्यते। (

अनेन भगवल्लक्षणस्वरूपनिरूपणेनैव वेदस्य" वेदत्वं उक्तम्। तथैव ,यजते स्वर्गकामः" , उद्भिदा यजेत पशुकामः - ,इत्यादि यत्किञ्चित्कामनया कृतानि न यज्ञानि , किन्तुमोक्षरूपसाधकानि यज्ञान्येव यज्ञपदवाच्यानि। तथा च "यज्ञो वै विष्णुःयज्ञ एवान्ततः , ",प्रतितिष्ठति[3] इत्यादि श्रुतिः "यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः[4]"

इत्यादि विष्णोः नामान्यपि यज्ञस्य विष्णुसारूप्यमेव दर्शयन्ति।

---

[1] भगवद्गीता -VI -41

[2] भगवद्गीता -VI -30

[3] तैत्तिरीयसंहिता 6 - 5 - 1 -

[4] विष्णुसहस्रनामानि

अत्र योगशब्देन प्राणायामादिकंनोच्यते। किन्तु रामकृष्णादिरूपपूर्णपुरुषमङ्गलध्यानादिकमेव प्रतीयते। तदैव तद्योगः सार्थको भवति। एकाग्रदृष्ट्या अनशनव्रतादिकं पालयन् भगवदर्थं कृत तप एव सत्यतया तपः। तदेव मोक्षसाधने तत्तपः उपकरोति।

समाधिशब्दस्य लोके स्थिरतया निश्चलभावेन वर्तमानत्वमर्थः। अत्र श्लोके तु अनन्यसाधारण भगवत्संस्मरणरूपादि नवविध भक्तिषु अन्यतमभक्तिः समाधिशब्दस्यार्थः।

हे परब्रह्मन्! तवेदं वपुः शुद्धसत्वस्वरूपं न भवति चेत् अज्ञानभेदकं सत् विज्ञानस्वरूपतया कथं प्रकाशते? ध्यातृभिः भक्तैः त्वं गुणैरेव अनुमीयसे। यस्य भक्तस्य हृदये येन वा रूपेण गुणेन वा त्वं स्मारितो भवसि तद्रूपेणैव तेषां हृदयेषु प्रकाशसे।

विज्ञायते अनेन दिव्यात्मस्वरूपमिति विज्ञानम्। विशिष्ट अपरोक्षज्ञानम्। तादृशविशिष्टज्ञानत्वादेव देहोऽहमित्यादि देवमनुष्यत्वादि भेदाभिमानरूपस्य अज्ञानस्य निवर्तको भवेत्। एवञ्च साक्षात्कारयोग्यस्य दिव्यमङ्गलविग्रहस्य माहात्म्यं दुरवबोधम्। अनुमेयस्य दिव्यात्मस्वरूपस्य ज्ञेयत्वं कथं?

अत एव सर्वज्ञः त्वम् येन रूपेणध्यायसे तत्स्वरूपेणैव प्रत्यक्षो भवसि।

"ये यथा मां प्रपद्यन्ते"तांस्तथैव भजाम्यहम्[1] , इति गीतावाक्यम् पूर्वोक्तविषयं द्रढी भवति।

हे देव! नामरूपजन्मादिरहित निर्गुणस्वरूपस्य तव नामजन्मादिनिरूपणं कथं शक्यम्? वेदोक्तवाचातदनुसारि मनसा च तव स्वरूपादिकं त्वद्भक्ताः योगिनः वा , विपश्चितः अनुमित्या तर्कयन्ति। किन्तु तव तत्वं इतरसजातीयतया न निरूपितव्यम्।

"जन्म कर्म च मे दिव्यं[2]" इति भगवदुक्तिरपि एतत्समर्थयति।

अत्र "देव क्रियायां" इति पाठे क्रियाशब्दस्य उपासनादिकमर्थः। "वेदक्रियायां" इति पाठे देवस्य वेदकर्माणि अग्नीन्द्रादिभगवन्नामनिर्देशकशब्दसत्वेऽपि तस्य भगवतः इतरसाजात्यक्लुप्तिः न भवति।

"अन्यान्या देवताः" इति श्रुत्या अग्नीन्द्रादीनां भगवदङ्गत्वादप्रधानत्वात् तेषां नामरूपाणि भवदीयानीति बुध्या वेदक्रियायां प्रचलन्ति। न तु तव नामरूपादिज्ञानेन।

यः तव नामानि कीर्तयन् तव गुणान् चिन्तयन् तव रूपादिकं सर्वदा अर्चनादि क्रियाभिः तव पादारविन्दसंलग्नमनस्कःसः पुनर् ,जन्मरहितः भवेत्।

---

[1] भगवद्गीता 10 -4 -

[2] भगवद्गीता 9- 4 -

अत्र श्लोके नवविधभक्तिषु अर्चन् स्मरणरूपा भक्तिः प्रकटीकृता।

पूर्वश्लोके न नामरूपे गुणकर्मइत्यादिना गुणजन्मनिरूपणं कर्तुं अशक्यमिति ... वदन् अत्र नामरूपादि स्मरणादिकं कथमिति चेत् लोके अंशधारणतया दृश्यमानरामकृष्णादि रूपादिकं अत्र भगवद्रूपत्वेन प्रतिपादितम्।

हे देव! भूभारापनोदनाय उद्भवतः तव मङ्गलकरैः पदैः पृथिव्याकाशौ अनुकम्पितौ। एवं देवाः तं तुष्टुवुः।

अत्र कृष्णरूपेण जातः श्रीमन्नारायणः आलम्बनम्। नारायणं कृष्णरूपमेव जातमात्रं तुष्टुवुरिति स्तोत्रस्य कृष्णपरत्वमेव। अचिरादेव जनिष्यमाणं नारायणं "यदूक्तम्" इति ते सम्बोधयामासुः। अतः कृष्णएवावलम्बनम्।

देवकीगर्भेस्थितः अचिरादवतीर्णः भुवः भारमपनोदयिष्यतीति हर्षः भक्तेरुद्दीपकः। "भारं भवो हर" इति प्रार्थना अत्र प्रमाणम्। "त्वां शरणं प्रपन्ना इत्युक्तेः नमस्कारः .." " अनुभावः।ये स्वयं रक्षका इति मन्यन्तेताननुशोचामः".... इति कथनात् भगवति स्वदैव्यनिवेदनम्निर्गुणस्य भगवतः गुणग्रहणं ,भगवतः सत्त्वादिगुणवर्णनात्स्मृतिः , स्वेच्छाकृतमितिश्च सञ्चारिणः।

"दिष्ट्याम्ब! ते कुक्षिगतः "... इति देवकीं प्रत्युक्तौ हर्षस्सञ्चारीअनुभावो वा। इति , भक्तिरसपरिपोषः।

**वासुदेवः**-[1]*

विष्णोः अवताराः अंशावेशपूर्णपरिपूर्णरूपेण चतुर्धा प्रसिद्धाः। मत्स्यकूर्मवराहाद्यवताराः अंशरूपत्वेनपूर्णरूपत्वेन ,परशुरामाद्यावेशरूपत्वेन ,नारसिंह , रामावतारः परिपूर्णरूपत्वेन कृष्णावतारः च सूचिताः।

परिपूर्णावतारतया स्थितमस्य कृष्णावतारस्य प्रामुख्यं ,भगवद्रूपत्वञ्च , ,प्रकटयितुं विष्णुः चतुर्भुजस्सन् ,पूर्वजन्मवरादीनां प्रभावेण देवकीवसुदेवयोः गलशोभिकौस्तुभस्सन्स्वस्य विश्वरूपं दर्शयित्वा ,श्रीवत्सलक्ष्मा ,शङ्खचक्रगदाधारी स्ववाचा तेषां कर्तव्यं उपदिदेश।

रामः भगवद्रूपोऽपि केवलमानव इव सर्वधर्मपरिपालकस्सन् प्रावर्तत। कृष्णः मनुष्यजन्मनि सम्भवन्नपि प्रारम्भे एव माधवरूपतया स्वस्वरूपं आविश्चकार। भाविकथासु – मृद्भक्षणवेलायांगीतोपदेशसमये पार्थाय च आविष्कृतं विस्वरूपप्रदर्शनं अत्र ,यशोदायै , सूतिकागृहे एव प्रारब्धम्।

तादृशपुत्ररूपं विष्णुं दृष्ट्वा परब्रह्मरूपपुरुषोत्तमसाक्षात्कारेण उत्पन्नतत्वक्षानः वसुदेवः परं पुरुषं एवं स्तोतुमारेभे –

साङ्खयोगमतेन भगवतः तत्वं न्यरूपयत् प्रकृतेः पर इत्यादिना। -

षोडशविकारैः मायासंयोजितैः सृष्टेः कारणत्वं प्राक् प्रतिपादितम्[2]। तत्र विकारप्रयोजकः भगवानिति भगवतः सृष्टेः कारणत्वम्। इयञ्च सृष्टिः सुखदुःखात्मिका , अनुभवैकवेद्यश्च। भूतानां सर्वेषां ,भवति। भगवांस्तु केवलानन्दमयः ,प्रमाणचतुष्टयज्ञेया मनसि व्याप्तः भगवान् तेषामिङिगितम् चेष्टितञ्च नियमयति।

भगवान् नारायण एव प्रकृत्या युक्तःत्रिगुणात्मकं विश्वम ,सृजत्। सुष्टवा च विश्वव्यापी बभूव। सर्वव्यापित्वेऽपि न गुणात्मकत्वं तस्य। अत एव "प्रविष्ट इव भाव्यसे" त्युक्तम्। वस्तुतस्तु न प्रविष्टः। अत्र "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः विरोधमाशंक्य परिहृतम् भागवतचन्द्रिकायाम्[3]।

सृष्टस्य जगतः सत्तारक्षणार्थं भगवतः अनुप्रवेशः। किन्तु सृष्टिः प्राणिरूपा। प्राणिनाञ्च स्वस्वकर्मानुसारेण फलभागित्वम्। तदा हर्षशोकादि विकारप्राप्तिः। लोकस्थितये

---

[1] X – 3 – 12 प्रभृति पर्यन्तम् 22

[2] उपोद्घातप्रकरणे 32,33 -पृ

[3] " स्वप्रकृत्या स्वस्य कार्योपयोगिविशेषणभूतया प्रकृत्या ननु तत्सृष्ट्वा तदेवानुप्राविशत् इति सृष्टप्रपञ्चे ममापि सृज्यतया प्रवेशः श्रूयत्। तत्कथमियानतिवादस्तव - इत्यत आह - भाव्यसेअतात्विकैरिति शेषः। ,निरूप्यसे , सृष्टस्य सत्तादि निर्हरणार्थं अनुप्रवेशः। नत्वनादि कर्मवासना वशात्सृजेष्वनुप्रवेश इति श्रुतेस्तात्पर्यम्। भागवतचन्द्रिका -X – 3- 12

लोकमनुप्रविष्टोऽपि न लोकस्य प्रारब्धादिकर्मफलभागित्याशयेन "प्रविष्ट इव" इति लोकस्य परमात्मनः भेदप्रकटनम्।

प्रवेशश्च स्थितिरूपः। अप्रवेशश्च कर्मातीतत्वमिति भगवतः उभयथा स्थितिः श्रुतेरविरोधेनैव सङ्गच्छते इति वीरराघवीयस्य तात्पर्यम्।

अत्र वैकारिके सर्गे महदादयः षोडशविकाराः प्रकृतिमापन्नाः नानाविधां सृष्टिं जनयन्ति। तत्र विकाराणां संयोगे हेतुः। प्रलये त एव विकाराः पृथग्भूताः। प्रकृतौ लीनाः वैकारिकं सर्गमुपसंहरन्ति। सर्वोऽपि वैकारिकस्सर्गः गुणव्यतिकारात्मकः।

भगवत एव मायया एते विकाराः सन्निपत्य अर्थात् युगपद्मलनेन पुरुषमनुगता इव दृश्यन्ते। किन्तु विकारेभ्यः प्रागेव पुरुषस्य स्थित्या न पुरुषस्य वैकारिकत्वम्।

एवं भगवतः सृष्टिकरणमुक्त्वा तत्र दृष्टान्तं दर्शयति – बुध्या सत्वरजस्तमोगुणानां स्वरूपमनुमीयते। इन्द्रियग्राह्याणां रूपरसगन्धस्पर्शादीनां लक्षणञ्च निरूप्यते।

इन्द्रियाणां एकैकस्मिन्नेव शब्दादिगुणे श्रवणादेः पर्याप्तत्वम्। बुद्धिस्तु इन्द्रियैर्युक्तः सर्वान् गुणान् पर्यायेण यौगपद्येन वा ग्रहीतुमीष्टे।

एषाऽपि बुद्धिः विकारैरावृता। अतः भगवान् न बुद्धिगम्यः। यतोऽयं अनावृतः। बुद्धेः ज्ञानं परिमितम्। भगवान् सर्वात्मकःआत्मवेद्य इति भगवत्तत्वस्य न ,न बहिरिन्द्रियग्राह्यः , बुद्धिग्राह्यत्वम्।

यः पुरुषः देहादीन् पदार्थान् आत्मव्यतिरिक्ततया पश्यतियद्वा देहादिरेव आत्मेति , तदुभयथा अविद्वान् भवति। ,निश्चिनोति

हे भगवान्! समस्तस्यास्य जगतः उत्पत्तेःलयस्य च त्वमेव कारणम्। भवांस्तु ,स्थितेः , विकारातीतश्च। ईश्वरे गुणबुद्धिस्तु गुणानां भगवदाश्रयणात् उप ,गुणातीतः ,निरीहःचरिता। गुणसारूप्यञ्चात्र अभेदोपचारहेतुः।

अथ गुणात्मनो भगवतः स्वरूपं वर्णयति -

त्वमेव लोकस्थितये सत्वगुणमाश्रितः शुक्लवर्णं ,रजोगुणमाश्रतः रक्तवर्णं , तमुगुणमाश्रितः कृष्णवर्णं बिभर्षि।

अत्र स्वीकृतलीलावतारः कृष्णः कृष्णवर्ण एव। अतश्च कृष्णजन्म कृष्णस्य कृष्णवर्णेन जगत्संहारकत्वं सूचयति। संहारश्च भूभारभूतानामेवेत्यर्थः वर्णप्रस्थावनया सूच्यते इति श्रीधरः[1]।

---

[1] "एवमयं भारापनयनार्थं अवतार भाव इति ज्ञातव्यः- " श्रीमद्भागवतम् - भावार्थदीपिका -X – 3 - 19

एवं नारायणबुध्या स्तुत्वा भगवतः अपरिमेयशक्तिं जानन्नपि भगवन्मायया लोकसहजेन पुत्रवात्सल्येन कंसाज्जागरुको भवेत्युपदिशति।

अत्र विस्मयरसेन मिलितः वात्सल्यभक्तिः प्रधानो रसः। भगवान्नारायणः आलम्बनम्।

"तमद्भुतं बालकमम्बुजेक्षणं।

चतुर्भुजं शंखगदाद्युदायुधम्

श्रीवत्सलक्ष्मं गलशोभिकौस्तुभम्।

पीताम्बरं सान्द्रपयोदसौभगम्[1]।।"

इति श्लोकमात्रे विस्मयः सञ्चारी। ततः नारायणस्य अद्भुतगुणस्मृतेः विस्मयः स्थायी अद्भुतरसपोषकः। भक्तेः विस्मयस्य च समावेशः एकत्र अनुकूल एव। विस्मयश्च भक्तेरङ्गत्वम्। सर्वेऽपि शब्दाः नारायणपराः" तथाप्यन्ते ,अयंत्वसभ्यस्तवजन्म नौ गृहे– " इति वाक्यमात्रात् पूर्वोक्तिरपि प्रबन्धव्यङ्ग्यतया वात्सल्यभक्तिरेव भवति। अत्र भगवद्गुणानुकीर्तने औत्सुक्यंकृष्णं हन्यादिति निर्वेदः ,कंसः आगमिष्यसीति शङ्का , सञ्चारिणः इत रसपरिपोषः।

---

[1] श्रीमद्भागवतम् - भावार्थदीपिका -X – 3 - 19

**वसुदेवः** *[1]–

कृष्णदर्शनार्थमागतान् कश्यपादीन् महामुनीन् दृष्ट्वातैश्च कृतं कृष्णस्तोत्रं श्रुत्वा तेषां , एतादृशैरपि ऋषिभिस्स्तुतः श्रीकृष्णः अलोकसामान्य इति ,महानुभावानां जानन् वसुदेवः – मत्वा बलरामसहितं कृष्णमेवं स्तौति

महायोगिशब्दः कृष्णविशेषणम्। सनातन इति सङ्कर्षणस्य। द्वावपि विष्णुरूपौ इति वसुदेवस्य मतिः। तत्प्रधानं प्रवृतिः। पुरुषः विराट्। तयोर्द्वन्द्वे सृष्टिक्रमः। तादृशौ युवां सृष्टिस्वरूपौ जाने। यस्मिन् यस्मिन् वस्तुनि येन कर्त्रा कारणेन वा यस्य जन्तोः यस्मै प्रदेयं यद्विद्यते तत्सर्वं भगवानेव। ,

अत्र सर्वकारकप्रयोगात् लोके सर्वाऽपि क्रिया भगवत्सङ्कल्पेनैव चलतीति प्रतिपादितम्। यच्छब्दप्रयोगस्तु कारकवैचित्रीप्रयोजकः। एवं कर्त्रुकर्मकरणसम्प्रदानापादाननिमित्ताधिकरणादिः सृष्टिप्रवर्तकः यावान् द्रव्यविशेषभेदः स सर्वोऽपि तत्स्वरूप एव।

त्वत्सृष्टाः सर्वे पदार्थाः त्वयैव व्याप्ताः तिष्ठिन्ति। न केवलं पदार्थमात्रंकिन्तु , ज्ञानशक्तिश्च प्राणिषु त्वमेव। सर्वत्रापि निमित्तनैमित्तिकयोरभेदः। ,क्रियाशक्तिः ,प्राणशक्तिः कृष्णः निमित्तं पदार्थाः नैमित्तिकाः।

प्राणशक्तिक्रियाशक्तिजीवशक्तीनां लोककारणानां त्वमेव कारणमसि। यतस्सर्वाः शक्तयः परतन्त्राः। शक्तित्रयं भगवानित्युक्त्वा पुनस्तासां पारतन्त्र्यं कथमिति शङ्क्या समाधत्ते – त्वमेव लीलया शक्तिरूपप्रयोज्यतां तासां प्रयोजकताञ्च बिभ्रन् कार्यकारणरूपी भूत्वा द्विधा प्रवर्तसे – इति।

इदानीं पञ्चभिश्श्लोकैः भगवतस्सर्वपदार्थरूपतां स्तौति –

चन्द्रस्य कान्तिः ,विद्युतां तीव्रप्रकाशः ,नक्षत्राणां स्थितिः ,अग्नेस्तेजः सूर्यस्य प्रभा , पञ्चभूतानां शब्दरूपरसगन्धस्पर्शादि गुणाश्च त्वमेवासि। अपि च अप्सु ,पर्वतानां स्थैर्यं सहः मन ,तृप्तिजनकं रसलक्षणं यद्विद्यते तदपि त्वमेव। ओजः अन्तश्शक्तिःश्शक्तिः बलं , – शरीरशक्तिश्च प्राणिनां त्वमेवासि[2]।

---

[1] X – 85 -3 प्रभृति पर्यन्तम् 20 -

[2] तथा च श्रुतिः " -न तत्र सूर्यो भातिकुतो ,नेमा विद्युतो भान्ति , न चन्द्र तारकं ,ऽयमग्निः। तमेव भान्तमनुभाति सर्वं"तस्य भासा सर्वमिदं विभातीति ,।

तथा च स्मृतिः " -यदादित्यगतं तेजोजगद्भासयते ,ऽखिलं" तत्तेजोविद्धि मामकम् ,यच्चाग्नौ ,यच्चन्द्रमसि ,। इति।

भावार्थदीपिका -X 7 -85 -

दिशामवकाशरूपः त्वमेवासि। आकाशेऽपि शब्दगुणः त्वमेव।

अत्र रामकृष्णावाहूय द्विवचनान्तेन सम्बुध्य पुनश्च एकवचनाश्रयणं तयोरैक्यबुध्या कृतम्। प्रथमतः द्वयोः स्तुतावपि अनन्तरं कृष्णमुद्दिश्यैव वेत्ति।

अपि च वर्णेषु स्फोटरूपः यश्शब्दः परावस्था रूपः सः त्वमेवासि। पश्यन्ती वाग्रूपो नादश्च त्वमेवासि। मध्यमारूपः ओङ्काररूपश्च त्वमेव। ततः वर्णनिष्पादिका वैखर्यपि तवैव रूपम्।

"वैखरीशब्दनिष्पत्तिःमध्यमा श्रुतिगोचरा। ,

आन्तरार्थात्तु पश्यन्तीसूक्ष्मा वागनपा ,यिनी[1]।। इति।

तत्र वैखर्याः स्वरूपमेव श्रुतिगोचरं भवति। इतरासां त्रिसॄणां स्वरूपं योगिगम्यमेव। तथा च श्रुतिः –

"चत्वारि वाक् परिमिता पदानि।

तानि विदुर्ब्राह्मणा ये मनीषिणः।

गुहा त्रीणि निहता नेङ्गयन्ति

तुरीयं वाचं मनुष्या वदन्ति[2]।।" इति।

आकृतीनां व्यक्तिनिर्देशकारणं जातिरूपः त्वमेवासि। जात्यादयश्च सङ्केतग्राहकाः।

पूर्वं भगवतः वाक्स्वरूपत्वमुक्त्वा इदानीं सङ्केतितत्वमपि अनेन निरूपयति-

तत्र सङ्केतग्रहः जाताविति मीमांसकाः। जातिविशिष्टायां व्यक्तौ सङ्केत इति नैयायिकाः जातिगुणक्रियायदृच्छासुशक्तिरिति वैयाकरणाः[3]।

अपि च इन्द्रियेषु गन्धग्राहकादयः घ्राणादिषु याश्शक्तयः ता अपि त्वत्स्वरूपा एव। बुद्धेः ज्ञानमपि त्वमेवासि।

सर्वप्राणिनां त्वमाद्योऽसि। घटादिषु मृदः विकारेषु कारणं मृदादिरूपं त्वमेवासि। एवं तैजसानामपि सौवर्णादीनाम्।

नश्वरेषु द्रव्येषु स्थायीपदार्थः त्वमेवासि। यथा मृत्तिका घटादिषु।

पूर्वस्यैव भङ्ग्यन्तरमिदम् –

---

[1] महाभाष्यम् - प्रथमाह्निकम्     33- उद्योतव्याख्या -पृष्टम्

[2] महाभाष्यम् 30 - 1 (पतञ्जलि कृतम्) -

[3] विस्तरस्तु " -सङ्केतितश्चतुर्भेदो जात्यादि र्जातिरेव वा " इत्यत्र द्वितीयोल्लासे काव्यप्रकाशे द्रष्टव्यः।

परमात्मस्वरूपेण त्वया योगमायया कल्पिताः त्रयः गुणाः त्वयि प्रवर्तितुं न प्रभवन्ति। यतस्त्वं गुणातीतः।

तव गुणातीतत्वादेव वैकारिकाः अर्थात् – अहङ्कारादि षोडशविकारैः जन्याः विकाराः त्वां न बाधन्ते।

अविकारिणि त्वयि यद्यपि कदाचिद्विकाराः दृष्टा इव भान्तितथा ,ऽपि तद्दर्शनं व्यावहारिकमेव। मूढास्तु त्वय्यपि गुणप्रवादं प्रकल्प्य तव सूक्ष्मां गतिमज्ञात्वा कर्मणिः बद्दाः संसारे घोरे पतन्ति।

एवं रामकृष्णयोः अलौकिकं तत्वं निरूप्य स्वस्य अज्ञानित्वं प्रकटयन् प्रपत्तिं प्रस्तौति।

अनेकैर्जन्मभिरप्राप्यं मनुष्यत्वं प्राप्य भवान्माययैव मोहिताः वयं स्वार्थे प्रवृत्ताः।

असावहं वसुदेवःमम देहो ,ऽयं इत्यादि बुद्धिं मय्युत्पाद्यताद्दशममकारेण स्नेहपाशान् , प्रकल्प्य त्वया वयं बद्धाः। एवमेव सर्वमपिजगत्।

युवां मे पुत्रौ। साक्षात्प्रकृतिपुरुषरूपौ। यद्वा प्रधानपुरुषेश्वरः। नारायणः। नारायण स्वरूपिणौ युवाम् स्थः। नारायणस्य प्रधान पुरुषेश्वरत्वं अत्रैव महाभागवते निरूपितम्[1]–

भूभारावतरणाय अस्मद्गृहे जातौ। तस्मात् युष्मच्छरणागतोऽस्मि। मयि इन्द्रियलालसा बुद्धिः उपसंह्रियताम्। तथैव त्वय्यपत्यबुद्धिश्च अज्ञानकृता इतः परं मास्तु।

भवान्नारायणस्वरूप इति जातमात्रे त्वयि सूतिकागृहे एव मां बोधितवान्। अवतारकारणमप्युक्तम्। त्वया " -नारायणोऽहं द्विधाभूय अवतीर्णोऽस्मि– " इति पूर्वमेवोक्तम्। तथाऽपि तत्सर्वमहं विस्मृतवानस्मि। धर्मरक्षार्थं यावत्यः आकृतयः त्वं बिभर्षि

---

[1] " वैकारिकस्तेजसश्च तामसश्चेत्यहंत्रिवृत्।  तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः।।"

श्रीधरः - यतस्तन्मात्रादीनां कारणम्। मनश्शब्देन देवतानामप्युपलक्षणम्। चिदचिन्मयः चिदाभास व्याप्तत्वादुभयग्रन्थिरूप इति जीवोपाधित्वं दर्शितम्। यद्यपि "श्रु "तस्माद्वा एतस्मादात्मन आकाशस्संभूतः" इत्यादि श्रेतेः। अन्नमयं हि सोम्य मनः" इत्यादि श्रुतेश्च। प्रथमं भूतानि जायन्ते। तेभ्यश्चापञ्चीकृतेभ्यः प्राणादिक्रमेण समष्ट्यात्मकं लिङ्गशरीरम्। पञ्चीकृतेभ्यश्च ब्रह्माण्डम्। तस्मिन् वैराजस्तदन्तर्यामी लीलाविग्रहः क्षीराब्धिशायी नारायणः। तन्नाभिपद्मे च वैराजस्य भोगविग्रहश्चतुराननः। ततो यथावसरमन्येषां जीवानामाविर्भाव इति प्रक्रिया। तथाऽपि चित्ताभिव्याक्तिपूर्वकोऽहङ्कारलः। ततो भूतेन्द्रियादि व्यवहार इत्येतावता महदादि क्रमेण सृष्टिरुच्यते। तथा चोक्तं  "मृल्लोहविस्फुलिङ्गाद्यैस्सृटिर्या चोदितान्यथा। उपायस्सो,ऽवताराय नास्ति भेदः कथञ्चन।।" इति।

श्रीमद्भागवतम्  -XI  अपि च 7- 24 -

भावार्थदीपिका  -XI 737)7- 24- पृ(

तावत्यः को वा वेत्तुं प्रभवति– ? इति स्तुत्वा वाचः संहृत्य प्रणतः तूष्णीं तस्थौ। ततः नारायणोऽपि तस्मै स्वतत्वं[1] निवेद्य तं कृतार्थं चकार।

अत्र वसुदेवगता वात्सल्य भक्तिरूपा भगवद्रतिः स्थायी।

तथा च -

"एको वत्सलभक्त्याख्यः प्रेयो भक्तिस्तथापरा।

भयजा रतिरध्यास्ते रसं प्रति भानकम्[2]।" इति

भगवानालम्बनम्। ऋषिभिः कृतं स्तोत्रमुद्दीपनम्। कृष्णकृष्णेति श्लोके अभिनन्दनादयोऽनुभावाः। स्वपुत्रः लोकोत्तरैः मुनिभिरेव स्तुत इति विस्मयः। स्वपुत्र एव स्वयं भगवानिति ज्ञानं मतिः "जाने वामस्य "..... इति श्लोकेन। "भूतानामसि भूतादिः" इत्यारभ्य ,....त्वय्यद्या ब्रह्मणि परे".... इत्यन्तः स्मृतिःसूतिगृहे एव भगवान् स्वमनुजग्राहेति , संसारबन्धमोचिका धृतिश्च सञ्चारिणः इति भक्तिरससमन्वयः।

नारायणत्वेन ज्ञातस्य श्रीकृष्णस्य स्तुतिरिति दिव्यस्तोत्रमेतत्।

---

[1] " वचो वस्समवेतार्थं तातैतदुपमन्महे। यन्नः पुत्रान् समुद्दिश्य तत्वग्राम उदाहृतः।।
अहं यूयमसावार्यइमे च द्वारकौकसः। सर्वेप्येवं यदुश्रेष्ठ विमृश्यास्सचराचरम्।। ,
आत्माह्येकस्स्वयं ज्योतिर्नित्योऽन्यो निर्गुणोगुणैः। आत्मसृष्टैस्तत्कृतेषु देहेषु बहुधेयते।।
खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशमम्। आविस्तिरोऽल्पभूर्येक नानात्वं यात्ससावपि।। श्रीमद्भागवतम् -10 - 22,23,24-85

[2] भक्तिरसामृतसिन्धुः 62 - 2 -

**ब्रह्मा** –[1]*

एकदा ब्रह्मा स्वलीलाः प्रदर्शयन्तं कृष्णं दृष्ट्वा "विधातरि मयि स्थिते किमेवं कृष्णेन क्रियतेगोवत्सान् ,इति कृष्णाय अभ्यसूयितः। अजगररूपेण कृष्णरामवर्ज्यं गाः ... " गोपालांश्च ग्रसित्वा इदानीं कृष्णः किं वा करिष्यतीति दृप्तोऽभूत्। तदा कृष्णः स्वयमेव गावः गोवत्साः गोपालकाश्चेति अनेकधा विभक्तरूपः किमप्यजानन्निव नन्दगोकुले यथापूर्वं सुखं तस्थौ।

कदाऽपि कृष्णमाया विच्छिद्यतेतदा कृष्णः जितो भवतीति ब्रह्मा प्रतीक्षमाण , आसीत्। एवं संवत्सरकालः असीतः। कृष्णेन कथमियं आपत्तीर्णेति चिन्तयित्वा ब्रह्मा नन्दगोकुले बद्धदृष्टिः गाः गोपालांश्च यथापूर्वं स्थितान् ददर्श। एवं कथं वा भवेयुरिति दिव्यया दृशा वीक्षमाणः तत्रत्याः गाःतत्रत्यान् गोपालकांश्च साक्षान्नारायणरूपिणः ददर्श। , नारायणेन स्वयमेवं बहुधा विभज्य गोगोपालरूपेण स्थीयत इति ज्ञात्वा कृष्णापहृतमदः – तदन्तिकमागत्य कृष्णं क्षमां शरणञ्चप्रार्थयन् एवं नौमीत्यादिना तुष्टाव

प्रथमतः कृष्णस्य बाह्यसौन्दर्यं स्तौति नौमीति –

घनश्यामशरीरस्य ,शिखिबर्हलाञ्छितशिरसे ,शम्पागौरवस्त्रधारिणे , ग्रासकबलेन कल्यवर्तेन ,वनमालिने ,तादृशालाङ्कारेण शोभितहसन्मुखाम्बुजाय गोपालरूपो ,पद्मवन्मृदुपदे ,वेणुधारिणे ,भूषितकरायऽपि मन्मथसमानसुन्दराय तुभ्यं नमः।

अत्र "नौमि" इति क्रियासम्बन्धेन

स्तोत्रेऽस्मिन् 'पशुपाङ्गजाय' इत्यत्र पशून् गाः पातीति पशुपः। पशुपश्चासौ अङ्गजश्चेति– गोपालरूपाय मन्मथायेति यथाश्रुतं अर्थग्रहणम्। पशुपः , नन्दःअङ्गजशब्दो , यौगिकत्वे वसुदेवपुत्रत्वापवादात् नन्दगोपकुमाराय तुभ्यं ,पुत्रपर्यायरूढः। न तु यौगिकः नमः।

अत्र "नौमि" इति क्रियासम्बन्धेन व्यापाराश्रयः ब्रह्मा कर्ता फलाश्रयः कृष्णः कर्मेति। , "पशुपाङगजं नौमी"त्यादि द्वितीया विभक्तिः सर्वत्र स्यात्। यद्वा साक्षान्नामशब्दे प्रयुक्ते "नमः स्वस्तीति "... चतुर्थी वा स्यात्।

'पशुपाङ्गजाय नौमि' इत्यादि प्रयोगस्तु कारकरूपः वैयाकरणमते न सिध्येत्। आर्षत्वात् साधुरिति यद्यपि वक्तुं शक्यतेतथा ,ऽपि शास्त्रदृशैव साधयितुमेवं शक्यते-

[1] X 1- 14 - प्रभृति पर्यन्तम् 40

तत्र प्रथमपक्षो द्वितीयार्थे चतुर्थी। यद्वा नौमीति क्रियया प्रस्तुतस्य भगवतः कर्मत्वेन ज्ञाने कर्मणः नमस्कार्यत्वे किं प्रयोजनमित्याशङ्कायां - ,प्रयोजनापेक्षया विशेषणान्वयेन भगवानेव प्रयोजनमिति तादर्थ्ये चतुर्थी। तस्मैतदर्थम्। तदर्थमेव तादर्थ्यम्।

यद्वा कर्म अध्याहार्यम्। प्रथमतः चतुर्थ्यन्तैः अन्वयं कृत्वा तादृशाय कृष्णाय नमः इत्येकं वाक्यम्। पुनः भगवन्तमुद्दिश्य युष्मच्छब्दाध्याहारेण तादृशं त्वां प्रसादयितुं नौमि – इति वाऽर्थः।

एष सर्वोप्यर्थः श्रीधरेण सङ्क्षेपतः एवमुक्तः। द्वितीयार्थे चतुर्थी। अथवा नौमीत्युक्त्वा - प्रयोजनापेक्षायां एवं भूतः भगवानेव प्रयोजनमिति तादर्थ्ये ,प्रस्तुतस्य भगवतः कर्मत्वे ज्ञाते चतुर्थी। यद्वातुभ्यं प्रसादयितुं त्वामेव नौमीत्यर्थः[1]।

यद्वा पशून् इन्द्रियाणि पान्ति रक्षन्तीति देवाः" ,ते एवाङ्गजाः ,चन्द्रमा मनसो जातः[2]" इत्यादि श्रुतेः। देवतानामपि उत्पत्तिहेतवे ते नमः।

एवं बाह्याकारेण सर्वसुलभदर्शनोऽपि भगवान् किमर्थमेवं स्तूयते? इत्याशंक्य समाधत्ते – एवं पशुपालरूपेण स्वेच्छया स्वीकृतावतारस्यापि भूतमयस्य, ज्ञातुं अहमपि न समर्थः। साक्षात्वयि बद्धमनस्काः , अप्रमेयशुद्धसत्वात्मकस्य तव महिमानं आत्मारामाः अपि त्वां वेत्तुं न प्रभवन्ति। किमुत साधारणाः इत्यर्थापत्तिः।

ब्रह्मणाऽपि दुर्ज्ञेयः कथमन्यैर्ज्ञेयो भवति? एवं दुर्ज्ञेयस्याराधने किं वा ज्ञानमुत्पद्यते इति सर्वमाकुलम् स्यादित्याह-

ये च ज्ञानसम्पादने प्रयासः वृथा – इति ज्ञात्वा त्वत्प्रणामपराःत्वत्कीर्तनपराश्च , भूत्वा करणत्रयेण भवन्तमेवाश्रयन्ति तैः त्वं ज्ञातो भवसि।

अजितःजितो ,ऽसि इति विरोधाभासः। ब्रह्मादिभिर्देवैः कर्मज्ञानेन्द्रियैः मायया वा नजितः किन्तु भक्त्या भगवान् जितो भवतीति विरोधपरिहारप्रकारः।

मोक्षोपायेषु बहुषु भक्तिरेव गरीयसी[3]। भक्तिज्ञानयोः भक्तिर्गरीयसीत्युच्यते। ज्ञानादेवहि कैवल्यं इति श्रूयतेतयोः किमन्यतरत्प्रमाणमिति शङ्कया भक्त ,िं विना ज्ञानं तु नैव सिध्येदित्याह –

श्रेयसां श्रुतिं अभ्युदयापवर्गलक्षणानां प्रवाहरूपं भवन्तमुपेक्ष्य ये केवल ज्ञानमार्गाश्रिणःतेषां क्लेशः न फलप्रदः। यथा कश्चिदुलूखले धान्यमवहृत्य तुषं गृहीत्वा ,

---

[1] भावार्थदीपिका 1 - 14 - -1 -

[2] पुरुषसूक्तम् 6 - 1 -

[3] विवेकूडामणिः 31-

तस्य अवहननव्यापारः क्लेशायैव भवति। ,तण्डुलानि परित्यजतितथा भक्तिं व्युदश्य ज्ञानिनाम् क्लेशोऽपि। केवलं ज्ञानं नापवर्गाय भवतीति यावत्।

यति केवलाद्ज्ञानात् नापवर्गःकेवलभक्त्या किमु भवेदिति पर्यनुयोगं कृत्वा भक्त्या , – कैवल्यं भवेदिति सिद्धान्तयति

इहलोके पुरा योगिनोऽपि त्वदर्पितसकलकर्माणः भवत्कथा श्रवणरूपया ,भक्त्या परां गतिं प्रापुः।

इदानीं भक्तिज्ञानयोः प्रकारमुक्त्वा साङ्ख्ययोगदिशा श्लोकद्वयेन स्तौति –

महदादयः षोडशविकाराःभूतांशाः मनोबुद्धिचित्ताहङ्कारश्चेति पञ्चविंशति , सङ्ख्याकैः विकारैश्च जगत्सृष्ट्वाऽपि त्वमविकारी। भवतः अविकारित्वं स्वरूपानुभवेन योगिभिरेव ज्ञेयम्। अन्यज्ञानचिन्तां परित्यज्य त्वदासक्तधियः त्वां जानन्ति। "अमलान्तरात्मभि"रित्यत्र पूर्वपदस्थस्य 'महिमा' इत्यनेनापि अन्वयेन व्याख्यातं वीरराघवेण[1]।

एतादृश एवाभिप्रायः श्रीधरस्यापि स्यात्। यतः "मां सर्वतोऽन्तरङ्गा लक्ष्मीरपि यथा यादृग्वस्तुतया तेन रूपेणाविबोद्धुं किमर्हति "नार्हत्येवेत्यर्थः -। इति अतः श्रीधरीयराघवीययोः परस्परसमन्वयेन एवं वक्तुं शक्यते। लक्ष्मीः सर्वान्तरङ्गा। सर्वेषां - मनांसि वेत्ति। नारायणस्यापि वक्षःस्थिता। अतः तस्यान्तरङ्गं वेत्तुं प्रभवति। तथाऽपि न बोद्धुं शक्य इति।

स्वेच्छया सृष्ट्यर्थं स्वीकृतत्त्रिगुणस्पि तव गुणानामियत्तां ज्ञातुं के वा प्रभवन्ति ?

---

[1] " महि त्यस्यैव महिमार्थः। मा लक्ष्मीरपि। अमलान्तरात्मभिः नित्यशुद्धस्वरूपैस्सनकादिभिस्सहेत्यर्थः। ते तव गुणस्यैकस्यैवानन्दादेरित्यर्थः। महि महत्वं बोद्धंनार्हति। कुतः? तस्यानन्यबोध्यात्मतया। भगवद्ज्ञानव्यतिरेकेणान्यैः बोद्धुमशक्यस्वभावतया हेतुनेत्यर्थः। तथाऽपीत्यत्र अपि शब्देनान्वयं कृत्वा माऽपि तथा विबोद्धुं नार्हतीति योजना। यथा भगवान् स्वज्ञानेन स्वगुणमहत्वं वेत्ति तथा लक्ष्मीरपि। सनकादयोऽपि स्वस्वज्ञानेन विबोद्धु नार्हन्तीत्यर्थः। यद्वा ते गुणस्यापीत्यर्थः। महिमा अमलान्तरात्मभिः प्रत्याहृतेन्द्रियैर्महात्मभिः अन्यथा योगचक्षुरादि प्रकारान्तरेणतथा विबोद्धुं बोधे गोचरीभवितुं नार्हति। हि , यस्मात् स महिमेति शेषः। स्वानुभावात् स्वस्य तव धर्मभूतज्ञानादेव विबोद्धुमर्हति ज्ञातुमर्हतीति शक्यत इत्यर्थः।

यद्वा अगुणस्य हेयगुणरबितस्य तवेत्यर्थः। महिमा अविक्रियत्वादि वेशेषितात् स्वानुभावादपि। अन्यथा च स्वयं प्रकाशकत्वशक्त्या चेत्यर्थः। अमलान्तरात्मभिः नित्यमुक्तैस्सह ते त्वयाऽपि तदा विबोद्धुम्। त्वन्महिम्नो यादृशत्वं तत्तथा ज्ञातुं न शक्यत इति योजना। द्वयेप्यनन्यबोध्यात्मत्वमेव हेतुः। श्रु " -भोऽङ्ग वेद यदि वा न वेद" इति। अत्र योजनायां - ध्यायस्य भगवतो हेयप्रत्यनीकत्वमस्मिन् कल्याणगुणैकतानत्वं उत्तरश्लोकेचेत्युभयलिङ्गत्वमुक्तम्। "

भागवतचन्द्रिका –x 6- 14-

सगुणस्यापि गुणान् ज्ञातुं सर्वैर्न शक्यते। किमुत निर्गुणस्येत्यर्थापत्तिः।

इदानीं भगवत्प्राप्त्यर्हं निर्दिशति – यः सर्वान् भवबन्धान् परित्यज्य त्वयि स्थिरां मतिं कृत्वाइति। - सः कैवल्यार्हो भवति। ,कर्मणा च त्वामेव शरणं प्राप्य जीवति ,मनसा ,कायेन ,

एवं स्तुत्वा भगवन्तं क्षमापयितुं चतुर्भिश्श्लोकैः स्वापराधमङ्गीकरोति –

भगवन्। मम मूढतां त्वं प्रत्यक्षं वीक्षसे। यतस्त्वामहं मायिनं मन्वानः त्वयि मायां प्रयोक्तुं साहसमकरवम्। यथा अर्चिः अग्नेः पृथग्भूत्वा अग्नेस्समक्षं स्वप्रकाशं दर्शयितुं न प्रभवति। तद्वदहमपि त्वयि मायां दर्शयितुं न शक्नोमि। तथाऽपि रजोगुणप्रभावेण ज्ञानाभावाच्छैवमनुष्ठितम्। सर्वाधीश्वरे त्वयि स्थिते अहमात्मानमीश्वरं कथं मन्ये? एवमज्ञानान्धकारेणाच्छादितधियं मां "परतन्त्र" इति बुध्या क्षन्तुमर्हसि।

अहं तावत् महदहङ्कारपञ्चभूतादिभिः वेष्टितस्य एकैकब्रह्माण्डमात्रस्य प्रभुरस्मि। त्वं तु अपरिमेयानाम् ईदृशानाम् ब्रह्मण्डानाम् स्रष्टापोषकश्चापि। अथ पर्वते प ,रक्षकः ,रमाणौ च यदन्तरं तदेवान्तरमावयोः।

ईदृशः अल्पीयान् किमर्थमेवं साहसं कृतवानस्मीत्याशङ्क्य वक्ति –

मातुः गर्भगतश्शिशुः पद्भ्यां मातृगर्भं ताडयति। किं तदपराधाय कल्पते ?- एवं ज्ञानहीनेन मया कृतमागः क्षन्तव्यम्।

अहमपि त्वत्तो जातः। यतस्त्वं नारायणः। ईश्वरस्य सर्वथा स्वतः प्रभावत्वमेव न तु परोत्पन्नत्वम्। त्वदुत्पन्नोऽहम् कथमीश्वरो भवामि?

नारायणशब्दार्थस्तु श्रीधरेण बहुधा व्याख्यातः –

"नारं जीवसमूहःअयनं आश्रयो यस्य स तथेति। त्वमेव सर्वदेहिनामात्मत्त्वान्नारयण , !इति भावः। हे अधीश त्वं नारायणो नहीति पुनः काकुः। अधीशः प्रवर्तकः। ततश्च नारस्यायनं प्रवृत्तिर्यस्मात् स तथेति। पुनस्त्वमेवासाविति। किञ्च त्वमखिललोकसाक्षी। अखिललोकं साक्षात् पश्यसि। अतो "नारमयसे जानासीति" त्वमेव नारायण इत्यर्थः।

नन्वेवं नारायणपदव्यत्पत्तौ भवेदेवम्। तदन्यथा प्रसिद्धमित्याशङ्क्याह – नारायणोऽङ्गमिति। नरादुद्भूता ये अर्थाः चतुर्विंशति तत्वानि। तथा नाराज्जातं यज्जलं , तदयनाद्यो नारायणः प्रसिद्धः। सोऽपि तवैवांशं मूर्तिः। तथा च स्मर्यते " -नराज्जातानि तत्वानि नाराणीति विदुर्बुधाः।

तस्य तान्ययनं प्रोक्तं तेन नारायणस्स्मृतः।।" इति। तथा च मन -ुः –

" आपो नारा इति प्रोक्ता आपो वै नरसूनवः।

ता यदस्यायनं पूर्वं तेन नारायणस्मृतः[1]।।" इति

ननु मन्मुर्तेरपरिच्छिन्नायाः कथं जलाश्रयत्वं– किन्तु तवैव मायया कल्पितं , अपरिच्छिन्नत्वादिति भावः।

अथ नारायणशब्देन जलजातत्वमेव कथ्यते किं त्वया दृष्टोऽस्मि इति कृष्णं कल्पयित्वा भगवतः अपिच्छेद्यत्वमेव प्रतिपादयति –

भवान् जलान्तर्गतोऽपि मे योनिभूतस्य कमलनालस्य मार्गान्तरेण बहुकालं चिन्वता मया त्वं न दृष्टः। ततः तीव्रे तपसि मया तप्ते त्वं दृष्टोऽसि।

"हृदि सुदृष्ट"मित्यनेन तप एव गम्यते।

मायायाः अपसारके अस्मिन्नेव कृष्णावतारे त्वया स्वमात्रे यशोदायै विश्वरूपं दर्शितः किल। तत्र बहिर्दृश्यं सर्वं प्रपञ्चं भवतः अन्तरे तया दृष्टम्।

यस्य तव जठरान्तरे सर्वमिदं प्रपञ्चं यथा स्वरूपं तिष्ठति तादृशं लोकानां स्थानं त्वयैव मायया विना कथं भवति? तादृशामेयप्रभावस्य तवैव मायया मोहितोऽहम्।

मया याश्च गावः अन्तर्हिताः ताश्च यथापूर्वं व्रजपुरि दृश्यन्ते। यावन्तो गोपालकाः मया हृताः तावन्तस्सर्वेऽपि व्रजे स्वस्वरूपैः प्रवर्तमाना अपि मया चतुर्भुजाःपुण्डरीकाक्षाः , इव दृष्टाः। अतस्तव विश्वरूपं मायात्वञ्च मयाऽपि दृष्टमेव। त्वां परब्रह्माणं जानन्नपि अहमत्र तवैव मायया मोहितः।

मया तव विश्वरूपंमायारूपञ्च युगपदेव दृष्टमित्युच्यते। अद्वितीये मयि कथं , – तव नानाबुद्धिरिति प्रश्नं स्वयं तर्कयित्वा ब्रह्मा स्वयमेव समाधत्ते श्लोकद्वयेन

तव स्वरूपमजानतामज्ञानां नानात्वबुद्धिः। नायं परब्रह्मेतिबहुधाभिन्न इति। , – सा तु मायाकृता। ज्ञानिनामपि नानात्वबुद्धिः यथा त्वं सत्वमयः लोकान् पालयसितत्तो , ततो ब्रह्मेति गीयसे। तमोरूपः ,विष्णुरिति कीर्त्यसे। रजोमयः लोकान् सृजसि – लोकानुपसंहरसि। ततश्शिव इति धीः। वस्तुतस्तु

नेदं मूर्तित्रयं भिन्नम्। अत एव भेदार्थकाःत्रिणेत्र इव त्वमिव इति इव ,ब्रह्मेव , -शब्दाः सादृश्यार्थकाः प्रयुक्ताः। निपातानामर्थबोधे भेदेनैवान्वयः। निपातातिरिक्तनामार्थयो अभेदेन सम्बन्धेन अन्वयः इति हिशास्त्रनयः। इवश्च निपातः। सादृश्यञ्च तद्भिन्नत्वे सति

[1] भावार्थदीपिका - X 14- 14-

तद्गतभूयोधर्मवत्वमिति यद्यपि भेदसूचकत्वं प्रसिद्धं इवस्यतथा ,ऽप्यत्र बुद्धिमात्रकृतो भेदः न वास्तवः।

भवता हयग्रीवादयो दिव्यावताराः कपिलादयो ऋष्यवताराः, मत्स्यजरठादयो ,वराहनृसिंहादयो तिर्यगवताराः ,रामपरशुरामादयो नरावताराः जलचरावताराः गृहीताः। तादृशानांसर्वेषामवताराणां स्वीकरणं दुष्टानां शिक्षणार्थं शिष्टानाञ्चानुग्रहार्थं त्वया कृतम्।

"यादः जलचरः[1]।"

योगेश्वर! भवतः लीलाः कियन्त्यः? कीदृश्यः? इति को वा जानाति? त्वं कुतो जातः? केन प्रकारेण जातः? कति वा लीलाः कल्पयसि? कदा वा ताः कल्पयसि? इत्यजानद्भिः लोकैः योगमायया क्रीडसि।

न केवलं भवतः अवताराणामेव प्रभावःकिन्तु त्वया सृष्टस्य जगतो ,ऽपि वास्तव्यस्थितिं ज्ञातुं न कोऽपि प्रभवति। समस्तं दुःखमयमिदं जगत् भवन्मायया सृष्टं सत् स्वप्नसाक्षात्कार इव सत्यमिव प्रतिभाति।

इदानीं भगवतः दिव्यगुणान् स्तौति – त्वमेक एव परमात्मा। त्वमेव सत्यमसि। सत्यरूपस्य तव जन्मादिविकाराः न सम्भवन्ति। "पूर्वमेवाहमिहासम्" – "तत्पुरुषस्य पुरुषत्व"मिति[12] इत्यादि श्रुतयोऽत्र प्रमाणम्।

"जन्मान्तरास्थित्व लक्षणविकारं "वारयति"नित्य इति सनातन इत्यर्थः[3]" इति।

यतः सर्वेषामुत्पत्तिः स परमात्मा 'पूर्ण' इत्युच्यते। अत एव अनन्तत्वात् अद्वयत्वाच्च पूर्णत्वं सिद्धम्[4]। सर्वस्य लोकस्य प्रलयेऽपि पूर्णं ब्रह्मैव शिष्यते। अत एव नित्यः, अक्षरः इति विशेषणद्वयम्।

तथा च श्रुतिः" -पूर्णमदः पूर्णमिदं ,पूर्णस्य पूर्णमादाय ,पूर्णात् पूर्णमुदुच्यते , पूर्णमेवावशष्यते[5]– " ईशावास्यम् जगत्सर्वमिति[6]"।

---

1 यादांसि जलजन्तवः - इति अमरकोशः 20 - 10 - 1 -

2 भावार्थदीपिका -X23- 14 -

3 पूर्वत्र -X23- 14-

4 पूर्वत्र -X23 -14-

5 ईशावास्योपनिषत्शान्तिमन्त्रः - 1- -

6 ईशावास्योपनिषत् 1 -

उपाधिः प्रवृत्तेः कारणम्। उप आधीयन्ते अस्मिन् कार्याणि इति "कर्मण्यधिकरणे किःनिमित्तमित्यर्थः। पञ्चम्यर्थकः तसिल्। निमित्तान्मुक्त इत्यर्थः। कारणातीत इति ,[1]" " यावत्।कारणोत्पन्नानां कारणगुणाः कार्ये सङ्क्रामन्ति" इति विकारविषयत्वं सिद्धम्। भगवतः अकारणत्वात् निरञ्जनत्वंअद्वयत्वं नित्यसुखित्वञ्च सिद्धम्। ,

ये च गुरोः प्राप्तज्ञानाः त्वयि निबद्धधियः ते एव आत्मारामां तत्वतो विदन्ति भवाब्धिं च तरन्ति। ब्रह्मज्ञानस्य दुर्ज्ञेयत्वात् उपासितगुरुणामेव ज्ञानसिद्धिः।

तथाचोपनिषत् –

"उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत।

क्षुरस्य धारा निशिता दुरत्यया

दुर्गं पथः तत्कवयो विदन्ति[2]।"

ये च आत्मज्ञानिनः ते ज्ञातभगवत्तत्वाः भवन्ति। तत्वज्ञानां भूयस्संसारे न प्रवृत्तिः। अत्र अद्वैतवेदान्तमतानुसेण दृष्टान्तं दर्शयति –

सकलमिदं प्रपञ्चम् भ्रमजन्यम्। भ्रमश्च अयथार्थज्ञानम्। कश्चित्तमसि रज्जुं दृष्ट्वा महाहिरिति भ्रान्तो भवति। एवमज्ञानी जगति सत्यभ्रान्तिं वहति। पुनश्चानीतेप्रदीपे रज्जुरति वास्तवविकी मतिर्जायते। ततः तमस्यपि रज्जुबुद्धिमेव करोति। एवमेकदा ज्ञानेन तत्वप्रतिपत्तौ पुनः संसारव्यवहारे स्वीकृतेऽपि न भ्रान्तेरवकाशः। इयमेव भ्रान्तिः अध्यासेति ममापि तादृशं भाग्यं भूयात्। येन तव तत्वं वेत्तुं प्रभवामि। तत्प्राप्त्यर्थं यस्मिन् कस्मिन्नपि योनौ जन्मादि भवेत्। परं तु तव चरणाम्बुजमेव सेव्यम्। ब्रह्मपदात् तिर्यक्षु भवमङ्गीक्रियते यदि , तत्र भगवतः पदभक्तिस्स्यात् इत्यप्रस्तुतप्रशंसया ब्रह्मणोऽपि तादृशः तिर्यञ्च एव उत्तमाः गजेन्द्रादयःयैः भगवत्पादपल्लवं सेव्यते इति भक्तप्रशस्तिः गम्यते। ,

इदानीं गवां गोपीनां प्रशंसया भक्तानां सर्वोत्तमत्वं प्रदर्शयति – पञ्चभिश्श्लोकैः -

यस्याः यशोदायाः स्तन्यं त्वया पीतमिति अहो तस्याः सौभाग्यम्। गवां च पयः त्वया उपयुक्तमिति अहो तासामपि सौभाग्यम्। तासां तादृशसौभाग्यं अध्वरैः इष्टवद्भिः यज्वभिरप्यप्राप्तम्।

येषां गोपानां त्वं परं सुहृद्भवसि तासामपि भाग्यं लोकाश्चर्यकम्। अहो भाग्यमिति द्विरुक्त्या तस्य भाग्यस्य सर्वोत्कृष्टत्वम् सूचितम्।

---

[1] कर्मण्यधिकरणे च ) 13- 3- 3 -अष्टाध्यायी(

[2] कठोपनिषत् 14 - 1 - 3 -

ये अस्मदादिभिरिन्द्रादिभिः एकादशभिः जितेन्द्रियैरपि अप्राप्यं तव सेवाभाग्यम् गोपालकैर्लब्धम्।

अत्र श्रीधरः – गोपानां सौभाग्यं निखिलदेवतासौभाग्यातिरेकी इति प्रतिपादयन् सम्यक् व्याख्यातवान्। -

"एषां भाग्यस्य तावन्महिमा तावदास्तां तिष्ठतु। कस्तं वक्तुं शक्नोति। शर्वादयः शर्वः अहङ्काराधिष्ठाता आदिर्येषां चन्द्रादीनामेकादशानां ते तथा। वयञ्च वयमित्यात्मानमेव बहुमन्यमान आह –

एवं मनोबुध्यहङ्कार चक्षुराद्यधिष्टातारः त्रयोदशदेवा एव तावत्। बत – अहो , भूरिभागः यस्मादेतेषां हृषीकाणीन्द्रियाण्येव चषकाणि पात्राणितैः पानपात्रैः ते चतुर्दशस्य , तदेवामृतं स्वादु आसवं ,चित्ताधिष्ठातुः अङ्घ्री एव। उदजे वारिजे तथोर्मधु मकरन्दः "मादकं पिबामः[1] इति।

तव पादरजसा यद्गोकुलं स्पृष्टंतत्र जातानां सर्वेषामपि जीवितं धन्यमेव। ,

ईदृशानां गोपानां सौभग्यं इयत्तया निश्चेतुं न शक्यते। दैवदत्तमिति यद्यपि मे मतिः , तथाऽपि देवैर्दयम् फलं विश्वमात्रपर्यवसायि भवति। विश्वफलस्यापि त्वद्दर्शनमेव फलम्। अतस्तैः कुत इदं प्राप्तमिति ममापि सन्देह एव। त्वां द्विषन्ती हन्तुमागता पूतनाऽपि त्वया मुक्तिं गमिता। सख्येनाराधयतां एषां भाग्यं कथं स्तोतुं शक्यते। तेषां दास्यमपि प्राणिनः पुनाति।

रागद्वेषादिबुद्धिः त्वद्दर्शनानुपदमेव नश्यति। तव दर्शनावधिकमेव भवबन्धनम् इति रूपकालङ्कारमुखेन प्रतिपादयति –

कामक्रोधादीनां चोरत्वाभेदः। गृहस्य कारागृहादभेदःमोहस्य शृङ्खलाभेदः , प्रतिपादितः।

कृष्णः स्वीयानेभ्यः बन्धनेभ्यः सद्यः मोचयति। कृष्णस्य दासेषु इन्द्रियार्थाः आकर्षणे न प्रभवन्ति। गृहमपि मुक्तिप्रतिबन्धकं न भवति। मोह अपि ज्ञानं निरोद्धुं न प्रभवति।

इदानीं भगवतः महत्वमुपवर्णयति – विकारातीतोऽपि भवान् मायया स्वीकृतावतारः आश्रितान्नन्दयति।

भगवन्। तव महिमानं स्तोतुं कथं शक्नुयाम्। येषुतव प्रसादः ते एव तव महिम्नः ज्ञातारः।

---

[1] भावार्थदीपिका -X33 - 14 -

इदानीं स्तोतुमशक्तोऽहमिति स्वीयां दीनतामुक्त्वा प्रणामेन शरणं गच्छति। तत्र 'श्रीकृष्ण' इत्यादि सम्बोधनानि नामस्मरणपराणि।

अत्र भगवतः प्रायशः दिव्यलील एव उपवर्णिताः नारयणाभेदबुध्या इति दिव्यस्तोत्रमेवैतत्। ब्रह्मणः भगवति रतिः स्थायी। भगवानालम्बनम्। नारायण स्वरूपेण गोपी गोवत्सदर्शनं उद्दीपनविभावः। सापराधज्ञानेन क्षमाप्रार्थनम्तत्कृताः नमस्कारादयः , " अनुभावाः।तत्रोद्वहत् पशुपवंश[1] ,इत्यनेन एवं भूत भगवतो दर्शनेन विस्मयः ... " इतीशेऽतर्क्ये निजमहिमनि"[2].... इत्यादिना तर्कः" ,मोहः ,श्रेयः सृतिं भक्तिमुदस्यते विभो" इत्यादि वाक्येषु भक्तिरहितानां क्लेशभागित्वात् तादृशोऽहं नाभूवमिति हर्षः" ,अहोऽतिधन्या व्रजगोरमण्यः ".... इत्यादिना तासां सौभाग्यातिशयात् ताभ्यः असूयातादृशो भाग्यः , स्वस्मिन्नास्तीति दैन्यञ्च सञ्चारिणः – इति भक्तिरसः परिपुष्टः।

[1] श्रीमद्भागवतम् -X61 - 13 -

[2] पूर्वत्र -X57 - 13 -

**इन्द्रः– [1]***

नन्दकुले गोपाः प्रतिसंवत्सरं गोरक्षार्थंसस्यसमृद्ध्यर्थं च इन्द्रं पूजन्ति स्म। , लोकस्थितये अहमेव कारणमिति इन्द्रे गर्वस्समजनि। तं विहन्तुं भगवानेकस्मिन् वत्सरे – नन्दमेवं जगाद

"गोवर्धनगिरेः अस्माकं गवाम् तृणसमृद्धिः लभ्यते। ततो वयं निश्चिन्ताश्चरामः। तस्मादितः प्रभृति इन्द्रपूजां वर्जयित्वा गोवर्धनमेव आराध्नुमः" इति। ततः नन्दादयोऽपि कृष्णोक्तमभिनन्द्य तथैव चक्रुः। स्वपूजापराङ्मुखान् गोपान् वीक्ष्य क्रुद्धः इन्द्रः महती वृष्टिं कल्पयामास। गोपैः रक्षितुं प्रार्थितः भगवान् गोवर्धनगिरिं अङ्गुल्यग्रेणोद्धृत्य गोपानां छत्ररूपेण रक्षणमुपचक्रे। एवं सप्तदिनानि मेघा ववर्षुः। सप्तदिनानि भगवान् गोवर्धनं दधार। तथाऽपि न किञ्चित् परिश्रान्तः।

तदा वीतमदः शक्रः भगवन्तं श्रीकृष्णं शरणं गत्वा तस्य पादयुगलं स्पृष्ट्वा एवं तुष्टाव-

भगवन्! त्वं गुणातीतः। शान्तैकस्वरूपोऽसि। सत्वप्रधानत्वात् रजोतमोगुणनाशकोऽसि। शुद्धसत्वस्वरूपस्यवा भवतः रजस्तमोगुणरूपः ,निर्गुणस्य , गुणसंप्रवाहः न विद्यते।

लोभादयः मूर्खजनादरणीयाः। रजस्तमः प्रभावाः। यद्यपि रागद्वेषादयः गुणाः त्वां न स्पृशन्ति। तथाऽपि दृष्टशिक्षणार्थंधर्मरक्षार्थञ्च भगवता दण्डः , धार्यते।

त्वमेव लोकानां गुरुरसि[2]। सर्वपूज्य इति यावत्। कालः अपि त्वयि न प्रभवति।

किन्तु भवानवतारैः ईशम्मन्यानां[3] मादृशानां मदं विधुन्वन् जगद्रक्षणं करोषि। वयमिन्द्रादयः न जगदीशाः।

जगदीशमात्मानं मन्यन्ते जगदीशमानिनः। वास्तवो जगदीशस्तु त्वमेवासीति भावः।

यदा जगदीशमानिभिरस्माभिः गर्वेण सतां मार्गः त्यज्यते। तदानीमस्मासु त्वया दण्डः धार्यते।

इदानीं भगवतः क्षमां याचते।

ऐश्वर्यमदमोहितस्य त्वय्यपराद्धस्य ममाज्ञानं क्षमस्व। एवं दुर्व्यवसायिनी बुद्धिः पुनर्नमयि नोदियात्।

---

[1] X 13 प्रभृति 3- 7 -

[2] अमरकोशः - नानार्थवर्गः " ,162- 3गुरुर्गीष्पतिपित्राद्यौ " ..

[3] आत्ममाने खश्च। सुप्यजातौ णिनिस्ताच्छील्ये इत्यतःणिनेरनुवृत्तिः। अष्टाध्यायी 83 - 2 - 3 -

भुवः भारावतरणम्दुष्टानां राज्ञां न -ाशनम्त्वत्पादाश्रितानां क्षेमसम्पादनञ्च , तवावतारप्रयोजनम्।

तादृशाय "कृष्णावताराय" सर्वान्तर्यामिनेयदुनाथाय नमः। ,अपरिच्छेद्याय , कृष्णावताराय इति नमस्कारः इदानीन्तनरूपानुकूलतया प्रयुक्तः। यतस्तु यथावसरं अवतारस्वीकृतिः त्वदायत्ता। स्वस्य छन्दः स्वच्छन्दः। छन्दश्शब्दः वशार्थकः[1]। स्ववशस्सन्, सर्वकारणाय तुभ्यं नमः। ,स्वरूपाय ,शुद्धज्ञान ,स्वेच्छया स्वीकृतदेहाय

गोष्ठनाशायमया सृष्टः आसारः अज्ञानकृतः। तदज्ञानं क्षमस्व। मे गर्वः सर्वथा नष्टः। , अतः ईश्वरं त्वामहं शरणं गतः।

एवमिन्द्रेणसङ्कीर्तितः भगवान् तमेवमुवाचमहेन्द्रपदारूढत्वात् त्वयि तादृशो गर्वः - लौकिकदृष्ट्या उपपन्न एव। किन्तु गर्वेण भगवत्स्मृतिरन्तरिता भवति। ततः ंत्वामनुग्रहीतुमेवेत्थं ते गर्वस्य भङ्गः कृतः। शुभं ते भूयात् इत्याशिषं प्रयुज्य इन्द्रं नाक प्रेषयामास।

अत्र भगवानालम्बनम्। गोवर्धनोद्धरणरूपमहिम्नः दर्शनमुद्दीपनम्। पादप्रणामस्तवनादयोऽनुभावाः। गोवर्धनोद्धरणेन भगवतो महिमानं दृष्ट्वास्वपराजयञ्च , ;स्मृत्वा लज्जा भगवतः महिम्नः दर्शनात् विस्मयः धर्मरक्षणार्थं अवतीर्णो भगवान् हरिरिति स्मृतिःक्षमा याचनया ,क्षन्तुमर्हसीति ,तत एव मद्विधाः अज्ञाः भगवन्तं न जानते इति चिन्ता , मतिश्च सञ्चारिणः। एवं भक्तिरसः परिपुष्टः।

---

[1] अमरकोशः 20- 2- 3 -

" अभिप्राय च्छन्द आशयः"। "अभिप्रायवशौ च्छन्दः"।

**वरुणः**– [1]*

एकदा नन्दः प्रदोषसमये एकादश्यां निराहारः द्वादश्यां स्नानार्थं कालिन्द्यां जलं विवेश। अकाले स्नानमाचरन्तं नन्दं वरुणः जहार। ततः श्रीकृष्णः नन्दं पुनरानेतुं वरुणान्तिकमाजगाम। तदानीं वरुणः भगवन्तं श्रीकृष्णं एवं तुष्टाव। -

भगवन्! त्वद्दर्शनेन धन्योऽस्मि। त्वद्दर्शनेनैव इदानीं मे शरीरधारणस्य फलं प्राप्तम्। जीवितसमये प्राप्यं महत्प्रयोजनमपि त्वद्दर्शनादन्यत् न विद्यते। तन्मया इदानीं प्राप्तम्। तव पादसेवकाः संसाराध्वनः पारमधिगच्छन्ति। परब्रह्मस्वरूपायस्वमायया ,परमात्मने , – लोकस्रष्टे ते नमोनमः। त्वत्प्रभावमजानता मया ते पिता आहृतः। ममापराधं क्षन्तुमर्हसि इति।

अत्र भक्तेराश्रयः वरुणः। भगवानालम्बनम्। कृष्णस्य स्वलोकागमनं उद्दीपनम्। "प्राप्तं वीक्ष्य हृषीकेश– " इत्यादिना पूजनादयो अनुभावाः। "अद्य मे निभृतो देहः ".... इत्यादिना औत्सुक्यम्भवान् ,लोकसृष्टिविकल्पना भगवतः माया न ज्ञायते इति विस्मयः , क्षन्तुमर्हतीति दैन्यः सञ्चारिणः। भगवतो महिमावर्णनात् दिव्यस्तोत्रमेतत्।

**अक्रूरः** –[2]*

कदाचित् भगवान्नारदः कंसमुपस्थितकालं विज्ञाय रामकृष्णौ मथुरामानेतुं कंसं चोदयामास। ततः कृष्णानयनार्थं नन्दगोकुलमागतः अक्रूरः मध्यमार्गे स्नानार्थं यमुनां प्रविवेश। यमुनायां भगवदर्चनं कुर्वतः अक्रूरेण जलगतः कृष्णप्रतिबिम्बः दृष्टः। तदा ज्ञानिनांप्रमुखः अक्रूरः कृष्णमेवं तुष्टाव – एषा च स्तुतिः निर्गुणब्रह्मत्वप्रतिपादिका –

तत्र प्रथमत्रये कृष्णस्य सर्वव्यापित्वमाह –

भगवन् ! सर्वाद्यं पुरुषं ब्रह्मादीनामपि कारणभूतं नारायणं कारणकारणं त्वां नमामि।

इदानीं पुरुषसूक्तोक्तदिशा तस्य जगत्कारणत्वं प्रतिपादयति – पुरुषः पुनः नारायण एवेति।

द्वितीयस्कन्धे[3] नारायणविश्वरूपवर्णनम् पुरुषसूक्तमनुसृत्यैव कृतम्।

---

[1] Xपर्यन्तम् 7 प्रभृति 5- 28 -

[2] X पर्यन्तम् 40 प्रभृति 1 40 -

[3] श्रीमद्भागवतम् 6 -2 -

तस्मिन् वर्णने पुरुषसूक्तोक्ताः विशेषाः यथायथं गृहीताः। श्रीधरोऽपि सर्वमिदं वर्णनम् पुरुषसूक्तादेव गृहीतमिति निश्चयं चक्रे। षष्ठे[1] विराड्विभूतिश्च प्रोक्ता अध्यात्मादि भेदतः। दृढीकृतं तु पूर्वोक्तं सर्वं पुरुषसूक्ततः।

अक्रूरकृतमिदमपि स्तोत्रं द्वितीयस्कन्धोक्तमनुसरन् कृष्णस्य नारायणाभिन्नतां प्रतिपादयति "भूस्तोयमग्निः पवन[2]" इत्यादिना।

यथा अत्रैव भागवते ब्रह्मणः उक्तिः –

"यदास्य नाभ्यां नलिनादहमासं महात्मनः।

नाविन्दम् यज्ञसम्भारान् पुरुषावयवादृते[3]।।" इति।

त्वञ्च नारायणः मां कथं जानीषे इति यदि पृच्छसि तत एवं ब्रवीमि – सर्वाप्येषा भवतः एव माया। यद्ब्रह्मादयोऽपि न त्वां वदन्ति। वस्तुतः मादृशाः कथं विदुः। तथाऽपि त्वद्गतया भक्त्या त्वां वेदितुं पुरुषश्शक्नोति। तादृशज्ञानमपि परिमितमेव।

तव जन्मादिकं तु अजत्वान्न ज्ञायते। न जायते इत्यजः। न जातो न जनिष्यत– " इति श्रुतेः। – इयञ्च भगवतोक्तिः महाभारते -

"न हि जातो न जायेयंन जनिष्ये कदाचन। ,

क्षेत्रज्ञस्सर्वभूतानां तस्मादहमजस्स्मृतः[4]।।"

योगिनः त्वां कथञ्चिद्विदन्ति। तव अध्यात्मस्वरूपंअधिभूतस् ,वरूपं अधिदैवस्वरूपञ्च तैरेव वेद्यते।

तत्र अध्यात्मादि भेदाः पुरुषसूक्तप्रतिपादका एव। तत्र भगवतः अध्यात्मस्वरूपं ज्ञानेन्द्रियरूपम्। अधिभूतस्वरूपम् इन्द्रियगुणरूपम्। अधिदैवञ्च पञ्चमहाभूतरूपम् आदित्यरूपञ्च। अत्रायं विस्तरः –

अद्यात्मः – अधिबूतम् – अधिदैवम्।

श्रोत्रम् - शब्दः -आकाशः

त्वक् - स्पर्शः -वायुः

---

1 पूर्वत्र - 6 - 2 -व्याख्यातारिका

2 एषा पुरुषसूक्तोक्तिः -

" चन्द्रमा मनसो जातः चक्षोः सूर्योऽजायत। मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत। नाभ्य आसीदन्तरिक्षं शीर्ष्णोद्यौस्समपद्यत। पद्भ्यां भूमिर्दिशश्श्रोत्रात् तथा लोकां अकल्पयन्।।

3 श्रीमद्भागवतम् 23- 6 -2 -

4 महाभारतम् शान्तिपर्वः 74- 342 -

| | | |
|---|---|---|
| चक्षुः | रूपः | सूर्यः |
| जिह्वा- | रसः - | जलम् |
| घ्राणम् | गन्धः | पृथिवी[1] |

भक्तेष्वपि कश्चिदेव योगी भवति। "यततामपि सिद्धानां योगी भवति कश्चन[2]" इति भगवत एवोक्तिः।

वस्तुतस्तु एवमज्ञेयत्वं साधकाः मार्गभेदेन विविदिषन्ति " -तमेवं ब्राह्मणा विविदिषन्ति। यज्ञेन दानेन तपसाऽनाशकेन[3]।"

तत्र यज्ञः कर्ममार्गानुयायिनाम्तपः योगिनः साङ्ख्यानाञ्च ,दानञ्च त्यागिनां , भगवत्साधको मार्ग इति श्रुत्यर्थः। ,परिव्राजकानां ज्ञानिनां ,अनाशकः

एवमज्ञानां परमात्मा कथं ज्ञेयो भवति इत्यत्र आह – स च योगिदृग्गोचरः. भगवद्ज्ञानवान् भगवन्तं वेत्ति। निर्गुणं गुणातीतं वा भगवन्तं कथं वेत्तीत्याशङ्कायाम् श्रीधरः " - समाधत्तेस अजो ब्रह्मापिअजाया गुणैरनुबद्धः आवृतः गुणातीतं ते स्वरूपं न वेद। अतः , अन्यः कुतो ज्ञास्यतीति। यद्वा प्रकृत्यादयः आत्मनः स्वरूपम्। तव स्वरूपं न विदुः। जडत्वादेव जीवस्तु तान् आत्मानञ्च वेत्ति– न पुनस्त्वत्स्वरूपमिति। यथोक्तं हंसगुह्ये ,

"देवोऽसवोक्षा मनवोऽभूत मात्रा –

नात्मानमन्यं च विदुः परं यत्।

सर्वं पुमान् वेद गुणांश्च तदज्ञो

न वेद सर्वज्ञमनन्तमीडे।।" इति[4]।

परब्रह्मणः विष्णोः विविदिषायां आश्रयणीयाः मार्गान् दर्शयति अक्रूरः – तत्र "त्वां योगिनः" इति श्लोके अध्यात्मादि रूपेण साङ्ख्ययोगौ एकीकृत्य भगवप्राप्तिमार्गः उपदिष्टः। इदानीं कर्मज्ञानभेदेन वेदमार्गं प्रपञ्चयति श्लोकद्वयेन –

केचिद्वैदिकक्रियारताः कर्मयोगिनः अनेकरूपिणं त्वां यज्ञपुरुषं इन्द्रवरुणादिरूपेण ज्योतिष्टोमादिभिर्यज्ञैः बहुधा यजन्ति। तत्र यज्ञेषु आराध्यदैवानां

---

1 विस्तरस्तु - महाभारतम् - आनुशासनिकपर्वः 143

2 भगवद्गीता -VII – 3

3 बृहदारण्यकोपिषत् -IV – 4- 22

4 भावाथदीपिका -X – 4- 3

नामरूपादि भिन्नत्वेऽपि सर्वदेवनमस्काराः केशवं गच्छन्त्येव। यथा अत्रैवोक्तं अनुपदमेवाक्रूरेण –

"यथाद्रिप्रभवा नद्य पर्जन्यापूरिता विभो

विशन्ति सर्वतस्सिन्धुं तद्वत्त्वां गतयोऽन्ततः।।"

वदन्ति च श्रोत्रियाः सन्ध्यावन्दनेषु –

"आकाशपतितं तोयं यथा गच्छति सागरम्।

सर्वदेवनमस्कारः केशवं प्रतिगच्छति।।

सर्ववेदेषु यत्पुण्यं सर्वतीर्थेषु यत्फलं।

तत्फलं पुरुष आप्नोति स्तुत्वा दवं जनार्दनम्।।

वासनात् वासुदेवस्य वासितं ते जगत्रयम्।

सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते " इति।

किञ्च –

"वैतानिकाः कर्मयोगिनः त्वां वै त्वामेव यजन्ति। ननु ते इन्द्रवरुणवाय्वादीन् यजन्ते न तु मामित्यत आह – नानेति। नाना वज्रहस्तादीनि रूपाणि येषां ते। ये अमरास्तेषामाख्यया नाम्ना त्वामेव यजन्ते इति। अयं भावः – इन्द्रवरुणादिसूक्तैरिन्द्रादयः सर्वैश्वर्येण प्रकाश्यन्ते। न च सर्वेश्वरा बहवस्सम्भवन्ति। अतो नामभेदेन त्वामेव यजन्त इति। तथा च श्रुतिः –

"सप्रथमस्संकृतिर्विश्वकर्मा। स प्रथमो मित्रो वरुणो अग्निः। स प्रथमो बृहस्पतिश्चिकित्वान्। तस्मा इन्द्राय युतमाजुहोमि[1]" इति।

केचिच्च परिणतमनस्का अपि त्वामेव रूपभेदेन बहुधा ध्यायन्ति केचिच्छिवरूपिणं त्वां शैवमार्गेणोपासते। केचिच्छ विष्णुरूपिणं वैष्णवागमैः। यदन्येषां देवानां यद्यत् दर्शनं क्रियते तत्सर्वं हरेरेवार्चनं नान्यत्। आहुश्च –

"यं शैवास्समुपासते शिव इतिब्रह्मेति वेदान्तिनः।,

बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः।

अर्हन्नित्यथ जैनशासनपराःकर्मेति मीमांसकाः,

[1] भावार्थदीपिका -X पृष्टम् 355 - 5 -4 -

सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथोहरिः[1]।।"

सर्वदेवताराधनेऽपि फलमेक एवेति पुनः पुनः प्रतिपादितमेवैतत् –

सत्वं रजस्तम इति प्रकृतिसम्भवा गुणाः। तत्र माया मोहिता प्रकृतिः पुरुषेण संयुक्ता सप्तविकारात् सृष्टिमुत्पादयति। भगवानेव रजोरूपः विश्वमवति। तमोरूपेण विलीनयति। ब्रह्मादयोऽपि देवाः न गुणातीताः। अतस्तेषामपि न सृष्टिस्थितिलयातीतता। विष्णुः एक एव निर्गुणः।

एवं भगवान् सृष्टौ सुप्तोऽपि तस्मिन् नानुषज्यते। सृष्टेः पृथग्वर्तमानोऽपि सर्वात्मा भवति। तटस्थोऽपि सर्वसाक्षी।

अग्न्यादयः सर्वेऽपि नारायणप्रभवा एव। उक्तमत्रैव भागवते –

"वाचां वह्नेर्मुखं क्षेत्रं छन्दसां सप्तधातवः।
हव्यकव्यामृतान्नानां जिह्वा सर्वरसस्य च।।
सर्वासूनां च वायोश्च तन्नासे परमायने।
अश्विनोरोषधीनाञ्च घ्राणो मोदप्रमोदयोः।।
रूपाणां तेजसां चक्षुर्दिशस्सूर्यस्य चाक्षिणी।
कर्णौ दिशाञ्च तीर्थानां श्रोत्रमाकाशशब्दयो।।-
तद्गात्रं वस्तुसाराणां सौभाग्यस्य च भाजनम्।
त्वगस्य स्पर्श वाय्वोश्च सर्वमेधस्य चैव हि।।
रोमाण्युद्भिज्य जातीनां यैर्वा यज्ञस्तु सम्भृतः
केशश्मश्रुनखान्यस्य शिलालोहाभ्रविद्युताम्।।
बाहवो लोकपालानां प्रायशः क्षेमकर्मणाम्।
विक्रमो भूर्भुवस्वश्च क्षेमस्य शरणस्य च[2]।।

अपि च स्थावरजङ्गमादयः प्राणिनः वर्तन्ते ते सर्वे नारायणोद्भवा एव। उक्तञ्चान्यत्र[3]-

---

[1] हनुमन्नाटकम् -1 -प्रस्थावना

[2] श्रीमद्भादवतम् पर्यन्तम् 6 प्रभृति 1 - 6- 2 -

[3] " कृष्णः पृथ्वीमसृजत्खं दिवञ्च वराहोऽयं भीमबलः राणः। अस्य चाधोऽयान्तरिक्षं दिवञ्च दिशश्चतस्रः प्रदिशश्चतस्रः।।

यथा पक्के उदुम्बुरफले सूक्ष्मतमा कीटकाः परस्परमजानन्तः तत्रैवोत्पन्नास्सञ्चरन्ति , एवं नारायणे बहुजीवसङ्कुलाः लोकपालाः तस्यान्तः नारायणेनैव सृष्टाः चरन्ति।

विनोदार्थं ये ये अवताराः नारायणेन गृह्यन्ते भक्तैः बहुधा प्रशंसिताः उपास्यन्ते च।

एतावत्पर्यन्तं गुणनिर्गुणरूपेण श्रीकृष्णस्य नारायणपरब्रह्मणः रूपमुक्त्वा इदानीं दिव्यानवतारान् स्तौति। भगवतः एकविंशत्यवतारविशेषविस्तरस्तु द्वितीयस्कन्धे - सप्तमेऽध्याये द्रष्टव्यः।

'नमस्ते वासुदेवाय' इति श्लोकेऽयं विशेषः। परमात्मैव चतुर्धा आत्मानं विभजति। तत्र एको निर्गुणः अपरे कर्मपरायणाः। परमात्मनः चतुर्षु मूर्तिषु ,त्रयस्सगुणाः। एको आद्यः ज्ञानात्मकः , वासुदेवः प्रथमः। स एव नारायणः निर्गुणः। निर्गुणे वासुदेवब्रह्मणि नारायणपदमुपयोज्यम्। स्वयमकारणञ्च भवति। ,स एव निर्गुणः जगन्निमित्तकारणं

"सर्वभूतस्थमेकं नारायणं कारण पुरुषमकारणं,

परं ब्रह्मशोकमोहविनिर्मुक्तं विष्णुं ध्यायन्नसीदति[1] ,।।" इति।

---

सृष्टिस्तथैवेयमनुप्रसूता सनिर्ममे विश्वमिदं पुराणम्। सकुम्भरेता ससृजेपुराणांयत्रोत्पन्नमृषिमाहुर्वसिष्ठम्।। ,

समातरिश्वा विभुरश्ववाजी सरश्मिमान् सविता चादिदेवः। वेदांश्च यो वेदयतेऽधिदेवो विधींश्च यश्चाश्रयते पुराणान्।

कामे वेदे लौकिके यत्फलं च विष्वक्सेने सर्वमेतत्प्रतीहि।।

ज्योतींषिशुक्लानि च सर्वलोकेत्रयो लोका लोकपाला त्रयश्च। त्रयोऽग्नयो व्याहृतयश्च तिस्रः सर्वेदेवा देवकीपुत्र एव।।

संवत्सरः स ऋतुः सोऽर्धमासःसो ,ऽहोरात्रः सकला वै सकाष्ठाः।

मात्रा मुहूर्ताश्च लवाः क्षणाश्च विष्वक्सेने सर्वमेतत्प्रतीहि।।

चन्द्रादित्यौ ग्रहनक्षत्रताराः सर्वाणि दर्शान्यथ पौर्णमास्यः।

नक्षत्रयोगा ऋतवश्च पार्थ विष्वक्सेनात् सर्वमेतत्प्रसूतम्।

रूद्रादित्या वसवोऽयाश्विनौ च साध्यविश्वेमरुतां षड्गणाश्च।

प्रजापतिर्देवमाताऽदितिश्च सर्वेकृष्णादृषयश्च सप्त।।

वायुर्भूत्वा विक्षिपते च विश्वमग्निर्भूत्वा दहते विश्वरूपः। आपो भूत्वा मज्जयते च सर्वं ब्रह्मा भूत्वा सृजते विश्वसंघान्।।

वेद्यं च यद्वेदयते च वेदान् विधिश्च यश्चाश्रयते विधेयान्। धर्मे च वेदे च बले च सर्वं चराचरं केशवं त्वं प्रतीहि।।

ज्योतिर्भूतः परमोऽसौ पुरस्तात् प्रकाशयन् प्रथमा विश्वरूपः। अपः सृष्ट्वाहयात्मभूरात्मयोनिः पुराकरोत्सर्वमेवाथविश्वम्।।

महाभारतम्पर्यन्तम् 35 प्रभृति 28 ,7,18 - 143 - आनुशासनिकपर्वः -

[1] आत्मबोधोपनिषत्पृष्टम् 73 - विष्णुसहस्रनामशाङ्करभाष्यम् -

इतरे त्रयः क्रमशः सत्वरजस्तमोरूपाः। तेभ्यः सत्वरूपात् सङ्कर्षणात् सृष्टिःरजोरूपात् , तमोरूपादनिरुद्धात् लयःइति। एष एव चतुर्व्यूहवाद इति ,प्रद्युम्नात् स्थितिःकथ्यते। उक्तञ्च महाभारते -

"विश्वावासं निर्गुणं वासुदेवं सङ्कर्षणं जीवभूतं वदन्ति।

ततः प्रद्युम्नमनिरुद्धं चतुर्थमाज्ञापयत्यात्मयोनिर्महात्मा[1]।।" इति।

इदानीमक्रूरः स्वमुमुक्षां भगवते निवेदयति। ज्ञानित्वे -ऽपि स्वस्य भगवतः प्रियं चिकीर्षुः दैन्यतामेव प्रकटयति -

अहमेतावत्पर्यन्तं दाराः प्रजाश्च नित्या इति मत्वा संसारिकेषु सुखेषु स्वप्नतुल्येषु सत्यबुद्धिः व्यचरम्।

व्यत्यस्तमतिरहं श्रेयः अजानन् अनित्यान् विषयान् सेवमानः सुखदुःखावाश्रित्य मूढस्सन् एतावत्पर्यन्तमासम्। अतः आत्मनः किं वा वास्तवं प्रियं भवतीति न ज्ञातम्। मूर्खः आसन्नवर्ति सलिलं अल्पीय इति दृष्ट्या बहूदकप्राप्त्याशया मरीचिकाः अनुधावति तद्वदहम् तव पादमूलं त्यक्त्वा संसारमसेवम्।

इदानीं सञ्जातज्ञानः अपि मनः रोद्धुं न ईशितोऽस्मि। अविजितेन्द्रियोऽहम् ते चरणौ शरणं प्रपन्नः।

अत्रापि सत्यं भगवत्कृपायां विषयवैमुख्यं प्राप्त्वा अनन्यचिन्तया भगवदाश्रयणेन भगवत्कृपाप्राप्तिरिति अनन्यचिन्तया भगवदाश्रयणेन भगवत्कृपाप्रप्तिरिति अन्योन्यं विरोध इव दृश्यते। तथाऽपि भगवत्सेवासङ्कल्पमात्रेण भगवदनुग्रहेण सिद्ध्यति।

विज्ञानमूर्तयेसमस्तज्ञानकारणाय भगवते ते नमः। पुरुषेशप्रधानाय ते नमः। प्रधानं , प्रकृतिर्माया। मायाशासकः पुरुषः इति शङ्करः।

एष एव शब्दः "प्रधानपुरुषेश्वर" इति पदेन विष्णुसहस्रनामसु प्रयुक्तः।

"प्रधानं प्रकृतिर्माया पुरुषो जीवस्तयोरीश्वरः प्रधानपुरुषेश्वरः[2]।"

श्रीधरस्तु "-पुरुषेशप्रधानाय पुरुषस्य ये ईशाः सुखदुःखप्रापकाः कालकर्मस्वभावादयः। तेषां प्रधानाय नियन्ते। कुतः ब्रह्मणे परिपूर्णाययद्वा ,अनन्ताः शक्तयः यस्य ,किञ्च अनन्तशक्तये , अनन्ता मायाख्या शक्तिर्यस्य तस्मै। अथवा प्रधानं प्रकृतिः पुरुषः तत्प्रवर्तकः ईशः कालः।

---

[1] महाभारतम् - आनुशासनिकपर्वः 37- 144 -

[2] विष्णुसहस्रनामशाङ्करभाष्यम् पृष्टम् 79 -

एतत्त्रितयात्मने ब्रह्मणे वक्ष्यति च। भगवान् प्रकृतिः यदुपाधानमाधारः पुरुषः परः। सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं[1]– " इत्यब्रवीत्।

वासुदेवः सर्वभूताश्रयः। वसन्ति जगन्त्यस्मिन्निति विग्रहः प्राक् प्रतिपादितः। क्षयः – आश्रयः। सर्वभूताश्रयो हरिः। अत एव "भूतावास" इति हरेः विख्यातं नाम। "भूतावासो वासुदेवः सर्वासु निलयोऽनलः" इति विष्णुसहस्रनामासु स्पष्टम्।

मुमुक्षुः मोक्षप्रदानानुरूपं विशेषणमत्र प्रयुक्तो 'हृषीकेश' इति। हृषीकेशः – इन्द्रियाधिष्ठाता। इन्द्रियजये मोक्षस्सिध्यति। स च इन्द्रियजयः त्वया प्रतिपाद्यः[2]।

हृषीकेशशब्दार्थस्तु एवं विवृतमाचार्यैः " –हृषीकाणीन्द्रियाणितेषामीशः , क्षेत्रज्ञरूपभाक्। यद्वा इन्द्रियाणि यस्य वशे वर्तन्ते स परमात्मा हृषीकेशः।

यस्य वा सूर्यरूपस्य चन्द्ररूपस्य च जगत्प्रीतिकरा हृष्टाः केशाः रश्मयः सः हृषीकेशः।।[3]"

अक्रूरः भागवतोत्तमः। कृष्णे "अक्रूरवरदः" इति भक्तव्यवहारः प्रवर्तते। स्वदर्शनात् प्रागेव स्वीयं परमाद्भुतं दिव्यं रूपं स्वयं तस्मै दर्शयित्वा भगवानक्रूरमनुजग्राह। सलिले अक्रूरेण दृष्टः भगवान् साक्षान्नारायणस्वरूपः। एकभक्तमुद्दिश्य भगवता कृतं स्वरूपप्रदर्शनम् अर्जुने अक्रूरे ,पित्रोश्च दृश्यते। देवकीवसुदेवयोः अर्जुने च यादृशी प्रीतिः , तादृशी अक्रूरे श्रीकृष्णस्य प्रीतिः इति वक्तुं अनेन पार्यते। अक्रूरेण दृष्टं नारायण दिव्यरूपं बहुधा वर्णितम्[4]। -

---

[1] भावार्थदीपिका -X पृष्टम् 358 - 29 - 40 -

[2] परिकरालङ्कारः " -अलङ्कारः परिकरः साभिप्राये विशेषणे- " कुवलयानन्दम् पृ 93 -

[3] विष्णुसहस्रनामशाङ्करभाष्यम् पृ 87 -

[4] " भूयस्तत्रापि सोऽद्राक्षीत् स्तूयमानं महेश्वरम्। सिद्धैगन्धर्वपतिभिरसुरैर्नतकन्धरैः।।
सहस्रशिरसं देवं सहस्रफणमौलिनम्। नीलाम्बरं बिसश्वेतं शृङ्गैश्श्वेतमिवस्थितम्।।
तस्योत्सङ्गे घनश्यामं पीतकौशेयवाससम्। पुरुषं चतुर्भुजं शान्तं पद्मपत्रायतेक्षणम्।।
चारुप्रसन्नवदनं चारुहासनिरीक्षणम्। सुभ्रून्नसं चारुकर्णं सुरपोलारुणाधरम्।।
प्रलम्बपीवरभुजं तुङ्गांसोरः स्थलः श्रियम्। कम्बुकण्ठं निम्ननाभिं वलिमत्पल्लवोदरम्।।
बृहत्कटितटश्रोणि करभोरुद्वयान्वितम्। चारुजानुयुगं चारुजङ्घायुगलसंयुतम्।।
तुङ्गगुल्फारुणनरवव्रातदीधितिभिर्वृतम्। नवाङ्गुल्यङ्गुष्टदलैर्विलसत्पादपङ्कजम्।।
महार्हमणिकव्रातकिरीटकटकाङ्गदैः। कटिसूत्रब्रह्मसूत्रहारनूपुरकुण्डलैः।।
भ्राजमानं पद्मकरं शङ्खचक्रगदाधरम्। श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम्।।
सुनन्दनन्दप्रमुखैः पार्षदैस्सनकादिभिः। सुरैशैर्ब्रह्मरुद्राद्यैः नवभिश्च द्विजोत्तमैः।।
प्रह्लादनारदवसुप्रमुखैर्भागवतोत्तमैः। स्तूयमानं पृथग्भागैर्वचोभिरमलात्मभिः।।
श्रिया पुष्य्या गिरा कीर्त्या कान्त्या तुष्ट्येलयोर्जया। विद्ययाऽविद्यया क्षूक्त्या मायया च निषेवितम्।।
- 1 श्रीमद्बागवतम् -Xपर्यन्तम्। 55 प्रभृति 44- 39 -

अत्र स्तोत्रे श्रीमन्नारायणस्वरूपेण दृष्टः भगवान् श्रीकृष्णः आलम्बनम्। रूपे अप्रतिमत्वं उद्दीपनम्। नेत्राकुञ्चनादयोः विस्मयश्चानुभावाः। मत्यौत्सुक्य हर्षादयः सञ्चारिणः इति परिपूर्णा भक्तिरत्र प्रतिपादिता।

भगवद्दर्शनानन्तरं मथुरां प्रविश्य कृष्णाय स्वागमनप्रयोजनं निवेदयामास अक्रूरः। कृष्णस्तु "त्वमिदानीं गच्छ। अहं श्वो यास्यामि" इत्यक्रूरं जगाद। ततः अक्रूरः कृष्णमेवं प्रार्थयामास " -मद्गृहमागत्य मद्गृहं माञ्च पुनातु भवान् "- इति भक्तार्हप्रार्थनैव अत्र श्लोकषट्के दृश्यते[1]।

पादरजःप्रभावादि वर्णनमपि भक्त्यावेशेन कृतम्। तत्र प्रथमं स्तोत्रं नारायणस्य चराचरसृष्टेर्हेतुत्ववर्णनात्मकमिति दिव्यस्तोत्रम्। अवतारवर्णनात् विधिस्तोत्रञ्च। द्वितीयं तु प्रार्थनारूपमेव स्तोत्रम्।

[1] श्रीमद्भागवतम् -X पर्यन्तम् 16 प्रभृति 11 - 41 -

**मुचुकुन्दः**–[1]*

जरासन्धः सप्तदशकृत्वः मथुरां रुरोध। कालयवनः जरासन्धमित्रं कश्चिद्राजा कृष्णद्विडासीत्। सोऽप्येकदा जरासन्धस्य साहाय्यं चिकीर्षुः कृष्णं हन्तुमन्विच्छन् मथुरामगात्। तदानीं कृष्णः एवं चिन्तितवान् – यद्यत्रैव कालयवनो भवेत् जरासन्धोऽप्यत्रागत्य मथुरां रोत्स्यति। तदा महान् संप्लवःजनक्षयश्च स्यादिति मत्वा , कालयवनं ततो दूरं नेतुमिच्छुः पादचारी पुरान्निर्जगाम। पीताम्बरंपदातिनं ,दिव्यरूपं , " गच्छन्तं कृष्णं विज्ञाय कालयवनः तं विद्रावयामास।यदुकुलजातस्य तव पलायनं नोचितम्" इति वदन् अनुगच्छन्तं न किञ्चिदप्युक्त्वा श्रीकृष्णः प्रययौ। ततस्सुदूरं गत्वा कश्चित् गिरिकन्थरं प्रविश्य अन्तर्हितोऽभूत्।

ततः कालयवनोऽपि तत्रागत्य शयानमन्यं पुरुषं ददृशे। "मुकुन्द एव स्वस्माद्भीः रूपान्तरेणात्र शेते– " इति मत्वा तं शयानं पदा समताडत्। उत्थितस्य तस्य पुरुषस्यदेहजेनाग्निना कालयवनः भस्मीबभूव। तदानीं कृष्णः तेन पुरुषेण दृष्टः। सोऽयं पुरुषः इक्ष्वाकुवंशसञ्जातः मान्धातृतनयः मुचुकुन्दः। पुरा देवदानवसङ्ग्रामे देवानां साहाय्यं विधाय राक्षसवधानन्तरं श्रान्तः अत्र गुहायां शेते स्म। मुचुकुन्दः कृष्णं दृष्ट्वा तस्य जन्मादिकमपृच्छत्। स्वस्य नामगोत्रादिकं चाकथयत्। ततः भगवान् स्व पिरिचयं ददौ[2] - अत्रोक्तेषु श्रीकृष्णवाक्येषु[3] सः विष्णोरवतार इत्यंशः स्पष्टीभवति।

जन्मकर्मनामानि स्वस्यापि सन्तीति भगवता यदुक्तं भक्तानुग्रहकाङ्क्षया यानि धृतानि जन्मादीनि तानि मनसि निधाय उक्तं स्यात्। रजांसि लोकाः ,पार्थिवानि पृथिव्यादीनि , 'पार्थिवानि रजांसि' इत्यनेन पृथिव्यादयो लोकाः भगवता सृष्टाः इति ज्ञायते। तथा च श्रुतिः -

---

[1] Xपर्यन्तम् 57 प्रभृति 45 - 51 -

[2] श्रीमद्भागवतम् -X - पर्यन्तम् 43 प्रभिति 36 - 51 -

[3] " जन्मकर्माभिधानानि सन्ति मेऽत्र सहस्रशः। न शक्यन्ते प्रसङ्ख्यातुमनन्तत्वान्ममापि हि।।
क्वचिद्रजांसि विममे पार्थिवान्युरुजन्मभिः। गुणकर्माभिधानानि न मे जन्मानि कर्हिचित्।।
कालत्रयोपपन्नानि जन्मकर्माणि मे नृप। अनुक्रमन्तो नैवान्तं गच्छन्ति परमर्षयः।।
तथाऽप्यद्यतनान्यङ्ग श्रृणुष्व गदतो ममविज्ञापितो विरिञ्चेन पुराहं धर्मगुप्तये।। .
भूमेर्भरायमाणानामसुराणां क्षयाय च । अवतीर्णो यदुकुले गृह आनक दुन्दुभेः।।
वदन्ति वासुदेवेति वसुदेवसुतं हि माम्। कालनेमिर्हतः कंसः प्रलम्बाद्याश्च सद्द्विषः।।
अयञ्च यवनो दग्धो राजंस्ते तिग्मचक्षुषा। सोऽहं तवानुग्रहार्थं गुहामेतामुपागतः।।
प्रार्थितः प्रचुरं पूर्वं त्वयाऽहं भक्तवत्सलः। वरान् वृणुष्व राजर्षे सर्वान् कामान् ददामि ते।
मां प्रपन्नोजनः कश्चिन्नभूयोऽर्हति शोचितम्।
X--- - 51 -

"विष्णोर्नुकं वीर्याणि प्रवोचम्। यः पार्थिवानि विममे रजांसियो अस्कभायदुत्तरं सधस्तम् , विचक्रमाणः त्रेधोरुगायः[1]।"

लोकसिसृक्षया भगवान् यान् गुणान् धत्ते तैरेव गुणैः तस्य व्यवहारः भ्रान्तैः क्रियते। अत एव "जन्मकर्माभिधानानि सहस्रशः सन्ति" - "गुणकर्माभिधानानि न मे जन्मनि कर्हिचित्– " इत्येतयोर्वचनयोर्नविरोधः। .

योगिनोऽपि एवं भेदमजानन्तः "एवं रूपो भगवान्"एवं रूपो भगवा ,निति गुणविवक्षां मयि कुर्वन्तितथा ,ऽपि न तत्रेषां अज्ञानकृतं कर्म। किन्तु ममैवानन्तरूपत्वात् ते परिगणने अशक्ता आसन्।

इदानीं कीदृग्रूपोऽहमिति यदि त्वं जिज्ञासुः पृच्छसि– तदा श्रुणु , पुरा भूमेः भारावतरणाय ब्रह्मणा प्रार्थितोऽहं यदुकुलेवसुदेवगृहे जन्म प्राप्तवान्। असुराणां क्षयः , अस्मिन् जन्मनि मे अभीष्टम्। तमोगुणसम्पन्नः कालयवनः इदानीं त्वया दग्धः। अन्तः सः मया साधनभूतेन त्वया घातितः। इदानीं त्वामनुजिघृक्षुरत्र सम्प्राप्तोऽस्मि।

एवं कृष्णः स्वावतारप्रयोजनंस्वस्वरूपञ्च भक्ताय मुचुकुन्दाय विशदीचकार। ,

एवं वदन्तं भगवन्तं दृष्ट्वा मुचुकुन्दः वक्ष्यमाणया रीत्या श्रीकृष्णं तुष्टाव।

भगवान्। उत्तमयोनौ जन्मैव दुर्लभम्। तत्रापि त्वद्भक्तिरेव सुदुर्लभा। यतः कामः उत्तमप्रकृतिमपि मोहयति। तत्र मोहे कारणम् भगवन्मायैव। क्वचित् "मायाबद्धोऽस्म्यहं" इति जाग्रदपि जनः परमार्थतत्वामभजन् पुनस्संसारगर्ते पतति। स च संसारः न सुखप्रभवः। - किन्तु दुःखप्ररभव इति जानन्तोऽपि जनाः विषक्रिमिन्यायेन पुनः पुनः संसारमधिगच्छन्ति। तादृशाः दैवोपहताः।

किं बहुभिः? मदनुजिघृक्षया भवानत्रागतः। तत आत्मानं धन्यानामग्रेसरं मन्ये। मया एतावान् कालः राज्यश्रियाअधिकारमदेन च मोघीकृतः। ,

मुचुकुन्दः श्लोकान्तरेण स्वस्य वृथा कालयापनं पुनः प्रपञ्चयति –

घटकुड्यसन्निभे अर्थात् पाषाणशकलैरिव इन्द्रियग्रामेण ग्रथितेसुलभभेद्ये कलेबरे , – निरूढमानः बद्धाशः राजचिह्नानि प्रकाशयन् त्वामपि विस्मृत्य सुचिरं व्यचरम्इति।

अत्रेदमनुसन्धेयम् – वस्तुतस्तु न भगवतो विस्मरणम्। किन्तु भगवत्स्मरणे भक्तस्य अतृप्ततैवात्र विवक्षिता। भक्तस्सदा भगवत्समक्षं दैन्यं प्रकटयन् आत्मानमल्पीकृत्य भगवन्तं सर्वोन्नतीकृत्य स्तौति । एष भागवतसमयः। रचितानेकस्तोत्रः जगन्नाथपण्डितः -

---

[1] विष्णुसूक्तम् -

" अत्रोदाहरणम्।वाचानिर्मलया सुधामधुरया यां नाथ शिक्षामदाः। त्वां स्वप्नेऽपि न संस्पृशाम्यहमहं भाववृतो निस्त्रपः।

इत्यागश्शतशालिनं पुनरपि स्वीयेषु मां बिभ्रतः।

त्वत्तो नास्ति कृपानिधिर्यदुपते मत्तो न मत्तः परः[1]।। "

कलेबरशब्दोऽत्र शरीरपर्यायो कुत्सासूचकश्च। हेयेऽस्मिन् शरीरे ममत्वं धृत्वा नश्वरान् भोगान् शाश्वतान् मत्वा भगवत्स्मरणे प्रमादो न कार्य इत्यर्थः अत्र व्यज्यते।

अपि च ये मोहपरायणाः ते विषयलालसाः विषयैरेव ग्रस्यन्ते। यथा कश्चिन्मूषकः भक्ष्याशया अहेः मञ्जूषां प्रविष्टः क्षुधार्तस्य तस्यैवाहेः आहारो भवतितथैव विषयसुखान्वेषी , कश्चित् दैवात् विषयैरेव ग्रस्यते। अत्र विषयेभ्यः सुखमन्विष्यन्तः तेभ्यः सुखं यदि न प्राप्नुवन्ति तदपि वरम्। यतो हि कदाचिद्बुद्धैः विषयेभ्यो विमुक्तिर्भवेत्। इदानीं न क्षेमलाभः। प्रत्युत आत्मनाश इति अनिष्टप्रप्तिः[2]।

अथ शरीरस्य नश्वरत्वं प्रतिपादयन् मुचुकुन्दः आत्मनमेव दृष्टान्तयति –

एषोऽहम् स्वर्णमयेषु रथेषु भूपतिरिति जनैः कीर्त्यमानः लोकं विडम्बयन् चचार। गच्छति काले कलेबरमिदं अवश्यं जीर्णं भविष्यति। ततः प्राप्ते उत्तमे जन्मनि हरिचरणसेवया मोक्षार्थित्वमेव जन्मनः फलमिति मन्ये।

तत्र विष्णुभक्तिवर्जितं जन्म व्यर्थमिति[3] मुचुकुन्दस्याशयः। तथा हि –

विषयैर्जर्जरिते शरीरे लौकिकः न कश्चिदगदङ्कारः पुनरिदं कलेबरमुत्थापयितुं प्रभवति। अत एव उपदिशन्त्याचार्याः –

"शरीरे जर्झरीभूते व्याधिग्रस्ते कलेबरे

औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः।।" इति।

" इदं शरीरं परिणामपेशलं

पतत्यवश्यं श्लथसन्धिजर्झरम्।

किमौषधैः क्लिश्यसि मूढ! दुर्मते!

---

[1] करुणालहरी 1श्लो -

[2] विषमालङ्कारः " -अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात्।" इति हि लक्षणम्। कुवलयानन्दम् पृष्टः। 155 - कारिका 90 -

[3]" योनेस्सहस्राणि बहूनि गत्वादुःखेन लब्ध्वा ,ऽपि च मानुषत्वं। सुखावहं ये न भजन्ति विष्णुं ते वै मनुष्यात्मनि शत्रुभूताः।।" भावार्थदीपिका -X50- 51-

निरामयं कृष्णरसायनं पिब[1]।।" इति।

तादृशकृष्णरसायनस्य उल्लाघीकरणशक्तिमत्वमपि एवं प्रतिपादितवन्तः –

"व्यामोहः प्रशमौषधम्मुनिमनोवृत्तिप्रवृत्यौषधम्। ,

दैत्येन्द्रार्तिकरौषधम्त्रिभुवनीसञ्जीवनौकौषधम्। ,

भक्तात्यन्तहितौषधम्भव भय प्रध्वंसनैकौषधम् ,

श्रेयः प्राप्तिकरौषधम् पिब मनश्रीकृष्णदिव्यौषधम्[2] ,।।"

तदिदमौषधम् प्रसूतिमरणव्याधेः चिकित्सकम् – तथा चाहुः –

"हे लोकाः श्रुणुतः प्रसूतिमरणव्याधेः चिकित्सामिमां

योगज्ञास्समुदाहरन्ति मुनयो यां याज्ञवल्क्यादयः।

अन्तर्ज्योतिरमेयमेकममृतं कृष्णाख्यमापीयताम्

तत्पीतं परमौषधं वितनुते निर्वाणमात्यन्तिकम्[3]।। इति।

एवं भागवतैरनेकधा स्तुतस्य भगवतः नामसङ्कीर्तनरूपं परमं सुखं वर्जयित्वा सांसारिकेषु व्यवायादिषु सुखेषु मृगतृष्णासु सलिलबुद्धिं कुर्वाणः इव अनुरक्तः तेषां पारमगच्छन् सीदति। अतः पापरूपं विषयसुखं त्यजत – इच्युपदेशः अत्र प्रतिनिबद्धः।

आहुश्च –

"सर्वाशुचिनिधानस्यकृतघ्नस्य विनाशिनः। ,

शरीरकस्यापि कृते मूढाः पापानि कुर्वते[4]।।"

ततः विषयसुखनिवृत्तिमार्गमाहमुचुकुन्दः – अस्मिन् जन्मनि लब्धराज्यविभवः आस्वादितसर्वेन्द्रियसुखःआगामिन्यपि जन्मनि चक्रवर्ती भूयासमिति कश ,ि्चद्यतते तादृशो यत्नः सर्वथा न सुखाय कल्पते। यतो न तत् पारमार्थिकं फलम्। पारमार्थिकं फलन्त्वपवर्गः। मोक्षश्च भगवत्साक्षात्कारात्मकः।

तत्र अपवर्गप्राप्तौ साधनं दर्शयति –

[1] मुकुन्दमाला 30 -

[2] मुकुन्दमाला 24 -

[3] पूर्वत्र 17 -

[4] नागानन्दम् अङ्कः 4 -

सत्सङ्गेन मोहो नश्यति। यदा दैवकृपा वर्तते तदैव सत्सङ्गः। सत्सङ्गात् निर्मोहत्वं , निर्मोहत्वे दैवकृपेति पुनरनयोः अन्योन्याश्रयत्व दोषप्रसक्तिः। ततः विषयैर्मोहिता अपि कदाचिद्यदि भगवन्तं तन्मोहविनाशनार्थं प्रार्थयेयुःयदृच्छया वा नमस्कुर्युः। तेषु प्रथमं , ततस्सत्सङ्ग इति सर्वं सुस्थम्। ,भगवदनुग्रहः

त्वयि दृष्टे देहिनां नान्यत् किञ्चित् वाञ्छितम् भवति। अतः तव पादसेवनादन्यत् नाहं किञ्चिदवृणे।

एवं भगवन्तमाश्रित्य कामान् सन्न्यस्य भक्ताः निरामयाः भूयासुरिति सूचयति।

भगवान् आत्ममायया गृहीतगुणत्रयः सृष्टिस्थितिलयान् विधत्ते। तादृशः सृष्ट्यादिक्रमः भगवतास्वीययैव मायया प्रकृत्या स्वयं संयोगेन विधीयते। सर्वस्यापि स्रष्टुः भगवतः निर्गुणत्वमद्वयत्वञ्च नैसर्गिकं लक्षणम्। तादृशं त्वां परमपुरुषं ज्ञानधनमहं शरणं व्रजामि।

अस्मिल्लोके स्वकर्मफलं भुञ्जानाःतप्यमाना ,ततस्सन्तप्ताः ,तेन फलभोगेनार्ताः , अपि कामक्रोधलोभमोहमदमात्सर्यरूपेण अरिषड्वर्गेण पीड्यमान ाश्चपञ्चभिरिन्द्रियैः , ते मूर्खाः। ,ये चरन्ति ,अलब्धशान्तयः ,प्रलोभ्यमानाः

हे सर्वरक्षक! त्वामहं शरणं प्रपन्नः। प्रपन्नं मां अभयदानेन त्राहि। कर्मफले न मम कदाचिदासक्तिः। भवतः कृपैव सर्वथा मया प्रार्थ्यते।

एषैव प्रपत्तिः। भागवतानुकूलप्रशस्ता च। –

एवमेव भगवान् सेव्य इति भागवतैरुक्तम्-

"नास्था धर्मे,नैव कामोपभोगे ,न वसुनिचये ,

यद्यद्द्रव्यं भवतु भगवन् पूर्वकर्मानुरूपम्।

एतत्प्रार्थ्यं मम बहुमतं जन्मजन्मान्तरेऽपि

त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु[1]।। इति

एवं गृणन्तं मुचुकुन्दं आगामिनि जन्मनि मुक्तो भविष्यसीति भगवाननुजग्राह।

अत्रेयं शङ्का – दृष्टमात्रेभगवति भक्तः सद्यः प्रक्षीणबन्धनो भवति। पुनर्जन्म तं न बाधते च। परं तु एकदा भगवतोऽपि मुचुकुन्दः चिरकालनिद्रया भगवद्भक्तौ व्यवधानमङ्गीचकार।

तथाऽपि पुनः न विषयैर्ग्रस्तः। तादृशव्यवधानस्य परिपूरणार्थं व्यवधानेन भगवता मुक्तिरनुग्राह्येति भगवत्सङ्कल्पः उपपन्नः।

---

[1] मुकुन्दमाला5 -

अत्र भगवतः सर्वलोकातीतत्वंमुहुर्मुहुरुपवर्णितमिति दिव्यस्तोत्रमिदम्। , गर्गवाक्यस्मरणञ्च उद्दीपनविभावः। ,मुचुकुन्दस्य भगवानालम्बनम्। भगवत्कृतं प्रबोधनं नमस्कारादयोऽनुभावाः। "मुदान्वितः ".. इति हर्षः अष्टाविंशतितमे युगे भगवानवतरिष्यतीति वृद्धगर्गवाक्यस्मरणात् स्मृतिः। नकामयेऽहं तव पादसेवनात् "अकिञ्चनप्रार्थ्यतमात्".. इति श्लोकद्वये लौकिसुखतिरस्कारात् मतिःविषयसङ्गं त्यक्त्वा नारायणगतिस्वीकृतेः धृतिश्च , सञ्चारिणः इति भक्तिरसविवेचनम्।

**जाम्बवान्[1]***

स्यमन्तकमणेरानयनार्थं वनं गतः श्रीकृष्णः जाम्बवतस्समीपे तं मणिं दृष्ट्वा अनुनयेन तं ग्रहीतुमपारयन् जाम्बवता सह युद्धमकरोत्। कृष्णेन पराजितः जाम्बवान् कृष्णमेवं स्तौति –

त्वां सर्वभूतानां प्राणहेतुं – इन्द्रियशक्तिंदेहशक्तिञ्च जाने। त्वमेव ,मनश्शक्तिं , सर्वेषां आदिपुरुषः सर्वसमर्थः शासकश्च।

ओजः इन्द्रियबलंबलं देहजं बलम्। एतेषां समाहारद्वन्द्वः। ,सहः हृदयबलं ,

त्वमेव विश्वसृजां ब्रह्मणां स्रष्टाकारणकारणश्चासीति भावः। ,सृष्टिहेतुः ,

सृज्यानां सृष्टिमर्हतां पदार्थानां सत्स्थाने हेतुः पदार्थः। अपि च जगद्गतिहेतूनां कालः असि। कलयति गमयतीति कालः। "कालः कलयतामहम्[2]" इति गीतोक्तेः।

आत्मनाम् आत्माऽसि। त्वमेव परमात्मा इति भावः। अत्र आत्मनः बहुत्वं न विवक्षितम्। यद्वा आत्मशब्दो जीवप्रयायः। प्राणिनामन्तर्भूतो परमात्मा त्वमेवाऽसि।

येन भगवता पुरा नक्रग्रहाकुलः समुद्रः सेतुना बद्धः ,दशग्रीवस्य शिरांसि छिन्नानि , सरामः त्वमेवाऽसि। एवं जाम्बवता प्रार्थितः भगवान् भक्तवत्सलः जाम्बवतः शरीरम् स्पृष्ट्वा - तस्यापनोदयामास। ,बाधामार्तिञ्च

अत्रापि भगवानालम्बनम्। पराक्रमदर्शनमुद्दीपनम्। नमस्कारः अनुभावः। "क्षीणसत्वः स्विन्नगात्रः इत्यनेन दैन्यः श्रमश्चकृष्णरूपेण इदानीं दृष्टः स ,रामरूपेण स्मृतः , विश्वसृजां स्रष्टा इति विस्मयः सञ्ज ,भगवान् नारायण एवेति स्मरणात् स्मृतिः धृतिश्च्ञ्चारिणः। स्तोत्रस्य सङ्क्षिप्तताऽपि ग्लानिं सूचयति।

---

[1] Xपर्यन्तम् 28 प्रभृति 26- 56 -

[2] भगवद्गीता -X – 30

## रुद्रः[1]*

बाणासुरं प्रति युध्यन् श्रीकृष्णः तं हन्तुं सुदर्शनमधत्त। ततस्तमसुरं रक्षितुं बद्धदीक्षो महेश्वरः कृष्णसमक्षमागत्य स्तौति –

भगवन्! त्वमेव परमात्माऽसि। वेदान्तर्गतं वाचामगोचरं ज्योतिरसि। विषयनिवृत्ताः योगिनः स्वतः प्रकाशं अनन्तं त्वां पश्यन्ति।

इदानीं भगवतः विराड्रूपं पुरुषसूक्तप्रकारेण स्तौति। -

"नाभिर्नभः – नाभ्य आसीदन्तरिक्षम्। अग्निर्मुखम् इत्यादिषु पुरुषसूक्तमेव प्रमाणम्। तत्रोक्तस्सम्बन्धः अभेदेन अत्रोपवर्णितः। पुरुष सूक्ते येषां भूतानां विराडवयवानाञ्च जन्यजनकभाव उक्तः तेषामेवात्र तैस्तैरङ्गैरभेदवर्णनम्।

"चन्द्रमा मनसो जातः। चक्षोस्सूर्योऽजायत। मुखादिन्द्रश्चाग्निश्च। प्राणाद्वायुरजायत। नाभ्या आसीदन्तरिक्षंशीर्ष्णो द्यौस्समवर्तत। पद्भ्यां भूमिद्दिशश्शोत्रात् , "तथालोकानकल्पयन्। रोमाणि यस्य ओषधयः "..... इत्यादि वर्णनम् पूर्वं दर्शितम्[2]।

तवायमवतारः धर्मरक्षार्थं कृतः। जगतः स्थित्यै च। भवतः महत्वेनैव भूः ,स्वर्लोकः , तपोलोकादयः सप्तभुवनानि धृतानि। ,सत्यलोकः ,महर्लोकः ,भुवर्लोकः

त्वमेवाद्वितीयः। कारणातीतःसर्वेशो ,ब्रह्मादिकारणकारणं ,ऽसि। विकारातीतोऽपि धृतविकार इव यथा भुवनानि मोहयसि। यथा सूर्यः स्वीययैव छायया मेघरूपया पिहित इव लोकेन दृश्यते। सर्वान् पदार्थान् आच्छादिकां छायाञ्च प्रकाशयति च। तथा गुणाहङ्कारादि विकारैः अन्तरित एव लोकेन भावितः त्वं स्वप्रकाशः सर्वं प्रकाशयसि।

भवत एव मायया मोहिताः पुरुषाः जन्ममृत्युजरादिभिः गृहीताः दुःखसागरे उन्मज्जन्तिनिमज्जन्ति च। ,

सर्वोत्तमं मनुष्यजन्म प्राप्य त्वच्चरणाश्रितः धन्यो भवति। एतादृशं जन्म लब्ध्वाऽपि यस्त्वां न भजते सः आत्मनैव वञ्चितः।

यः भार्यापुत्रादीन् ध्यायन् त्वां न स्मरति सः विषामुतयोः युगपदुपस्थितयोः अमृतं त्यक्त्वा विषं सेवमान इव अर्थात् स्वनाशं स्वयमेव वृणुते।

अहं रुद्रः ये चान्ये देवाः मुनयश्च सर्वे वयं त्वां शरणं प्रपन्नाः। ,ब्रह्मा स्रष्टा ,

---

[1] X पर्यन्तम् 45 प्रभृति 35 - 63 -

[2] श्रीमद्भागवतम् 6 -2 -

जगत्कारणंभवन्तं सर्वे वयं मोक्षार्थं ,अद्वितीयं ,विकारातीतं भक्तवत्सलं ,सर्वसमं , शरणं व्रजामः।

अयं बाणासुरः मम भक्तः। मया तस्मै अभयं दत्तम्। मयि करुणां कृत्वा अस्मिन् प्रसीद। एवं भगवता रुद्रेण प्रार्थितः श्रीकृष्णः बाणाय अभयं ददौ।

अत्रापि भगवतः दिव्यं रूपं स्तुतमिति दिव्यस्तोत्रमेतत्। रुद्रगता कृष्णरतिः स्थायी। भगवानालम्बनम्। बाणासुर प्राणरक्षाप्रयत्नः उद्दीपनम्। भक्तानुकम्पया त्वरागमनादयो अनुभावाः। "त्वं हि ब्रह्म परं ज्योति"रिति ज्ञानं मतिः" ,वयञ्च सर्वे भवताऽनुभाविताः "..... इति स्मृत्यादयस्सञ्चारिणः।

## युधिष्ठिरः [1]*

जरासन्धं घातितं श्रुत्वा युधिष्ठिरः तत्कारणभूतं कृष्णमेवं तुष्टाव –

हे कृष्ण! महेश्वरादयः त्रिलोकपूज्याः देवा अपि युष्मच्छासनमेव अनुग्रहं मन्वानाः तच्छिरसा धारयन्ति। इदानीं युधिष्ठिरेण प्रेषितः कृष्णः जरासन्धं मदनुजेन भीमेन घातितवानिति मे इयं प्रतिष्ठा भवदनुग्रह लब्धा। त्रिलोकशासकोऽपि त्वमस्मान् पालयसीत्यत्र तव भक्तवात्सल्यमेव हेतुः। युधिष्ठिराज्ञया कृष्णः प्रवर्तते इत्यपि लोकव्यवहारः विडम्बनात्मक एव।

एवंविधः व्यवहार अपि न ते यशोऽपकर्षकः। लोकयात्रापूरकैः तव तेजः न वर्धतेन , क्षीयते। यतस्त्वं सर्वलोकहेतुः परमात्माऽसि। परमात्मनः तेजस्तु तादृक् यत् कर्मभिः न वर्धतेन क्षीयते वा। ,

"न कर्मणा वर्धते नो कनीयान्" इति श्रुतेः[2]।

– तव भक्तानां उपासकानामेव उपासनार्थं त्वयि नानारूपा बुद्धिः प्रवर्तते अयं नारायणःअयं श्रीकृष्ण इत्यादि। किन्तु त्वमद्वितीयः। अपि च ते भक्तानां भक्त्या ,अयं रामः , ' ज्ञानजननात्अहं'त्व ,मित्यादि भ्रमो नश्यति। भक्त्या जातवैराग्याः सर्वसमा भवन्ति। -

इति भगवन्तं श्रुत्वा प्राप्तकृष्णानुमतिः युधिष्ठिरः यष्टुमारेभे।

अत्र भगवानालम्बनम्। जरासन्धवधादि लौकिकसहायकरणं उद्दीपनम्। ये स्युः त्रैलोक्यगुरवःलोकमहेश्वराः ते सर्वे तव शासनं शिरसा वहन्तीति विस्मयःतादृशारविन्दाक्षः , – त्वमसीति स्मृतिश्चसञ्चारिणौ। आनन्दाश्रुकलापातः अनुभावः इति भक्तिरसपरिपोषः।

---

1 X पर्यन्तम् 5 प्रभृति 2 - 74

2 भावार्थदीपिका -X4- 74 -

## मुनयः –[1]*

कृष्णदर्शनार्थमागताः नारदव्यासविश्वामित्रादयो ऋषयः प्राप्तसत्काराः कृष्णमेवं तुष्टुवुः –

भगवन्! वयं भगवत्तत्वज्ञा इति अस्माकं भ्रमः। यतो वयं भवतो मायया मोहिताः भगवतस्ते सङ्कल्पं न जानीमः। यतस्त्वं गूढ इव स्वेच्छया सर्वप्रभुरपि अनीशवच्चरसि। किमर्थमेवं कृतमिति वयं न विद्मः। तत्र ते मायैव कारणम्।

तव लीलया एकस्मादेव पदार्थात् बहुधा भ्रान्तिर्जायते। यथा मृदः समुत्पन्नाः घटादिपदार्थाः घटादि नानानामभिः नानाप्रकारैः व्यवह्रियन्ते तथा त्वत्तः समुत्पन्नानि जगदादीन्यपि त्वद्भिन्नत्वेन नानात्वेन च भासते।

"वाचारम्भणं विकारो नामधेयं– "मृत्तिकेत्येव सत्वं[2] , इति श्रुतेरर्थः अत्रानुसन्धेयः।

त्वं परमात्मा नारायणः। सर्वजनरक्षार्थंदुष्टनिग्रहार्थञ्च ,वेदधर्मान् रक्षितुं , लोकेवर्णाश्रमात्मा त्वम् जन्म स्वीकरोषि। वेदाश्च लोकरक्षकाः। खलनिग्रहेण वेदरक्षाकारित्वं – एवं प्रतिपादितमाचार्यैः यथावृक्षस्य परिरक्षणार्थानि पर्णानि तथा वेदाः संसारवृक्षपरिरक्षणार्थाःधर्माधर्मतद्धेतुप्रदर्शनार्थत्वात्[3]।"

अद्य भवतो दर्शनेन तपस्स्वाध्यायादिभिः लब्धं परमं ब्रह्म दृष्टमस्माभिः। ब्रह्मणाः वेदरक्षकाःततस्त्वं ब्राह्मणान् बहुमन्यसे। किन्तु त्वमेव ब्रह्मण्यानामग्रगण्यः। .

ब्रह्म वेदः। ब्रह्मणि साधुः ब्रह्मण्यः।

अत एवास्माकं तपसां विद्यानाञ्च त्वद्दर्शनेन साफल्यमुदपादि।

स्वमायया प्रवर्तितलोकक्रमायपरमात्मने ते नमः। ,अपरिमेयमहिम्ने ,

वयं नारदादयःअमी भूपाः वसुदेवादयः आत्मारामश्च ये अक्रूरादयः सर्वे वयं त्वां , वेदितुं यतामहे।

यथा स्वप्नगतः पुरुषः स्वप्ने स्वानुभूतेषु वस्तुषु आकारान्तरं, नामान्तरं बिभ्रन् प्रत्यक्षानिव स्वप्नगतान् दृष्ट्वा आत्मानं न वेदतथैव दृष्ट भवदाकारा अपि भवन्तं तत्वतो न , विदन्ति। एवमेव सर्वोऽपि लोकः स्वप्नवस्तुतुल्येषु विषयेषु इन्द्रियप्रवृत्तिरूपेषु प्रवृत्ताः ततो जातविभ्रमाः उपप्लुतविवेकाः त्वां न जानन्ति।

---

[1] X पर्यन्तम् 26 प्रभृति 16- 84 -

[2] भावार्थदीपिका -X17 - 84 -

[3] शाङ्करभाष्यम् - ऊर्ध्वमूलमधश्शाखमिति गीताश्लोकविवरणे पृ 229 -

ये तव पादं दृष्टवन्तः ते सर्वतीर्थावगाहजन्यं फलं लभन्ते। अपि च भक्त्या उपसंहृतजीवलक्षणाः परमात्मनः सारूप्यं प्राप्ताः भगवद्गतिं प्राप्नुवन्ति। तादृशीं भक्तिं अस्मास्वनुगृह्णातु भवान्।

एवं कृष्णरूपिणं नारायणं स्तुत्वा मुनयः यथेच्छं जग्मुः।

अत्र भगवान्नारायणः भक्तेरालम्बनम्। कृष्णलीलाश्च उद्दीपका भवन्ति। "चिरं विमृश्य मुनयः "..... इत्यत्रोक्ताः बुद्धौ विमर्शादयः अनुभावाः। भगवानेव सृष्टिस्थितिलयकारक इति ज्ञानं स्मृतिव्यज्यकम्। स्वलीलया वेदपदं सनातनं बिभर्षीति भगवतः तत्त्वावगतिः मतिः। दुर्लभं भगवद्दर्शनं प्राप्तमिति हर्षः सञ्चारिणः। अत्रापि भगवतः परमात्मरूपा विभूतिर्वर्ण्यते इति दिव्यस्तोत्रमेतत्।

## बलिः– [1]*

एकदा देवकी रामकृष्णजननात् प्राक् कंसेन हतान् स्वषड्पुत्रान् द्रष्टमनाः तदर्थं कृष्णं प्रार्थयामास। कृष्णोऽपि तान् रसातलगतान् विज्ञाय पातालमगच्चत्। वामनावतारे रसातलं प्रापितो बलिःसाक्षान्नारायणमेव कृष्णरूपेणागतं विज्ञाय इत्थं प्रर्थयामास। -

अपरिच्छेद्यतत्वाय विश्वरूपिणे जगतां विधात्रे साङ्ख्ययोगगम्याय ते नमः। इति[2]।

अत्र आदिशेषः यदि विश्वस्य धारणाल्लोकस्य प्रतिनिधिः तदा शेषाधिष्ठायी भगवान् शेषी भवति। विशिष्टाद्वैतिनां मते भगवतस्सर्व शेषीति व्यवहारः प्रसिद्धः।

रजस्तमो गुणाभ्यां बाध्यमानानां प्राणिनां तव दर्शनम् दुर्लभम्। अस्माकं भाग्यवशात् अतर्कितोपनतमेतत्।

दैत्याः दितेः पुत्राः। दानवाः दनुनामिकायाः कश्यपपत्न्याः उत्पन्नाः। रक्षांस्यपि असुरविशेषा एव। यैः भुवो रक्षणाय प्रतिज्ञा कृताअनन्तरकाले संज्ञामात्रेण रूढिर्जाता। ,

"रक्षामेति च यैरुक्तं रक्षसास्ते भवन्तु वः।

यक्षाम इति यैरुक्तं यक्षा एव भवन्तु वः।।"

इति तेषां जन्मकथा[3]।

एषां देवयोनिनाम् मध्ये कैश्चित् भगवद्भक्त्या भगवदनुग्रहो लब्धः। केचित् भगवन्तं द्विषन्तः अपि मुक्तिं गताः। यथा शिशुपालः[4]।

सालोक्यादयो मुक्तिभेदाः। भावो हि भवकारणम्। इति बलेरुक्तिः –

" ये यथा मां प्रपद्यन्ते तान्स्तथैव भजाम्यहम्[5]।इति गीतावाक्यं स्मारयति। -"

"केचिद्बद्धवैरेण "...... इति श्लोकस्यार्थः तात्पर्यरूपेण बहुशः प्रतिपादितः।

तव मायास्वरूपं प्राणिनः इदम् कृष्णस्वरूपम्इत्थं कृष्णमाया प्रवर्तते इति , ?स्पष्टतया न विदुः। योगिनामप्यगम्यम् तादृक् तत्वं ज्ञातुं स्तोतुं वा वयं कियन्तः

---

[1] Xपर्यन्तम् 46 प्रभृति 38 - 85 -

[2] अत्र श्रीधरः - अनन्तः आदिशेषः। सः बृहति सङ्गच्छते। आदिशेषस्य फणैकदेशे विश्वधारणात् अनन्तस्यैव बृहत्वम्।

भावार्थदीपिका -X38 - 85 -

[3] श्रीमद्रामायणम् - उत्तरकाण्डः 4-

[4] विस्तरस्तु श्रीमद्भागवते सप्तमस्कन्धे युधिष्ठिरनारदसंवादे द्रष्टव्यः

[5] भगवद्गीता10- 4 -

ततः अज्ञानिनामशक्ततामस्माकं जानता त्वया संसारबन्धेभ्यः मोक्षः प्रापणीयः। तदर्थमेव तव पादाम्बुजमाश्रयामः।

अस्माकं त्वं शासकोऽसि। शिष्यान् प्रपन्नानस्मान् शाधि। श्रद्धया भवत्पादारविन्दं सेवमानोजनः संसारचोदनेया विमुच्यते। भगवति प्रत्ययः भगवत्सेवायां स्पृहा च श्रद्धा[1] इत्युच्यते।

त्वयि विश्वस्ताः अवश्यं मुक्ता भवाम इति बलेः सुदृढप्रत्ययः अत्र गम्यते।

बलिः कृष्णं नारायणरूपेणैव वेद। ततः दिव्यस्तोत्रमिदम्।

नारायणरूपेण ज्ञातः भगवानालम्बनम्। अतर्कितोपनतम् भगवतः दर्शनमुद्दीपनम्। "नमोऽनन्ताय बृहते "..... इत्युक्तः नमस्कारः अनुभावः। "दर्शनं वा हि भूताना"मित्युक्तौ अन्यदुष्प्रापदर्शनप्राप्तेः जातः हर्षः। केचनोद्बद्धवैरेण " ,भक्त्या इत्युक्तौ स्मृतिः .....तन्नः प्रसीद" इति वाक्येषु मतिश्च सञ्चारीइति भक्तिरसपरिपोषः कृतः। ,

[1] श्रद्धा संप्रत्ययः स्पृहा - इति अमरकोशः 103- 3- 3

## श्रुतदेवः–[1]*

श्रुतदेवः मिथिलावासी कृष्णस्य सखा। विषयवासनारहितः। एकदा स्वगृहमागतं भगवन्तं श्रुतदेवः एवं स्तौति –

यदस्माभिश्चिरकाङ्क्षितं तव दर्शनमिदानीं प्राप्तम्। त्वं पुराणपुरुषः ,त्रिगुणातीतः , गुणत्रयेण जगतः कर्ताऽपि आत्मस्थित्या इदानीमेव अस्मद्गृहान् प्राप्य अस्मान् धन्यान् करोषि।

शयानस्य पुरुषस्य जातस्वप्नादिः यथा विभाव्यते तथा सर्वोप्ययं प्रपञ्चः भवन्मायया स्वप्नवत्कल्पितः सत्यमिव विभाव्यते।

ये च श्रवणेनतेषां ,अभिवन्दनेन अमलात्मनः त्वां सेवन्ते ,अर्चनेन ,गुणकथनेन , हृदयेषु सदा तिष्ठसि। एवं भक्तानां हृदयस्थितोऽपि सर्वैरप्राप्य इव अतिदूरस्थोऽसि। तादृश दूरस्थितत्वमपि कर्म परिणामेन भवति। न तु तव भक्तानाम्। योगिभिरप्यगम्योऽपि भक्तैस्सुलभगम्योऽसि।

स्वमायया स्वस्मात् संसारं पृथग्विभज्य दर्शयसि। जगतः स्रष्टुत्वात्ते सकारणत्वं , चर्मचक्षुभिः प्रत्यक्षतया द्रष्टुमशक्यत्वात्ꣳकर्मभिः निर्लिप्तत्वात् त्वयि निष्कारणत्वञ्च , सिद्धम्।

तादृशः त्वं अस्मान् भृत्यान् यथेच्छं प्रशाधि। भवद्दर्शनपर्यन्तमेव नृणां संसारक्लेशः।

अत्र भगवद्विषयिका रतिः भक्तिरसमूलभूता स्थायिभावः। भगवानालम्बनः। अतर्कितोपनतं भगवदागमनम् उद्दीपनविभावः। "सतर्कयामास "......इत्यारभ्य आतितेयीक्रिया अनुभावः। "नाद्य नो दर्शनं प्राप्तः" इत्यत्र हर्षःगदतां इत्यादिषु ,श्रृण्वतां , मतिश्च सञ्चारिणौ इति भक्तिरससामग्री।

---

[1] X पर्यन्तम् 50 प्रभृति 45- 86 -

# चतुर्थो ऽध्यायः

## कार्तज्ञस्तुति प्रकरणम्

### **कुन्ती**–[1]

कुन्ती श्रीकृष्णस्य सन्निकृष्टबन्धुः। नवमस्कन्धे स्थित वंशानुक्रमणिकया एतद् बन्धुत्वं ज्ञायते –

"देवमीढस्य शूरस्य मारिषा नाम पत्न्यभूत्।

तस्यां स जनयामास दशपुत्रानकल्मषान्।।

वसुदेवं देवभागं देवश्रवसमानकम्।

सृञ्जयं श्यामकं कङ्कअनीकं वत्सकं वृकम्।। ,

देवदुन्दुभयो नेदुः आनका यस्य जन्मनि।

वसुदेवं हरेस्स्थानं वदन्त्यानकदुन्दुभिम्।।

पृथा च श्रुतदेवा च श्रुतकीर्ति श्रुतिश्रवाः।

राजाधिदेवी चैतेषां भगिन्याः पञ्चकन्यकाः।।

कुन्तेस्सख्युः पिता शूरो हयपुत्रस्य पृथामदात्[2]।।"

इत्थं कुन्ती वसुदेवस्य भगिनी। अत एव कृष्णस्यपितृष्वसा च। तत्कर्त्रुके स्तोत्रे सा स्वां देवकींतुल्यां मेने। कृष्णः मातरं कंसात् यथा ररक्षतथा ससुतां कुन्तीमपि विपद्गणात् , ररक्षेति च कथनात् सा बन्धुकोभ्यां निक्षिप्य परामृष्टा।

अस्मिन् स्तोत्रे सा कृष्णं परमात्मानं ,साक्षात् परब्रह्मानं ,वृष्णिवंशसमुन्नतिकारणम् , ब्रह्मज्ञानञ्च कुन्तीवाक्येषु ,मोक्षाभिलाषा ,आर्तिः ,भक्तिः ,सम्भावयति। आत्मीयता कृतास्पदम्।

---

[1] । 18-8- प्रभृति पर्यन्तम् 44

[2] श्रामद्भागवतम् -IX 27- 24- प्रभृति पर्यन्तम् 30

द्रौण्यस्त्रात् पाण्डवानारक्ष्य द्वारकां गन्तुं प्रवृत्तं श्रीकृष्णमुद्दिश्य कुन्त्या कृतज्ञतापूर्वकोक्तवाक्यानि सर्वाणि स्तुतिपराणि। कुन्त्याः कृतज्ञतापूर्वकानि एतद्वचनानि कृष्णस्य बाल्यस्मरणरूपाणिकृष्णस्य ,तस्य मोक्षप्रदातृत्वनिरूपकाणि , तस्य शारीरक वर्णनाभियुक्तानि च। ,परमात्मस्वरूपबोधकानि

वयसा कनिष्ठो*ऽपि प्रकृतेः परत्वात्, ईश्वरत्वात्सर्वपापहर्त्रुत्वात् त्वं ,सर्वेषामाद्यत्वात् , नमस्काराार्हः।अत एव अहं त्वां नमस्ये।

अत्र विरोधाभासालङ्कारः अस्ति।

साङ्ख्याभिमतपुरुषव्यावृत्यर्थं ईश्वर इत्युक्तम्। सापेक्षमीश्वरत्वं ब्रह्मादिसाधारणमिति तद्व्यावृत्यर्थं सर्वभूतानां अन्तर्बहिश्चावस्थितमित्युक्तम्[1]।

"यच्च किञ्चित् जगत्सर्वं दृश्यते श्रूयतेऽपि वा।

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः[2]।।"

इति श्रुत्यर्थोऽपि कुन्तीवाक्येषु उपनिबद्धः।

सर्वव्यापको*ऽपि त्वं साधारणैः चक्षुरादीन्द्रियैरग्राह्यः।

"न चक्षुषा पश्यति कश्चिदेनम्[3]"। इत्यादि श्रुतिरपि एतद्विषयं प्रतिपादयति।

" भवदनुग्रह भाजः एव त्वां पश्यन्ति।*दृश्यते त्वग्र**यया** बुध्या सूक्ष्म दर्शिभिः[4]" इति श्रुतिवाक्येन सूक्ष्मदर्शिनः योगिनः चित्तैकाग्र्येण त्वामतीन्द्रियज्ञानेन पश्यन्ति।

"न तु मां शक्यसे द्रष्टुं अनेनैव स्वचक्षुषा।

दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्[5]।।"

इति श्रीकृष्णोक्तगीतावाक्यमपि सामान्यदृष्टेः "भगवानगम्य" इत्यर्थो बोधयति।

सङ्गीतशास्त्रानभिज्ञेन नरेण ,विनाशरहितः त्वं मूढदृशां ,इन्द्रियवृत्यविषयः* नाट्यधरः नट इव न ज्ञायसे। यथा पदार्थाभिनयरसानुरूपनृत्यतालादिविशिष्टः नटः , रूपगुणकः इति तस्य यथार्थतत्वेन। तथैव ,न तु एतज्जातिनाम ,नटतीत्येवं रूपेणैव ज्ञायते

---

1 भागवतचन्द्रिका 18- 8 -1 -

2 महानारायणोपनिषत् 5- 9 -

3 कठोपनिषत्9 - 6 -

4 पूर्वत्र12- 3 - 1 -

5 भगवद्गीता 8 -11 -

नन्दन ,देवकी ,वासुदेव ,कृष्ण ,अज्ञानोपहता अहं त्रिगुणात्मिकमायाजवनिकया आच्छन्नं त्वां इत्यादि रूपेणैव जानामि। न तु तव अमोघाद्भुतानिर्वचनीयलीलाविग्रहस्वरूपम्।

प्रियाणां पाण्डवानां द्यूतकृतपराभवादिकंअतिप्रियायाः सोदर्याः ,वनवासक्लेशः , स्वसोदर्याः सुभद्रायाः ,भवता तन्निवारणम् ,द्रौपद्याः वस्त्रापहरणादि दुःखागमनम् ज्ञान भक्तानां भीष ,द्रौण्यस्त्रात् उत्तरागर्भरक्षणम् ,अभिमन्युमरणात् पुत्रशोकं्मादीनां वधोपायादिकारणंइत्यादि सर्वमपि ,दुष्टशिशुपालादीनां संहरणेन मोक्षप्रदातृत्वं , ?सर्वसमर्थस्य तव लीलास्वरूपमेव। अहं तव स्वरूपं कथं निर्धारयामि

इति कुन्त्याः मनोगताशयः।

परमसारभगवतृभजनैकनिष्ठानां जीवन्मुक्तानां सनकादीनां ,सारासारविवेकित्वेन* विशुद्धमनसां परमहंसानामपि भक्तियोगकरणविषयं त्वां रागादिमत्यः शास्त्रज्ञानादि तात्पर्यविचारात् अपरिशुद्धमनसः मादृशास्स्त्रियः कथं पश्येम?

परमहंसाः योगिनः अपि ज्ञानमार्गादपि अधिकतया भक्तिमार्गेणैव त्वां पश्यन्ति। तादृशाद्भुतमहद्भक्तिरपि मम नास्तीति कुन्त्याः आवेदना।

कुन्ती ज्ञानस्य दुर्लभत्वं ज्ञात्वा भक्तिमार्गस्य वैशिष्ट्यम् सुलभत्वं मत्वा पुनः केवलं , "कृष्णाय इत्यादिना नमस्करोति। .....

"नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते" इति श्लोकेन कृष्णावतारस्य प्रामुख्यं ज्ञायते।

कृष – विलेखने इति धातोः कृषतिविलिखत ,िदारयति मोहपटलमिति कृष्णः। तस्मै , नमः।

वसुदेवस्यापत्यं पुमान् वासुदेव इत्यर्थे एव 'वासुदेव' शब्दः न प्रयुक्तः। 'वस - 'आच्छादने इति धातोः– इदं लोकं आच्छाद्य दीव्यते , प्रकाशते इति वासुदेवः। वस् धातोः दिव् धातोश्च वासुदेवः इति निष्पद्यते। वस– वस ,आच्छादने -निवासे इति उभयधात्वोरपि निष्पन्नम्।

"वसन्ति जगन्ति अस्मिन्निति"वसति जगत्सु , इति द्वावर्थावपि श्रीकृष्णे समन्वयम् प्राप्तौ।

दिव् धातोः पर्याप्ताः क्रीडा विजिगीषादि –दिव्) क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषुसर्वे अर्थाः कृष्णे ( सन्तोषस्वयंकान्तिमत्यादियुक्ततया स्पष्टतया प्रकाशिताः। ,गोपकुमारक्रीडा ,दैत्यनिरसन

वासुदेवशब्दस्मरणेन सोदरस्य वसुदेवस्य प्रेमपूर्वकमननम्कृष्णेन साकं , सान्निहित्यमपि स्फोरयति।

कंसबद्धान् जननीजनकान् तद्बन्धनात् मोचयित्वाअनन्तरकाले मृतशिशून् षट् , संख्याकान् तस्याः दर्शयित्वा देवक्याः आनन्दवर्धनः अभूत् श्रीकृष्णः। तत्सर्वं मनसिनिधाय "देवकीनन्दनाय" नमः इति कुन्ती साभिप्रायं स्तुतवती।

कुत्सितं मारयति कुमारः।

हे कृष्ण! त्वं नन्दस्य पापादिकमपहृत्य तस्यानन्दकरः अभवः। कौमारलीलामाधुर्यैः देवकीवसुदेवाभ्यां अप्राप्तं सन्तोषं सर्वं यशोदानन्दौ प्राप्तौ। अत एव नन्दगोपकुमाराय तुभ्यं नमः।

गां विन्दतीतिगोविन्दः। – गां) ज्ञानम्– गाः सर्वेषामिन्द्रियाणि विन्दति ( आकृष्य प्राप्नोति।

गवां विदः लाभः यस्य सः गोविन्दः। -

गवा वेदेन विन्दते – लभ्यते इति गेविन्दः।

व्युत्पत्तिभिरेतैः गोविन्दशब्दस्य ज्ञानवानिति ,गवां पालकः , सर्वेन्द्रियाणां रक्षक इति , वेदज्ञानेन लभ्य इति च ज्ञायते। ,तेषां स्वभावस्य वेत्ता इति

गोविन्दशब्दार्थं शङ्कराचार्यः[1] एवं निरूपयति –

"नष्टां वै धरणीं पूर्वमविन्दद्यद्गृहागताम्।

गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः।।(70- 342 – महाभारतम् शान्ति)"

इति मोक्षधर्मवचनात् गोविन्दः।

"अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः।

गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम्।।"

इति (45-19-2- हरिवंशः)

गोरेषा तु यतो वाणीतां च विन्दयते भवान्। ,

गोविन्दस्तु ततो देव मुनिभिः कथ्यते भवान्।।" इति च हरिवंशे[1](50-88-3)

"गोविन्देति यदाक्रन्दन् कृष्णं मा दूरवासिनम्।

ऋणप्रवृद्ध इव मे हृदयान्नापसर्पति[2]।।"

---

[1] विष्णुसहस्रनामशाङ्करभाष्यम् पृ 115 -

[2] महाभारतम् सभापर्वम् -

इति कृष्णवाक्येन गोविन्देति वचः तस्यअत्यन्तं प्रीतिपात्रं इति ज्ञायते।

एवं "कृष्णाय वासुदेवाय देवकीनन्दनाय च

नन्दगोपकुमाराय गोविन्दाय नमो नमः" इति स्तुति श्लोके कुन्ती कृष्णे स्वस्य आत्मीयतां प्रकटितवती।

"कृष्णाय वासुदेवय"... इत्यादि रूपश्लोकाः भक्त्युद्दीपकाः, न केवलं कुन्त्याःअपि , सर्वमुखोद्गता इव प्रतिभान्ति। ,च सर्वभक्तमात्रसाधारणा इव

"नमः पङ्कजनाभाय ".. एतेन चतुर्मुखं प्रत्यपि कारणत्वं प्रख्यापितम्।

नमः पङ्कजमालिने – पङ्कजमालिका धारिणे नमः।

पङ्कजनेत्राय – एतेन कप्यासं पुण्डरीकमेवतस्य चक्षुषी इति श्रु ,तिप्रसिद्धा पुण्डरीकाक्षता व्यक्तीकृता। पङ्कजाङ्घ्रये नमः –एतेन भक्तजनास्वाद्यचरणसरोरुहमकरन्दत्वं प्रतिपादितम्[1]।

पङ्कजं नाभौ यस्य सः पङ्कजनाभः त्रिलोकात्मकं पङ्कजं नाभौ इत्यनेन जगत्कारणत्वं " ब्रह्मपितृत्वं सूच्यते। अत्र बहुव्रीहावपिअच् प्रत्यन्ववपूर्वात् सामलोम्नः[2]" इत्यत्र योगविभागादच् प्रत्ययः।

पङ्कजनां माला यस्य तस्मै पङ्कजमालिने। लक्ष्मीसमर्पितमालायुक्तः। लक्ष्मीपतिरिति , अशेषब्रह्माण्डाधार इति च ज्ञायते। ,भूषितत्वञ्च ,अलङ्कारप्रियत्वम्

पङ्कजवत् प्रसन्ने नेत्रे यस्य तस्मै पङ्कजनेत्राय। अनेन तापहरत्वंप्रसन्नत्वात् , पुण्डरीकाक्षात् ,कृपाश्रयत्वं च कृष्णस्यास्ति इत्यर्थः ध्वन्यते। पङ्कजनेत्र "महाभारतकृद्भवेत्[3] इति वाक्येन" ,पुण्डरीकाक्षशब्दस्य विष्णुवाचकत्वात् ,दैत्यारिः , "गरुडध्वजः ,गोविन्दो ,पुण्डरीकाक्षो इति कोशात् पुण्डरीकाक्ष पदस्य विष्णौ रूढत्वात् "विष्णवे सर्वाधिपतये स्वाहा "इति श्रुत्या विष्णोः सर्वाधिपतित्वस्य सिद्धत्वात्पङ्कजनेत्र , शब्दस्य सर्वपतिरिति अर्थः वक्तुं शक्यते।

शङ्करः पुण्डरीकशब्दस्यैवं निरुक्तवान् " -हृदयस्थं पुण्डरीकमश्नुते – व्याप्नोति , तत्रोपलक्षित इति पुण्डरीकाक्षः।

"यत् पुण्डरीकं पुरमध्यसंस्थम्।" इति श्रुतेः[4]।

---

[1] भागवतचन्द्रिका 21 - 8 - 1 -

[2] अष्टाध्यायी -V75 - 4 -

[3] विष्णुपुराणम् 5 - 4 -3 -

[4] विष्णुसहस्रनामशाङ्करभाष्यम् पृ 101 -

पङ्कजैः रचिताः रेखाःतस्मै पङ्कजाङ्घ्रये। पद्माकाररेखाविशिष्टपादौ ,अङ्घ्रौ यस्य , श्रीकृष्णस्य स्तः। तत्पदचिह्नत्वं महैश्वर्यादिकं सूचयति। पङ्कजाङ्घ्रिशब्देन विष्णोः सुखसेव्यत्वं ध्वन्यते। एवं च सर्वत्र पङ्कजसारूप्येण श्रीकृष्णशरीरं दृष्टवत्याः कुन्त्याः सर्वं शीतलस्पर्शमिवाभवत्।

अनन्तरश्लोकद्वये गुणवर्णनं कृतंभगवत्कृतमार्तरक्षणं भक्तानां विश्वासोद्दीपनं तावद्भवेत्। प्रभोः महिम्ना सर्वथा रक्षिता पृथा तत्कृतज्ञतापूर्वकं तांस्तान् घट्टान् एवमत्र स्मृतवती –

हे हृषीकेश! सर्वेन्द्रियाणां प्रभुस्त्वम्। अत एव मम हृदयं त्वमेव जानासि। हिंसास्वभावेन कंसेन चिरकालं पीडिता अतिदुःखा तव माता देवकी पुत्रेण त्वया एकवारमेव आपद्भिः विमोचिता। अहं पुनः आपत्समूहेषु वारं वारं पुत्रैस्सह अस्माकं प्रभुणा त्वया विमोचिता। तादृशरक्षणे हेतुः अहमतिदुःखान्विता। त्वं च दीनबान्धवः। अत एव पुनः पुनः मां रक्षितोऽसि।

अनेन श्रीष्णस्य स्वार्थनिरपेक्ष परदुःखनिराचिकीर्षारूपं दयालुत्वं , निम्नोन्नतानादरेण आश्रितपक्षपातित्वमुक्तम्। ,आश्रितानिष्ठपरिहर्तृत्वं

भीमं दुर्योधनदत्तकालकूटविषात् ,लाक्षागृहाग्नेः ,हिडिम्बादिराक्षसैःरक्षितवान्। तथैव द्यूतसभायां द्रौपद्याः वस्त्रदानेनवनवासक्लेशादिभिः पाण्डवान् च त्वमेव अरक्षः। , तादृशकष्टसमयेषु अस्माभिरसकृदनुस्मृतः त्वम् एतेभ्यः विपद्गणेभ्यः अभिरक्षितः।

अत एव भगवत्स्मरणविरोधसंपत्समूहतः भगवद्दर्शनहेतुः विपत्समुदाय एव श्रेयान्। यथा आपत्समयेषु सर्वे जनाः भगवन्तमधिकतयान तथा ,त्रिकरणशुध्या स्मरन्ति , " इतरसमयेषु।विपदस्सन्तु नश्शश्वत्" इति तस्याः प्रार्थना तां परमभक्ततां चित्रयति। अपि च तत्तदापत्समयेषु कथं सा श्रीहरिं शश्वत् मनसि स्तुतवतीति व्यङ्यमुखेनात्र प्रतिपादितम्।

अत्र अनुज्ञालङ्कारः[1] समन्वयो भवति।

हे कृष्ण! त्वं मादृशानामापत्सु तव दर्शनेन परमानन्दं प्रयच्छसितदभावे , तवादर्शनेन परमानन्दतिरोभावं करोषीति एषा भवतः विपरीतलीला एव। लौकिकानां नराणां विपदः अनिष्टत्वेऽपि भक्तानां तव दर्शनलाभात् ताः विपदः इष्टपूर्वा एव।

"तं भ्रंश्यामि संपद्भ्यः यस्य चेच्छाम्यनुग्रहम्। इत्यादि कृष्णोक्त वाक्यान्यपि विपद्युक्तस्यैव भगवदनुग्रहं भवेदिति स्पष्टयति।

---

[1] अनुज्ञालङ्कारः " -दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात्- " कुवलयानन्दः पृ 227

यासु विपत्सु सा कृष्णमपश्यत् तद्दर्शनम् परमानन्दावाप्तिपूर्वकं , मनोभावे विपदागमनानुज्ञा। -संसारदुःखोच्छेदरूपमोक्षदर्शनमेवेति तस्या

जन्मैश्वर्यश्रुतश्रीभिः युक्तः पुरुषः त्वदेकभक्तानां निष्कामानां पक्षे अकिञ्चन ) दरिद्राणां वा ज्ञानगोचरं त्वां द्रष्टुं ज्ञातुं वा नैव (शब्दस्य दरिद्र इत्यर्थो वदन्ति व्याख्यातारः समर्थः।

एकान्तभक्ता एव धनं यस्यरागद्वेषादिरहित ,तादृशस्य अकिञ्चनवित्ताय ,जीवन्मुक्तेषु स्थिताय ,रागादिरहिताय ,आत्मनि रममाणाय ,अगणितानन्दस्वरूपे,स्वानन्दमग्नाय , ,अशनायापिपासाशोकमोहजरामृत्युरूपषड्ूर्मिरहितशान्तस्वरूपाय मोक्षप्रदाननिपुणाय कृष्णाय नमः।

अकिञ्चनवित्तत्वंशान्तत्वञ्च कैवल्यप्रदानसा ,आत्मारामत्वं ,निवृत्तगुणवृत्तित्वं ,मर्थ्ये हेतवः भवन्ति।

देवकीपुत्रं त्वां ब्रह्मादीनपि वशीकुर्वाणं ,कालशरीरकं , ,जगच्चेष्टाशक्तिमन्तं ,जन्मलयकर्तारम् ,आद्यन्तशून्यम् ,कालकृतजन्ममरणादिरहितम् सर्वव्यापकं नमस्ये। सर्वस्मादन्यंसत् स्वेषु परेषु च समपक्षपातेन चरन्तं त्वां नमस्ये। ईश्वरे त्वयि सुखदुःखकरःदयालुः इत्यादि भेदाभिप्रायाः मनुष्याणां , निर्दयः ,समः विषमः , तद्विवादकारणः त्वं सर्वत्र समभावेन चरसि। ,सम्भवन्नपि

"निर्दोषं हि समं ब्रह्मे"ति वचनात् समत्वं भगवद्धर्मः। स च काले वर्तते। अत एव कालस्वरूपः त्वमिति मन्ये।

हे कृष्ण! साधारणमानवरूपेण स्थितेन त्वया क्रीयमाणं कार्यकलापादिकं यः कोऽपि न जानाति। तव यः कोऽपि प्रियः द्वेष्यो वा नास्ति। तेषां मनुष्याणां पुण्यपापादि कर्मानुसारमेव त्वं तेषु प्रवर्तसे। न तु साधारण मानव इव उपकारिषुप्रियःअपकारिषु अप्रिय इति । तव , उपकारापकारादिकं कर्तुं कस्समर्थः?

लोके दुर्योधनादयः तव अप्रियाःपाण्डवाः इष्टा इति प्रवादो,ऽस्ति। अभिमन्यु , ?तव तेषु कीदृशो रागः ,पाण्डवैरनुभवित क्लेशादिदर्शनेन ,उपपाण्डवादीनां मरणेन त्वां द्विषत्सु कौरवादिषु त्वं उदासीन एवन विरोधितया प्रवर्तसे। अतः त्वयि रागद्वेषादि वहत ,ां नराणां बुद्धिः विषमा भवति। त्वं तु सर्वसमः।

हे कृष्ण! त्वमात्मस्थानीयः सर्वलोकस्य जन्मरहितस्य तव अनेकजन्मादिकं , कर्तृत्वरहितस्य तव कर्मादिकञ्च तत्सर्वमत्यद्भुतम्। त्वं स्वयं परमात्मा सन्नपि नकेवलं मत्स्यकूर्मवराहादि नी ,अपि च दुष्टनिग्रहार्थं ,नरजन्मचप्राणिनामनुकरणं करोषि। तथैववामनादि ऋषिजन्म ,रामादिमनुष्यजन्मादिकं च त्वया धृतम्। त्वया वराहादिरूपत्वं ,

तत्सदृशकर्माण्यपि सहजतया अनुकृतिति तदत्यन्ताश्चर्यम्। तादृशस्य तव यथार्थस्वरूपं को वेद इति कुन्त्याः अभिप्रायः।

अतः जन्मकर्माद्यजानतामपि भक्तानां भगवतः जन्मादि भावयित्वा सेवनमपि संसारापनोदहेतुः।

यशोदा श्रीकृष्णं नारायणं न जानाति। तथाऽपि कृष्णबालक्रीडा विलासदर्शनेन सा धन्याऽभूत्। तत्र लीलाविशेषं वर्णयति –

एकदा दधिभाण्डादिकं त्वया भज्यमानं विलोक्य त्वां यशोदा दाम्ना बद्धवती। ततस्त्वं बन्धनात् भीत इव नटनमकरोः। सर्वमपि वस्तुजातं भगवत् स्वरूपात् त्वत्त एव बिभेति।

"भीषोऽस्माद्वातः पवते"भीषो उदेति सूर्यः[1] , इति श्रुतिवचनमत्र प्रमाणम्। यस्मात् भयस्यापि भयहेतुः भगवान् सः प्राकृतबालक इव गोप्या पाशबद्ध इति गोपीगता भगवदनुग्रहविशेष एव तदानीं भगवतो बन्धन हेतुः।

तदा बन्धनसमये अश्रुकलिलाञ्जनसंभ्रमाक्षं तव मुखं अद्यापि मे स्मारं स्मारं विस्मयमुत्पादयति।

केचिद्भक्ताः भवन्तं सज्जनसमुद्धरणाय जातमाहुः। केचिच्चन्दनेन मलयस्य कीर्तिर्यथा वर्तते तथा युधिष्ठिरस्यैव कीर्तिः वर्धयितु यदुवंशे समुत्पन्नमाहुः। अपरे पुनः वसुदेवानुग्रहार्थं देवक्यां जातमाहुः। किन्त्वत्र तत्वं त्वं ब्रह्मणा प्रार्थितः भूभारावतरणाय जातः। अपि चाज्ञानेन त्वामजानतां भक्तानां ज्ञानरूपस्य निर्गुणस्य भवतः दुर्ज्ञेयत्वात् तेषामनुग्रहार्थं तैः "सुखोपस्यो भवामी"ति बुध्या अद्भुतकर्माणि कुर्वन् भवान् भुवमवततार।

एतादृशस्य तव गुणान् ये श्रुण्वन्तिते छिन्नभवबन्धाः त्वामेव ,स्तुवन्ति ,गायन्ति , एष्यन्ति।

इदानीं भगवतः द्वारका जिगमिषां निवारयितुं तमेवं प्रार्थयते –

वयं तेऽनुजीविनः। त्वत्तः अन्यं न जानीमः। एवं विधानस्मान् परित्यज्य गन्तुं कथं ते मतिर्जाता?

भवतस्सन्निधानेनैव वयं प्राप्तब्रह्मानन्दाः। इन्द्रियाणां भगवतः दर्शनं यथा असाध्यं तथैव अस्माभिरपि ते तत्वदर्शनमसाध्य एव। यतो परब्रह्मणस्ते नामरूपमित्यंशद्वयमेव अस्माभिर्ज्ञायते।

आत्मनः"अस्ति भाति प्रियं रूपं द्वितीयं ,आद्यत्रयं ब्रह्मरूपं ,नामचेत्यंशपञ्चकं , नेत्रगोचरम्।" तत्र परमात्मनैव सङ्कल्पमात्रेण जीवात्मना प्रविश्य नामरूपे धत्ते। दृश्यमाना

---

[1] तैत्तरीयोपनिषत्8- 2 -

सर्वाऽपि सृष्टिः नामरूपे धत्ते। अत" - सर्वमिदं जगत् परमात्मरूपमेव। तथा च श्रुतिः - अनेन जीवेन आत्मना प्रविश्य नामरूपे व्याकरवाणि[1]" इति।

एवं भवतैव कल्पितनामरूपाः तवैव विवर्तस्य सूक्ष्मांशाः (मतान्तरे परिणतेः) तव महिमावर्णने कियन्त इति स्वदैन्यप्रकटनोक्तिः। इयं स्तुतिः प्रपत्तिरूपेण ,परमाणवः सर्वोत्तमा भाति।

हे कृष्ण! भवतस्सर्वथा अहमेवं वृणे। यत् स्वीयेषु च मोहपाशं छिन्धि। यतः पाण्डवाः मे भर्त्रुवंशाः। वृष्णयः पितृवंश्याः। एषु अन्यतरस्मिन् अनुरागवृद्धौ पुनर्भवः। अतः पुनर्भवाभावाय त्वामेवं याचे।

ततः भगवतो नामसङ्कीर्तनं करोति –

पूर्वं संसारबन्धच्छेदनाय भगवत्प्रार्थना कृता। तत्कारणं नामस्मरणं करोति। नामस्मरणं तु कलियुगे मुक्तिहेतुः। आसन्ने कलियुगारम्भे तदानीमपि नामसङ्कीर्तनं मुक्तिहेतुरित्युपपन्नम्।

तथा चोक्तं विष्णुपुराणे –

"ध्यायन् कृतेयजन् यज्ञैः त्रेतायां द्वापरे ,ऽर्चयन्।

यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम्[2]।1

एवमेकाग्रचित्तस्सन् संस्मरन् मधुसूदनम्।

जन्ममृत्युजराग्राहं संसाराब्धिं तरिष्यति[3]।।"

नमस्कारमहिमा श्रीमहाभारते एवमभिवर्णिता –

"एकोऽपि कृष्णस्य कृतप्रणामः

दशाश्वमेधावभृथेन तुल्यः।

दशाश्वमेधी पुनरेति जन्म,

कृष्णप्रणामी न पुनर्भवाय[4]।।"

---

1 छान्दोग्योपनिषत् 2 - 3 - 6 -

2 विष्णुपुराणम् 17 - 2 -6 -

3 पूर्वत्र 41 -6 - 2 -

4 महाभारतम्91- 47 - -शान्तिपर्वं -

ततः नामसङ्कीर्तनपूर्वकं सर्वभयापहं नमस्कारं करोति – श्रीकृष्ण कृष्णसख .इति ...

एवं स्तुतवतीं समुत्पन्नवासुदेवस्वरूपज्ञानवती कुन्तीं भगवान् मोक्षेणानुजग्राह। तथा च महाभारते आश्रमवासपर्वणि वनदाहेन दग्धा कुन्ती भवबन्धान् छित्वा वासुदेवे एव -– प्रविष्टवती। उक्तञ्चात्रैव श्रीशुकेन दशमस्कन्धे

"हरिर्हि निर्गुणस्साक्षात् पुरुषः प्रकृतेः परः।

स सर्वदृक् उपद्रष्टा तं भजन् निर्गुणोभवेत्[1]।।"

अत्र कुन्ती भवभयार्ता। ज्ञानवती च। "स्त्रियः त्वां न जानन्तीति कुन्त्याः विनयोक्तिः। तावता तस्याः ज्ञानित्वं न विहन्यते।

अत्र भगवद्रतिस्थायिकः भक्तिः रसः। भगवानालम्बनम्। भगवत्कृताः चेष्टाः तत्स्मरणञ्च उद्दीपनविभावाः। "गोप्याददे इत्यादिषु उद्दीपनविभावा एव प्रतिपादिताः। ... तत्तद्वाक्यैः प्रकटीकृताः हर्षामोदविस्मयनिर्वेदादयस्सञ्चारिणः इति सम्पूर्णतया भक्तिरसः परिपोषितः।

[1] श्रीमद्भागवतम् -X5-88-

**नलकूबरमणिग्रीवौ[1]***

यशोदया उलूखले बद्धः भगवान् श्रीकृष्णः नन्दगृहारामे स्थितयोर्यमलार्जुनवृक्षयोर्मध्यं उलूखलमाकर्षन् जगाम। ततः उलूखलेन विपाटितं अर्जुनवृक्षयुग्मम् भूमौ पपात। तद्वृक्षद्वयात् शापमुक्तौ गुह्यकौ बहिरागत्य सकृतज्ञं भगवन्तमकीर्तयताम्। -

नलकूबरमणिग्रीवावेतौ कुबेरस्यपुत्रौ। यौवनमदोन्मत्तौ एतौ कैलासोपवने कदाचिद्विहरन्तौ आस्ताम्। तदानीं नारदः तत्राजगाम। तौ नारदमनादृत्य पर्यभवताम्। कुपितेन नारदेन "स्थावर जन्म प्राप्यताम्" इति शप्तौ[2]। भगवत्प्रसादेन शापात्मुक्तौ तौ भगवन्तं तुष्टुवतुः –

!हे कृष्ण* त्वमाद्यः परः पुरुषः। सृष्टेः प्रधानकारणभूतः परमपुरुषः न तु प्राकृतबालमात्रम्। यतः त्वत्तः इमानि भूतानि जायन्तेतानि प्रत्यक्षदृष्टानीति त्वं व्यक्तं परं ब्रह्म। ,

कृष्ण कृष्णेति सम्भ्रमे प्रेम्णि वा वीप्सायां द्वित्वम्। योगश्चित्तवृत्ति निरोधः। प्रशस्तः योगः अस्यास्तीति योगी। महान् चासौ योगी च । कृष्णस्य 'योगेश्वरः इति लोकप्रसिद्धव्यवहारः कविता अनुकृतः। यद्वा भाविनं गीतोपदेशं दिव्ययोगित्वात् ज्ञात्वा लोकः एवं व्यवहरिष्यतीतिबाले ,ऽप्येवं व्यवहारः युक्ततमः। योगेश्वरः इति कृष्ण व्यवहारः महाभारते एव प्रसिद्धः।

"यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।

तत्र श्रीर्विजयो भूति र्ध्रुवानीति मतिर्मम[3]।।"

त्वमेव समस्त प्राणिनाम् देहान्तर्गतः। त्वमेव इन्द्रियाणां नियन्ता। यतस्त्वत्सङ्कल्पेनैव * ,तिष्ठन्ति ,देहिनो मनः कर्मणि प्रवर्तते। त्वमेव कालस्वरूपः। यतः कालेनैव जन्तवः उत्पद्यन्ते विलीयन्ते च। अतः कालशब्दः सृष्टिस्थितिलयकारत्वं भगवतो सुचयति।

स्तोत्रेऽस्मिन् विद्यमानानि सर्वाण्यपि विशेषणानि भगवतः श्रीकृष्णस्य परब्रह्मत्वं निरूपयन्ति। यतश्च त्वमाद्यः पुरुष इति ताभ्यामेव यत्सूत्ररूपेणैवोक्तम् तस्यैव वचसःअनन्तरोक्तानि वचांसि भाष्यभूतानि। तत्र विश्वादयश्शब्दाः विष्णोरेव विख्यातेषु ,

---

[1] X पर्यन्तम् 39 प्रभृति 30 - 10 -

[2] " यदिमौ लोकपालस्य पुत्रौ भूत्वा तमः प्लुतौ। न विवाससमात्मानं विजानीतस्सुदुर्मदौ।।
अतोऽर्हतस्स्थावरपतां स्यातां नैव यथापुनः। स्मृतिस्स्यात् मत्प्रसादेनतत्रापि मदनुग्रहात्।। ,
वासुदेवस्य सान्निध्यं लब्ध्वा दिव्यशाय्च्छते। वृते स्वर्लोकतां भूयो लब्ध्वा भक्तौ भविष्यतः।।
श्रीमद्भागवतम् -X23 - प्रभृति 21- 10 -

[3] महाभारतम् - भीष्मपर्वः 1- 43 -

गौणेषु वा नामसु महर्षिभिः कीर्तिताः। तत्र नाम्नां पुनरुक्तत्वेऽपि वृत्तिभेदेन अर्थभेदात् न पौनरुक्त्यप्रयुक्तो दोषः। विश्वं नारायणस्वरूपमेव। उक्तञ्च विष्णुपुराणे –

"ज्योतींषि विष्णुर्भुवनानि विष्णुः

वनानि विष्णुर्गिरयो दिशश्च।

नद्यस्स्मुद्रश्च स एव सर्वं

यदस्ति यन्नास्ति च विप्रवर्य[1]।।"

इदञ्च भगवतः व्यक्तम् विश्वस्यरूपम्। अव्यक्तं विश्वं तु –

"भूतात्मा चेन्द्रियात्मा च त्वमेकः पञ्चधास्थितः[2]।"

भगवद्गीतासु उपनिषत्स्वपि –

"आदित्यानां विष्णुरहम्[3]" इत्यारभ्य

अथवा बहुनैतेन किं ज्ञातेन तवाजुन।

विष्टभ्याहमिदं कृत्स्नंएकांशेन स्थितो जगत्[4] ,।"

इति स्वयं भगवता आत्मनः विश्वरूपत्वमुक्तम्। अत्र विश्वमिति 'विश्वकारण' मित्यत्र लाक्षणिकम् कार्यकारणयो रभेदः। आयुर्घुतमितिवत्। भगवतो विष्णुरिति व्यवहार एव तस्य विश्वत्व निरूपकम्।

"वेवेष्टि व्याप्नोति विष्णुः" विषेर्व्याप्यभिधायिनो नुक् प्रत्ययान्तस्य रूपं विष्णुरिति। देशकालवस्तुपरिच्छेदशून्य इत्यर्थः।

"व्याप्ते मे रोदसी पार्थ

क्रान्तिश्चाभ्यधिका स्थिता।

क्रमणाच्चाप्यहं पार्थ

विष्णुरित्यभिसंज्ञितः[5]।"

"यच्च किञ्चित् जगत्सर्वं दृश्यते श्रूयतेऽपि वा

---

[1] विष्णुपुराणम् 38- 12 - 2 -

[2] पूर्वत्र50- 18 -5 -

[3] भगवद्गीता -X21 -

[4] पूर्वत्र -X42 -

[5] महाभारतम् शान्तिपर्वम् 43 - 42 - 341 -

अन्तर्बहिच्च तत्सर्वं व्याप्य नारायणस्स्थितः[1]।।" इति हि श्रुतिः।

विशते र्वा नुक् प्रत्ययान्तस्य रूपं विष्णुरिति।

"यस्माद्विष्टमिदं सर्वं तस्य शक्त्या महात्मनः।,

तस्मादेवोच्यते विष्णुः विशेर्धातोः प्रवेशनात्[2]।।"

कलयति सर्वमिति कालः। "कालः कलयतामह"मिति[3] इति भगवद्गीता वचनात् अव्ययः वृद्धिक्षयादिरहितः। न व्येति नास्य व्ययः विनाशःविकारो वा विद्यते इति अव्ययः।,

"अजरः अमरोऽव्ययः[4]– " इति श्रुतेः।

ईशते इति ईश्वरः। सर्वशक्तिमानित्यर्थः। 'ईश 'ऐश्वर्ये - इति धातोः "स्थेशभासपिसकसो वरच्[5]" इति वरच् प्रत्यये ईश्वरः इति ।

सर्वाण्येतानि विशेषणानि लोकविख्यातानिविष्णुसहस्रनामानि मनसि निधाय , गुह्यकाभ्यामुक्तानीति निश्चप्रचम् वचः। भीष्मोऽपि तत्काले विख्यातं नामसहस्रमेव युधिष्ठिरायोपदिदेश। यद्वा कवेरेवायमभिप्रायोऽस्तु। तथाऽपि महाभारतरचनानन्तरमेव भागवतरचनमिति विष्णुसहस्रनाम्नां ग्रहणे न किञ्चिदनौचित्यम्।

भगवतः प्रकृतिमयत्वंगुणत्रय स्वरूपत्वञ्च अक्रूरस्तोत्रे प्रतिपाद्यते।,

त्वं सिसृक्षया गुणान् गृह्णन्नपि गुणमयैः कार्यैः न गृह्यमाणो*ऽसि। कार्यञ्च इन्द्रियम्। गुणाः कारणानि। प्राकृतैरिन्द्रियैः रूपरसगन्धादि ज्ञानवद्भिः विकारैर्नानुमेयः। यतःइन्द्रियसृष्टेः प्रागेव स्वप्रकाशतया सिद्धं त्वां गुणसंवृतः इन्द्रियवान् पुरुषः विज्ञातुं कथं समर्थः?

एवं दिव्यैर्विशेषणैः भगवन्तं स्तुत्वा गुणातीतत्वात् अविज्ञेयं ज्ञात्वा केवलं प्रणमतः।

"यतो वाचो निवर्तन्ते[6] "इति खलु श्रुतिः।

प्रणामश्च शरणागतेर्मार्ग इति न तत्र ज्ञानावसरः। यत्र ज्ञानं न सिध्यति तत्रापि शरणागतिः भगवत्साधिका। तत्रापि केवलं सृष्टिकारणं भगवन्तं मत्वा नमतः।

---

[1] बृहन्नारायणोपनिषत् 2- 1 - 13 -

[2] विष्णुपुराणम् 45 - 1 - 3 -

[3] भगवद्गीता -X30 -

[4] विष्णुसहस्रनामशाङ्करभाष्यम् पृ 77 -

[5] अष्टाध्यायी 175 - 2 - 3 -

[6] तैत्तरीयोपनिषत्4 -2 -

अत एव "वेधसे" इति विशेषणं सङ्गच्छते। वेधाः – विधाता। पृषोदरादित्वात् साधुत्वम्। वेधाः इत्यपि कृष्णस्यैव नाम[1]।

?यस्य ते भगवतः अवताराः प्राणिनां मध्ये को वा ज्ञातुमर्हति* भगवान् अशरीरी। यस्य ते अवताराः अतुल्यातिशयैः समाभ्यधिकरहितैःदेहेष्वसङ्गतैः असम्भावितैः तैस्तैर्वीर्यैः , परमोत्कृष्टतया विज्ञायन्ते। ,ज्ञायन्ते

तादृशः अविज्ञातमहिमावतारः त्वम*् भवाय लोकोद्भवाय– विभवाय , कैवल्याय च – विगतः भवः) संसारः यस्मिन् सः विभवःकल्पसे। (

त्वमेव नित्यकल्याणनित्यमङ्गलस्वरूपः। रागद्वेषादिरहितः। तादृशाय शान्ताय ते * नमः।

नारदस्य शापो*ऽपि इदानीमावयोरनुग्रहायैव। यतस्ते दर्शनम् जातम्।

आवयोः*सर्वाणीन्द्रियाणि सदा युष्मत्सेवायां नियोजनीयानि। भवतैव तादृशी योजना अनुग्राह्या।

इन्द्रियाणि च कथमनुग्राह्यानि ?- इति ताभ्यामेवोच्यते – वाक् भगवद्गुणकथने , चक्षुः ,शिरः भगवत्प्रणामे ,मनः भगवत्स्मृतौ ,हस्तौ भगवत्सेवने ,श्रवणं भगवद्गुणश्रवणे च ,भगवद्दर्शनेसदा नियुज्य आवयोरनुग्रहः करणीयः।

एषा चोक्तिः रजोगुणदूषितयोः तद्दोष परिहाराय। नारदसङ्कल्पः इदानीं सिद्ध इति तयोः भगवदनुग्रहः कृतः। देवर्षेस्सङ्कल्पस्तु –

"साधूनां समचित्तानां मुकुन्दचरणैषिणाम्।

दर्शनान्तो भवेद्बन्धः पुंसोऽक्ष्णोस्सवितुर्यथा।

तदहं मत्तयोर्माध्व्या वारुण्या श्रीमदान्धयोः।

तमोमदं हनिष्यामि स्त्रैणयोरजितात्मनोः[2]।।"

ऋषेस्सङ्कल्पस्य इदानीं भगवद्वचनमनुकूलम्।–

"ज्ञातं मया पुरैवेतदृषिणा करुणात्मना।

यच्छ्रीमदान्धयोर्वाग्भिर्विभ्रंशोऽनुग्रहः कृतः।

साधूनां समचित्तानां सुतरां मत्कृतात्मनाम्।

---

[1] विष्णुसहस्रनामशाङ्करभाष्यम् पृ 180 -

[2] श्रीमद्भागवतम् -X18,20 - 10 -

दर्शनान्तो भवेद्बन्धः पुंसोऽक्ष्णोस्सवितुर्यथा[1]।।"

नारदेन मनसि यदुद्धिष्टम् तच्च यथायथं भगवता अनूदितमिति सर्वमनुकूलम्।

अत्र प्रथमश्लोकत्रयं दिव्यस्तोत्रम्। ततः महिमा वर्णनेन कर्मस्तोत्रम्। भगवद्दर्शनञ्च उद्दीपनम्। प्रणामादयोऽनुभावाः। "दर्शनं नो भगवतः ऋषेरासीदनुग्रहात्" इत्यनेन हर्षः, "आत्मद्योत्य गुणैच्छन्नमहिम्ने"ब्रह्मणे नमः , इति स्मृतिः" ,स भवान् सर्वलोकस्य भवाय, "विभवाय च इत्यादिना मतिश्च सञ्चारी अभिव्यक्तिः। एवं भक्तिरसपरिपुष्टिः कृता।

[1] श्रीमद्भागवतम् -X41,42 - 10 -

**कालियः**–[1]*

जनार्दनेन अर्दितः कालियः मृतप्रायो बभूव। भगवतस्ताण्डवेन श्लथगात्रो बभूव। "सर्वधर्मान् परित्यज्य "... भगवतैवोक्तदिशा अन्यथा शरणं नास्तीति भगवन्तमेव मनसा शरणं जगाम। सर्वप्राणिमनोगतवेत्ता भगवानपि तस्य रक्षणे कृतनिश्चयः स्यादेव। यतः कालियावस्थां दृष्ट्वा विह्वलाः तस्य पत्यः नागताः तावदेवायं विगतासुस्स्यात्। अतः मनसा स्मरणेनैव भगवान् मां ररक्षेति कृतज्ञः कालियः भगवन्तं तुष्टाव –

!भगवन्* वयं प्रकृत्या दुर्वृत्ताः। तमोगुणप्रधानाः। चिरस्थायिक्रोधाः। स्वभावस्य दुरतिक्रमत्वात् एतावत्पर्यन्तं मया अपराद्धम्।

इदा*नीं सर्वकारणभूतेन त्वया मे तमोगुणः प्रशमितः।

तमोयोनिजाः वयं सत्वगुणप्रधानैः मुनिभिर्ज्ञेयं तव तत्वं कथं जानीमहे। अनुग्रहं * निग्रहं वा यदस्मासु विधेयम् तत् त्वमेव विचिन्त्य विधेहि।

नागपत्नीनांप्राप्तासोः कालियस्य ,पत्यः प्राणार्थिनीनां स्तोत्रं द्राधीयः , लघीयः स्तोत्रमिति महच्चित्रमिव दृश्यते। किन्तु दैर्घ्याभावे नागस्य ग्लानिरेव कारणम्। तथाऽपि भगवान् सन्तुष्टः।

अत्रापि नारायणरूपेणज्ञातः भगवानालम्बनम्। स्वप्राणदानमुद्दीपनम्। मूर्छा , " भग्नशिरस्त्वादयः अनुभावाः।कृच्छ्रात् समुच्छ्वसन् दीनः" इत्यत्र ग्लानिः ्प्राणलाभात ,दैन्यं , " धृतिश्चप्रकृत्या वयं खलाः" इति स्मृतिः" ,भवान् हि कारणं" इति मतिश्च सञ्चारिणः। एवं अत्र भक्तिरसः परिपुष्टः।

[1] X पर्यन्तम् 59 - प्रभृति 56 - 16 -

**सुरभिः –[1]***

गोवर्धनोद्धरणसमये इन्द्रेण साकं कृष्णसमीपमागता सुरभिः सकृतज्ञं कृष्णमेवं तुष्टाव – सुरभिः कृष्णकृतं गोरक्षणमभिनन्दति – इन्द्रप्रेषितेनासारेण हताः अस्माकं गोसन्ततिः लोकनाथेन त्वया रक्षिता। अतो वयं सनाथा जाताः। त्वमेव सर्वश्रेष्ठं दैवतम्। त्वमेव लोके परमैश्वर्यसम्पन्नः। गोब्राह्मणदेवानां साधूनां त्वमेवरक्षकोऽसि। अतः त्वामेव रक्षकं वृणीमहे। भूमेः भारावतरणाय त्वं भूमावुत्पन्नः।

अत्रापि सुरभिगता भगवद्रतिस्स्थायी। भगवानालम्बनम्। गोगणरक्षणादिकमुद्दीपनम्। अभिवन्द्य इति पदोक्तः नमस्कारः अनुभावः। ..."लोकनाथेन भवता वयं सनाथा" इति धृतिःअवतीर्णो ,ऽसि विस्वात्मन्भूमेः भारापनुत्तये इत्यत्र , स्मृतिश्च सञ्चारिणौ इति भक्तिरससामग्री।

भगवन्महिमा वर्णनस्यात्र प्रकाशमानत्वाद्दिव्यस्तोत्रम्।

---

[1] X पर्यन्तम् 21 प्रभृति 19- 27 -

**सुदर्शनः** –[1]*

भगवतः नन्दगोकुलनिवासकाले एकदा गेपालानां देवयात्राकौतुकः अभूत्। ततस्ते नन्दादयः अम्बिकावनं प्रययुः। सरस्वतीतीरे ते व्रतमास्थिताः एकां रजनीमूषुः। तस्मिन्नेव काले अतिबुभुक्षितः एकः सर्पः शयानं नन्दमग्रसत्। सर्पग्रस्तः नन्दः कृष्णकृष्णेति चुक्रोश। यदुभिर्बहुधा हन्यमानोऽपि स सर्पः नन्दं न मुमोच। तदानीं भगवान् तमभ्युपेत्य पदा अस्पृशत्। भगवतस्स्पर्शमात्रेण स सर्पः स्वरूपं हित्वा विद्याधरो बभूव। प्रणतं तं को वा भवानिति भगवान् प्रप्रच्छ। तदानीं स विद्याधरः एवं जगाद –

अहं सुदर्शनो नाम विद्याधरः। अङ्गिरसः ऋषीन् रूपदर्पितःअवमत्य तैश्शप्तः एवं सर्पः अभवम्। सोऽपि शापः इदानीं तव दर्शने हेतुर्भूत्वा अनुग्रहायैव बभूव। यथा लोकगुरुणा तव पादेन स्पृष्टः अपगतपापः अहमभूवम्।

एवं शापविमोचनेन कृतज्ञत्वदर्शनात् कृतज्ञतापूर्वका स्तुतिरियम्।

हे कृष्ण! संसारभीतानां शरणंगतानां भयापवारकं त्वामहं शरणं गतोऽस्मि। हे दुःखनाशक! तव पादस्पर्शात् अहं शापनिर्मुक्तः। भवन्तमहं शरणं प्रपन्नः। स्वलोकं गन्तुं मामनुजानीहि।

तव नामकीर्तनं कुर्वतां शृण्वताञ्च सर्वान् पापानपनुदति। नामस्मणादेव लोकान् पुनासि। किं पुनः भवता पदा स्पृष्टोऽहम् न पूतः?

अत्र शापोऽपि अनुग्रहायैवेति दोषे गुणदर्शनात् लेशालङ्कारः[2]। तेनैव शापेन भगवतः दर्शनं प्राप्तमिति वस्तुध्वनिः। अत्र भगवानालम्बनम्। पादताडनप्राप्तिःशापविमोचनञ्च , दर्शनात् ब्रह्मदण्डाद्विमुक्त ,महायोगिन्निति मतिः ,उद्दीपनविभावः। शापः अनुग्रह एवेति हर्षः भक्तिः रसश्च। ,इति स्मृतिः सञ्चारिणः। एभिर्भावैर्व्यज्यमाना भगवति रतिः स्थायी

---

[1] X पर्यन्तम् 18 प्रभृति 13 - 34 -

[2] लेशस्स्यात् दोषगुणयोः गुणदोषत्वकल्पनम्। कुवलयानन्दम् पृ 229 -

**राजानः**–[1]*

राजसूयं द्रष्टुं इन्द्रप्रस्थं गतः श्रीकृष्णः जरासन्धभयनिर्मूलनार्थं तद्बद्धैः राजभिः कृतां विज्ञापनां मनसि निधाय दिग्विजयप्रसङ्गे भीमं गिरिव्रजं नीत्वा भीमेन जरासन्धं घातितवान्। ततः जरासन्ध विनिर्मुक्ताः राजानः कृष्णं सकृतज्ञं तुष्टुवुः।

प्रथमं जरासन्धवधात् पूर्वं राजभिः कृतस्तोत्रे "प्रपन्नभयभञ्जन "इति तैर्यदुक्तं तदिदानीं सिद्धम्। अत एव पुरनस्तदेव वदन्ति " -प्रपन्नार्तिहरे"ति

संसारभयाद्विषीदन्तः अस्मान् भवबन्धेभ्यः त्राहीति पूर्वस्या एव प्रार्थनायाः भङ्ग्यन्तरम्।

इदानीं स्वकृच्छ्रेष्वपि दोषरूपेषु गुणवत्तां निरूपयन्ति। येन जरासन्धबन्धनेन वयं बद्धाः। सोऽपि बन्धाः राज्यच्युतिकारकोऽपि युष्मदनुग्रहहेतुत्वात् गुण एव[2]। अत - जरासन्धाय न कुप्यामः। एष बन्धोऽपि भवदनुग्रहकृपा एव। यतः –

"मदनुगृहीतानां भक्तानां सम्पत्तिं हरिष्यामि– [3]" इति तव प्रतिज्ञा। तादृशं सम्पदपहरणं अस्मासु सिद्धमिति अनुग्रहोऽपि तव अस्मासु सिद्ध एव।

राज्यच्युतेः गुणत्वकल्पने हेतुं दर्शयन्ति। ऐश्वर्यमदायत्तः पापमाचरति। ततः श्रेयः न - प्राप्नोति। भगवन्मायामोहिताः चलाः सम्पदः स्थिरा मन्यन्ते। अतस्तेषां दुर्गतिरपि निश्चिता।

ऐश्वर्यमदेन प्राप्ता दुश्शीलता महाभारते वर्णिता[4]–

भवतैव मायया परिगृहीताः प्राणिनः मरीचिकासु जलबुद्धिं कुर्वत इव विषयसुखान् भोक्तुमिच्छन्ति।

वयमप्येवमेव लक्ष्मीमदेन लुप्तविवेकाः परस्परकलहेन वृथा कालं यापयन्तः मृत्युमगणयित्वा दुर्मदाः अचराम।

भवदनुग्रहेण किञ्चित्कालं श्रियावियुक्ता अपि अपगतकल्मषाः तव चरणौ शरणं प्रपन्नाः।

---

[1] X पर्यन्तम् 134 प्रभृति 8 - 73 -

[2] लेशालङ्कारः - कुवलयानन्दम् " - पृष्टम् 229 -लेशस्स्यद्दोषगुणयोःगुणदोषत्वकल्पनम्" इति लक्षणम्।

[3] " यस्याहमनुगृहणामि हरिष्ये तद्धनं शनैः" श्रीमद्भागवतम् -X8- 88 -

[4] अभिजातोऽस्मि स्निग्धोऽस्मि नास्मि केवलमानुषः। इत्येवं कारणैस्तस्यत्रिभिश्चित्तं प्रसित्यते।। ,
स प्रसिक्तमना भोगान् विसृज्य पितृसञ्चितान्। परिक्षीणः परस्वाना मादानं साधुमन्यते।।
महाभारतम् - शान्तिपर्वः।

इदानीं प्राप्तराज्या अपि ज्ञातधनतत्वाः भवच्चरणावेव स्मरन्तः क्रियाफलं सर्वं त्वदर्पणं कुर्मः।

एवं प्रविष्टसंसाराणामप्यस्माकं यथा ते चरणारविन्दयोः विस्मृतिर्न भवेत् तथा वयमनुग्राह्याः। एषैव प्रार्थना सर्वधा सर्वदा भक्तैः कार्या।

पुनः नामसङ्कीर्तनेन स्तुवन्ति – कृष्णायवासुदेवायेति। एतेषां कृष्णशब्दस्य निर्वचनं , पूर्वं व्याख्यातम्।

वसुदेवस्यापत्यं पुमान् वासुदेवः श्रीकृष्णः। वासुदेवशब्दस्य नारायणपरतया विग्रहस्तु - "वसन्ति जगन्त्यस्मिन्निति वासुः[1]। अथवा वसतिवासयति आच्छादयति सर्वमिति वा वासुः। दीव्यति – क्रीडतिमोदते स्वलीलया इति देवः। ,प्रकाशते ,विजिगीषते , वासुश्चासौ देवश्च वासुदेवः।

अत्र भगवदालम्बनः भगवद्रतिस्थायिकः भक्तिः रसः। जरासन्धात् भगवता राज्ञां बन्धमोक्षणं उद्दीपनविभावः। "श्रीवत्साङ्कचतुर्बाहुं इत्यारभ्य स्तोत्रारम्भपर्यन्तं ... पञ्चसुश्लोकेषु भगवतः स्वरूपदर्शनम् विस्मयोत्पादकम्। स एव विस्मयः स्तोत्रेप्यनुस्यूतः। "नमस्ते देव देवेश "... इति प्रतिपादितो नमस्कारो अनुभावः। "प्रपन्नान् नः पाही"ति दैन्यम्। "राज्यैश्वर्यमदोन्नद्धः" इत्यादिषु मतिः स्मृतिश्च" ,पुरा इतरेतरस्पृहः" अभूमेति राज्ञामेव निर्वेदः सञ्चारिणः। एवं आत्मनिन्दाऽपि यद्यपि दैन्यद्योतिका तथाऽपि भक्तिरसं पुष्णात्येव।

******************************

[1] विष्णुसहस्रनामशाङ्करभाष्यम् पृ 141 -

## पञ्चमोऽध्यायः

## वैरभक्तिस्तुतिप्रकरणम्

### शिशुपालः*[1]

श्रीमद्भागवते नवविधसात्विक भक्तीः अतिरिच्य वैरभक्तिः भगवत्प्राप्तिसाधनत्वेनोपवर्णिता। तत्र भक्तिशब्दस्थाने अनुबन्धशब्दः महर्षिणा प्रयुक्तः। न केवलं भक्त्या किन्तु येनकेनाप्युपायेन भगवान् सेव्य इति पुराणेषु प्रतिपादितम्।

"स्मर्तव्यः सततं विष्णुः विस्मर्तव्यो न जातुचित्।

सर्वे विधिनिषेधास्स्युः एतयोरेव किङ्कराः।।इति पद्मपुराणे[2] - "।

श्रीमहाभागवतेऽपि –

"तस्मात् वैरानुबन्धेन निर्वैरेण भयेन वा।

स्नेहात्कामेन वा युञ्ज्यात् कथंचिन्नेक्षते पृथक्।।

यथा वैरानुबन्धेन मर्त्यः तन्मयतामियात्।

न तथा भक्तियोगेनत्विति मे निश्चिता मतिः।।[3]"

वीरस्येदं वैरम्। वैरेण भक्तिः वैरभक्तिः। वीरधर्मानुष्ठानेन भगवत्सेवा इति वैरभक्तिशब्दार्थः फलति। वैरभक्तेः मूलभूता कथा श्रीमद्भागवतेसप्तमस्कन्धे च विद्यते। ,तृतीयस्कन्धे ,

कथाभागस्यायं सङ्क्षेपः –

विष्णुपार्षदौ जयविजयौ भगवद्दर्शनमिच्छतः सनकसनन्दनादीन् निवारयामासतुः। ततः क्रुद्धैस्तैः शप्तौवैकुण्ठात् भ्रष्टौ तमोप्रधाने जन्मनी आपतुः। तयोः निरपराधितां , ज्ञात्वाऽपि भगवान् "शापः वैरेण जन्मत्रयावधिक एव भविष्यती"ति शापविमोचनप्रकारमकथयत्। तस्मिन्नेव समये तौ मुनीनेवं प्रार्थयामासतुः –

"भूयादघोनि भगवद्भिरकारि दण्डो,

योऽसौ हरते सुरहेलनमप्यशेषम्।

---

[1] X 31-74 - प्रभृति पर्यन्तम् 37

[2] भक्तिरसामृतसिन्धुः पृ 17 -

[3] श्रीमद्भागवतम् -VII 27,28 -1 -

मा वो नु तापकलया भगवत्स्मृतिघ्नो,

मोहो भवेदपि तु नौ व्रजतोरधोऽधः[1]।।"

भगवानपि मुनीन् सान्त्वयित्वा तौ तथेत्यनुजग्राह। तत्र शापोऽपि भगवन्निर्मित एवेति श्रीधरोक्ति प्रागेव विहिता[2]।–

एवमेव सप्तमस्कन्धे राजसूयानन्तरं चैद्यं भगवति विलीनं दृष्ट्वा विस्मितः युधिष्ठिरः नारदं तस्य सिद्धेः कारणमपृच्छत्। तदानीं नारदः प्रागुक्तसरण्या युधिष्ठिरं बोधयामास। एतत्कथाऽनुकूला इव भगवतोऽनुग्रहप्रवृत्तिः हिरण्याक्षादि वधे दृश्यते। हिरण्याक्षरावणादिवधे ततः तेजोनिर्गत्य भगवति प्रविवेशेति न वर्णितम्। तेजसो लयः पुरनर्भवाभावं सूचयति। अतस्तद्वर्णनं तृतीयस्यैव जन्मनः अवसाने कृतम्। शिशुपालदन्तवक्त्रयोरेव वधे एवमुपवर्णितम्। भगवानपि निरन्तरान्वेषिणः भक्तान् तदन्वेषणानुरूपफलदानेन अनुगृह्णातीति श्रीमद्भागवते एव निरूपितम् इत्थम् –

हिरण्याक्षः भगवन्तमन्विष्यन् वरुणलोकं गतः इदानीं वरुणः हिरण्याक्षमेवं बभाषे -

"पश्यामि नान्यं पुरुषं पुरातनात्

यस्संयुगे त्वां रणमार्गकोविदं

आराधयिष्यत्यसुरर्षभेहितम्

मनस्विनोऽयं गृणते भवादृशाः[3]।।" इति

अतो भगवान् भक्तानाराधयतीत्यत्र न काचिद्विप्रतिपत्तिः। अस्याश्च वैरभक्तेः युद्धवीरः प्रधानाङ्गभूतः। रौद्रस्तु वीररसाङ्गत्वेनाभासते। वीर भक्तानां स्वभावस्तु एवं प्रतिपादितमालङ्कारिकैः –

"परितोषाय कृष्णस्य दधत्युत्साहमाहवे,

सखा बन्धुविशेषो वा युद्धवीर इहोच्यते।।

प्रतियोद्धा मुकुन्दो वा तस्मिन् वा प्रेक्षकेस्थिते

तदीयेच्छावशेनात्र भवेदन्यः सुहृद्वरः[4]।।"

---

[1] श्रीमद्भादवतम् -III36 - 15 -

[2] उपोद्घातप्रकरणे - वैरभक्तिः पृ 154 -

[3] श्रीमद्भागवतम् 30 - 17 - 3 -

[4] श्री भक्तिरसामृतसिन्धुः - वीरभक्तिरसाख्या। 4,51 - 3 -

एतादृशानां युद्धवीरभक्तानां मनसि तेषां द्विषन्नारायणः परब्रह्मेति प्रत्ययो वर्तते। सप्तमस्कन्धे हिरण्यकशिपुः हिरण्याक्षवधप्रतीकारं चिकीर्षुः यज्ञध्वंसाय राक्षसानादिदेश। तत्र हरिः "यज्ञमयः[1]" इति स्तूयते।

रावणः रामं साक्षान्नारायणं जानाति। युद्धकाले रावणः स्वयमेवं वक्ति –

"तं मन्ये राघवं वीरं नारायणमनामयम्।

यस्य विक्रममासाद्य राक्षसा निधनं गताः[2]।।"

एतादृश ज्ञानवत्वादेव वैरभक्तानां युद्धे स्थिरनिश्चयः। यद्यपि रक्षांसि तमोगुणप्रधानानितथा ,ऽपि तमोगुणः अपि भगवत्स्वरूप एवेति तस्य अनवद्यत्वमेव। उक्तञ्च भागवते –

"सत्वं रजस्तम इति निर्गुणस्य गुणास्ततः

स्थितिसर्गनिरोधेषु गृहीतं मायया विभोः[3]।।"

अत एव असुरा अपि भागवता इति उद्धवोक्तिः सङ्गच्छते। कृष्णः तार्क्ष्यवाहनः दिव्यरूपेण स्वयं प्रत्यक्षीभूय राक्षसान् सुदर्शनचक्रेण हन्ति। तादृश दिव्यरूपदर्शनम् योगिनामप्यगम्यमेव।

"मन्येऽसुरान् भगवतांस्त्र्याधीशे

संरम्भमार्गाभिनिविष्टचित्तान्।

ये संयुगेऽचक्षत तार्क्ष्यपुत्र

मंसे सुनाभायुधमापतन्तम्[4]।।"

अतः कृष्णप्रतियोद्धरः सर्वे कृष्णभक्तिपरायणा एव। न केवलं शिशुपालवाक्येषु किन्त जरासन्ध वाक्येष्वपि निन्दां स्तुतिपरामेव श्रीधरः व्याचख्यौ।

"तावाह मागधो वीक्ष्य हे कृष्ण! पुरुषाधम।

गुप्तेन च त्वया मन्दबन्धुहन्[5] ,न योत्स्ये याहि ,।।"

---

[1] " विष्णुर्द्वजक्रियामूलो यज्ञ धर्ममयः पुमान्। देवर्षिपितृभूतानां धर्मस्य च परायणम्।।

श्रीमद्भागवतम् -VII – 2- 11

[2] श्रीमद्रामायणम् -VI – 72 -11

[3] श्रीमद्भागवतम् 18 - 5 - 2 -

[4] पूर्वत्र 24 -2 -3 -

[5] पूर्वत्र -X17 -5 -

अत्र पुरुषाधम शब्दः निन्दायां कर्मधारयः। शेषे षष्ठी वा। स्तुतौ बहुव्रीहिः। एवं 'गुप्त' शब्दोऽपि सर्वान्तर्यामित्वात् सामान्यैः दर्शनानर्ह इत्यर्थे व्याख्यातः।

न केवलं श्रीधरपण्डितेनअपि तु महाभारते सभापर्वणि राजसूययागसन्दर्भे , भारतभावदीपव्याख्यायां नीलकण्ठ ,शिशुपालोदाहृत निन्दावाक्यानि स्तुतिपराणीति पण्डितेनापि व्याख्यातम्[1]।

शिशुपालः श्रीकृष्णस्य पैतृष्वस्रेयःवसुदेवस्य कनीयस्याः भगिन्याः श्रुतश्रवसः . चेदिनाथात् दमघोषाज्जातः। श्रुतश्रवसः एव सात्वतीत्यपरं नाम। शिशुपालः जातमात्रः वपुषा " चतुर्भुजः त्रिलोचनश्चासीत्। तस्य जननकाले आकाशवाण्यायस्मिन् पुरुषे स्पृशतिअस्य , अधिकं ने ,शिशोः अधिके बाहूत्रं च निलीयन्ते"स एवास्य अन्तको भविता , इत्युक्तम्।

कृष्णोनाङ्कमारोपिते शिशुपाले तल्लोचनंहस्तद्वयञ्चान्तर्हितम्। स्वसुतस्यापराधाः , क्षन्तव्या इति पितृष्वस्रा प्रार्थितः कृष्णः शिशुपालस्य अपराधशतम् क्षन्तुं प्रतिशुश्राव।

राजसूये हरिनिन्दया तदागश्शतस्य समाप्तौ कृष्णः शिशुपालं जघान।

यागान्ते सदस्येषु कश्चित् सर्वोत्तमः अग्रपूजायाः सत्कार्यः। तादृशाग्रार्हणा कस्मै रचितव्येति युधिष्ठिरः संशये आस। तदानीं सहदेवः "भगवान् सात्वतां पतेः श्रेष्ठः अच्युत एव अग्रपूजायाः अर्हः। देशकालधनादयः सर्वा देवताश्च स एव– " इति जगाद। तथेति अङ्गीकृत्य युधिष्ठिरः तथाकर्तुं प्रचक्रमे। सहदेवोक्त कृष्णगुणानुवर्णनेन जातमन्युश्शिशुपालः कृष्णपूजां वारयन् भगवते परुषाणि संश्रावयन् निर्भीकः एवं जगाद –

अत्र यथाश्रुतार्थः एवं भूतः। सहदेवो बालः। बालानां वृद्धोपदेशश्शिरोधार्यः। परन्त्वत्र तद् व्यत्यस्तमभूत्। योग्यतामयोग्यतां जानन्तः सदस्याः बालभाषितम् न श्रुणुत। तपः परान् विद्यापरान् ज्ञानिनः ब्रह्मज्ञांश्चातिक्राम्य अयं कुलपांसनः गोपालः पूज्यते। काकः पुरोडाशं , तथा ,हविः यथा स्प्रष्टुं नार्हतिऽयं पूजां स्वीकर्तुं नार्हति।

अयञ्च वर्णाश्रमधर्मवर्जितः। स्वैरवर्ती। गुणैर्हीनः। ययातिना शप्तमस्य कुलं न राज्यार्हम्। समुद्रे वासःसमुद्रयानञ्च धर्मविद्भिः निषिद्धम्। तादृशसमुद्रे अनेन दुर्गसंश्रयः , कृतः। अतः कृष्णः पूजां नार्हतीति शिशुपालस्याभिप्रायः।

स्तुतिव्यक्तिस्तु एवं भूता –

ईशः कालश्च दुरत्यय इति यथाश्रुतार्हमेवार्थग्रहणम्। अतः मोक्षार्थं प्राप्तकालोऽहम् पूजां निरुन्धे। बालोऽपि सुभाषितं वक्तुमर्हति। वृद्धोऽपि तत् श्रोतुमर्हति इति। ज्ञानरूपिणः शिवस्य नित्ययौवनत्वं तच्छिष्याणां मुनीनाञ्च वार्धकं लोके प्रसिद्धमेव। ,

---

[1] महाभारतम् सभापर्व -

"चित्रं वटतरोर्मूले वृद्धाश्शिष्याः गुरुर्युवा।

गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः।।" इत्यादि प्रसिद्धम्।

'बालादपि सुभाषितम्' इत्यार्योक्तिः। तपोविद्याव्रतपरानतीत्य कृष्णो वर्तते, तैरप्यगम्यश्च।

"अस्यैव वास्तवोऽर्थः पूर्ववदुन्नेयः गोपः पृथिव्यादिपालक ,सदसत्पतीनिति ,इत्यर्थः। कुत्सितं वेदविपरीतं लम्पतीति कुलपाः पाषण्डाः तान् असते घातयतीति कुलपांसनः अकाकः कं च अकञ्च काके – सुखदुःखे ते न विद्यते यस्य सः अकाकः आप्तकाम इत्यर्थः। स यथा आप्तकामो देवयोग्यं केवलं पुरोडाशादिमात्रं नार्हतिअपि तु सर्वमपि। तथ ,ऽयं श्रीकृष्णोऽपि ब्रह्मर्षियोग्यं सपर्यामात्रं कथमर्हतिकिन्तु स्वात्म समर्पणमप्यर्हतीत्यर्थः। , "- वर्णाश्रमकुलेभ्यः अपेतः ब्रह्मत्वात्अनामगोत्रमिति" श्रुतेः। अत एव अनधिकारित्वात् सर्वैर्धर्मैर्बहिष्कृतःअत एव निर्गुणः गुणत्रयरहितः। एवं भूतो ,परमेश्वरत्वात् ,स्वैरवर्ती , जीवानां योग्यं तुच्छं सपर्यामात्रं कथमर्हतीत्यर्थः। ययातिनेति – अपि च कथं वर्णनीयो मादृशैरेषां यदूनां महिमा?यस्मादेषां कुलं ययातिना शप्तमपि किं सद्भिः बहिष्कृतम् , अपि तु शिरसा धृतम्। अस्मदादिकुलवत् वृथापानरतं किम्? अपि तु अतिनियताचारमित्यर्थः। अहो यदूनामेव तावदीदृशं माहात्म्यंयदुकुल वृद्धस्य ययातेः शापो न प्रादुर्भूयादित्यादि। , अयं तु साक्षादीश्वरः। अतः सपर्यामात्रं कथमर्हतीत्यर्थः।

किञ्च ब्रह्मर्षीति – ये राजानो दुष्टानुच्चारयन्तिते तदर्थं कीकटादि देशानप्याश्रयन्ति। , एते तु ब्रह्मर्षिसेविकानेव देशानाश्रित्य आब्रह्मवर्चसं समुद्रं दुर्गमपि हित्वा हापयित्वेत्यर्थः।

बाधन्ते तथा – याः दस्यवः प्रजास्ताश्च। अयमर्थः वेदतदर्थाभियोगो ब्रह्मवर्चसंसमुद्रं , मुद्रालिङ्गं तत्सहितं समुद्रं वेदविरुद्धलिङ्गधारिणं पाषण्डमित्यर्थः। तल्लिङ्गत्याजयित्वा बाधन्ते दण्डयन्ति। कथं भूतं दुर्गम्धर्मवत्प्रतीतेरधर्मतया दुर्ज्ञेयमित्यर्थः। तथा दस्यवः - दस्यूनपि प्रजावेषेण वर्तमानान् दण्डयति। अतो यदुभ्योऽन्यः को नाम धार्मिकोऽस्तीति पारुष्यं तत्वार्थमेव[1]।"

एवं निन्दाव्याजेन गृहीतस्तुतिः श्रीकृष्णः शिशुपालमनुग्रहीतुं मनश्चक्रे। अत्रान्तरे शिशुपालोऽपि युयुत्सुर्बभूव।

ततः भगवान् सुदर्शनं प्रयुयुजे। तेन हतश्चैद्यः भूमौ पपात। ततः –

"चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत्।

पश्यतां सर्वभूतानां उल्केव भुवि खाच्च्युता।।

---

[1] भावार्थदीपिका -X पर्यन्तम् 37 प्रभृति 34- 76 -

जन्मत्रयानुगुणित वैरसंरब्धया धिया।

ध्यायन्स्तन्मयतां नीतो भावो हि भवकारणम्[1]।।

एवं शिशुपालः वैरभक्त्या मोक्षं प्राप्तः। अत्र वैरभक्तेराश्रयः शिशुपालः। आलम्बनं भगवान् श्रीहरिः। युधिष्ठिरकृत भीष्मोपदिष्टराजसूये वरिवस्या उद्दीपनविभावः। (प्रशंसा) " सर्वेष्वपि श्लोकेषु प्रयुक्ता परुषोक्तिरनुभावः।ईशो दुरत्ययः कालः" इत्यादि वाक्ये। निर्वेदः व्यभिचारी। तथैव "सदसत्पतीनतिक्रम्य" इति कृष्णं प्रति असूया सञ्चारि भावः।

एवं विभावानुभावव्यभिचारि परिपुष्टः भक्तिरसशास्त्रसम्मतः वैरभक्तिरूपो रसः अत्राभिव्यक्तः

अत्रेयं शङ्का – कृष्णपूजाऽसहिष्णोः तदसहिष्णुतां च बहिर्वक्तुं समर्थस्य शिशुपालस्य वाक्येषु वीरोरसः ध्वन्यते इति वक्तुं शक्यते। यतः तत्रत्याः राजानस्सर्वे तादृशीं कृष्णपूजां प्रति न किञ्चिद्व्यतिरेकं वचः न ऊचुः। शिशुपाल एव तादृशसाहसिकः इति। अत्रैव सन्दर्भे अनुपदमेव भगवन्निन्दा सहिष्णुवः इतरे सभासदः सभायाः निश्चक्रमुरिति उपवर्णितः। अतः अन्येषु भयशङ्का न कार्या। शिशुपालस्यापि स्वकर्मणा चोदिता मतिरेवात्र कारणम्।

यद्यप्यत्र कृष्णं प्रति शिशुपालगतासूया मुख्यतया ध्वन्यत इति वाच्यम्तथा ,ऽपि प्रबन्ध व्यङ्ग्यतायां वैरभक्तिरसः अपरिहार्यः। श्रीधरादिभिः तथा व्याख्यानात्" ,भूयादघोनि".... इति तृतीयस्कन्धगत वाक्यसङ्गतेश्च।

---

[1] श्रीमद्भागवतम् -X47 ,46 - 74 -

## दन्तवक्त्रः–[1]*

दन्तवक्त्रः शिशुपालस्य मातृष्वस्रेयः। स च करूशाधिपतेः वृद्धकर्मणः पुत्रः। शिशुपालस्य परमं मित्रम्। कृष्णस्यायमपि पैतृष्वस्रीय एव। अयं दन्तवक्त्रः न केवलं शिशुपालस्य साल्वस्य ,पौन्ड्रकवासुदेवस्यापि सुहृत्। भागवतानुसारं पार्षयोरयं द्वितीयः। भगवतो जन्मत्रयविरोधे समनुप्रप्तोऽपि तयोः प्रतिजन्म सांसारिकबन्धं श्लथीभवति। यतः प्रथमे जन्मनि तौ यमौ। भ्रात्रोरपि यमजयोः स्नेहः दृढतरो भवति। हिरण्याक्षः कदाऽपि हिरण्यकशिपोः वचनं नातिचक्राम। द्वितीये जन्मनि तौ भ्रातरौ बभूवतुः। तयोः कुम्भकर्णः रावणाय हितमुपदिदेश। तृतीयस्मिन् जन्मनि तौ भगिन्यौः पुत्रौ अभूताम्। अतस्तयोरेकत्र वासोऽपि न सिद्धः। सौहार्दञ्च कालगतेदुर्निवारत्वात्शापनिमित्तत्वाञ्च सिद्धम्। ,

राजसूये शिशुपालं हतं श्रुत्वा शिशुपालवधाय प्रतीकारं चिकीर्षुः दन्तवक्त्रः गदां गृहीत्वा एक एव कृष्णं योद्धं आजगाम। ततः कृष्णं निन्दन् एवं जगाद –

अत्राऽयं वाच्यार्थः – मम भाग्यवशात् मत्समुखमागतोऽसि। त्वामिदानीं हत्वा बन्धूनामनृणो भवामि। त्वमस्माकं मित्रसदृशोऽपि न परमं मित्रम्। किन्तु शत्रुरसि। तत्र शत्रुत्वं कृत्रिमम्।

केचित् लोकसहजतया सम्बन्धेन मित्राणि शत्रवो वा भवन्ति। सम्बन्धेन मित्रं मातुलेयोऽपि कृष्णः चैद्यवधात् दन्तवक्त्रस्य कृत्रिमश्शत्रुः। मित्रत्वामित्रत्वयोः सहजत्वादपि कृत्रिमत्वमेव तयोः प्रमापकं भवति।

"सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्यतः।

स्याताममित्रौ मित्रे च सहजप्राकृतावपि[2]।।"

अतः अस्माकं मित्रघातित्वात् त्वं प्रबलः शत्रुरसि। वज्रसदृशया गदया त्वामिदानीमेव हनिष्ये। बन्धुच्छद्मानं अरिं त्वां हत्वा मित्राणामानृण्यमुपैमि" इति।

अत्रापि पूर्ववत् श्रीधरः स्तुतिमेव व्यक्तिविषयां व्याख्यातवान्[3]।

"मुकुन्दं प्राह दुर्मद इत्यादेः – अधिक्षेपपरता स्फुटैव। परमार्थस्तु दुर्मदः गतमदः प्राह।

---

[1] X पर्यन्तम् 64 आरभ्य 4 - 78 -

[2] माघकाव्यम् 36 - 2 -

[3] भावार्थदीपिका -Xपर्यन्तम् 6 प्रभृति 4 - 78 -

मुकुन्दं तृतीयजन्मनि मुक्तिदानार्थमागतम्। अद्येति – जन्मत्रयेणान्विष्यमाणः अद्य ब्रह्मशापावसाने भवान् मम स्वामी दृष्टिपथं गतः प्राप्तः। एतद्धिष्ट्यादिष्ट्या भद्रम्। अतिहर्षे वीप्सा।

किञ्च त्वमिति – हे कृष्ण! त्वमस्माकं मातुलेयो बन्धुः। एवमपि मित्रधुक् मित्राणि घातितवान्। माञ्च त्वं जिघांससि। तस्मादस्माकं त्वत्तो मृत्युः सनकाद्यनुग्रहप्राप्तो नूनं दुर्वारः।

अतस्त्वामेतावन्मात्रमहं याचे। किं तदिति -हे अमन्द !सर्वसहनसमर्थ - क्षात्रधर्मेणसेवितुं गदया त्वां हनिष्ये – प्रहरिष्यामि। तामेकवारं क्षमस्वेति। ननु वज्रतुल्यां त्वद्गदां को वा सहेत– नैवमित्याह , अवज्रकल्पया उत्पलमाला – वदति कोमलयेत्यर्थः। नन्वेवं हनने कस्तवपुरुषार्थः। तमाह – तर्हीति – अज्ञः न विद्यते ज्ञो यस्मात् तस्य सम्बुद्धिः। हे सर्वज्ञेत्यर्थः। परमार्थतः स्वामिनंएतद्देहसम्बन्धेन बन्धुरूपं ब्रह्मशापेन तु शत्रुत्वेन प्रतीतं , त्वां हत्वा मित्राणामानृण्यमुपैमि उपैष्यामि। विशेषेण अधीयते मनसि चिन्त्यते इति व्याधिः। देहे अन्तर्यामितया चरतीति तथा।तमीश्वरं हत्वा क्षात्रधर्मेण आराध्यहन्ते गत्यर्थस्य , ज्ञानार्थत्वात् ज्ञात्वेति वा। तेन यथा पित्रादीनां आनृण्यमुपयन्ति तद्वदिति।

शिशुपालवधेदन्तवक्त्रवधे च एवं स्तुतिपरा व्याख्या समञ्जसैव। द्वेषमात्रस्य सत्वे , भक्तेरभावे कैवल्यदानाभावात्। अपि च तृतीयस्कन्धे "भूयादधोनि "... इति पार्षदयोः प्रार्थनायाःभगवदनुमोदनस्य चानुपपत्तेः[1] ,। दन्तवक्त्रोऽपि व्याजस्तुत्या कृष्णं स्तुवन् तस्मात् कैवल्यं प्राप।

"गदयाभिहतोप्याजौ न चचाल यदूद्वहः।

कृष्णोऽपि तमहन् गुर्व्या कौमोदक्या स्तनान्तरे।।

ततस्सूक्ष्मतमं ज्योतिः कृष्णमाविशदद्भुतम्।

पश्यतां सर्वभूतानां यथा चैद्यपतेर्नृप[2]।।"

अत्र शिशुपालदन्तवक्त्रविषये उभयत्र वीर एव प्रधानो रसः। तयोरपि शिशुपालवाक्येषु वीरः स्फुटतरः। अनुपदमेव युद्धसन्नाहस्य कथनात्[3]।

दन्तवक्त्रस्य वाक्येषु वीरात् रौद्रस्य प्राधान्यं ध्वन्यते। "गुरुबन्धुवधादि परमापराधजन्मा मनः प्रज्वलनाख्यः क्रोधः[4]"। इति यद्यपि मनः प्रज्वलनवर्णनात् क्रोधस्यैव प्राधान्यंतथा ,ऽपि कृष्णहनने उत्साहवर्णनात् वीरस्यैव प्राधान्यम्। अस्तु वा रौद्रः। भक्तिः

---

[1] अतो यदुक्तं श्रीधरेण तत्साधु भावार्थदीपिका।---X पर्यन्तम् 6 प्रभृति 4 - 78 -

[2] श्रीमद्भागवतम् -X10 ,8 - 78 -

[3] पूर्वत्र -X43 - 74 -

[4] रसगङ्गाधरः - प्रतमाननम्

तत्र सर्वत्र अन्तस्सूत्रतया भासते। सैव गौण भक्तिरिति आलङ्कारिकैः वर्णिता[1]। इत्थं दन्तवक्त्रः वैरभक्त्या विष्णुं समासाद्य कैवल्यं प्राप।

अत्र वैरभक्तेराश्रयः दन्तवक्त्रः। आलम्बनं श्रीकृष्णः। क्रोधोद्भाषणादिनाऽभिव्यक्तः रौद्रः तस्या अङ्गम्। गदोद्यमन सत्वरत्वादयः अनुभावाः। "दिष्ट्यादिष्ट्या भवानत्र" इति वाक्येषु कृष्णंप्रत्यमर्षः। 'मां जिघांससि' इत्यत्र ईर्ष्या। मन्द इति सम्बुद्धेः गर्वः इत्यादयस्सञ्चारिणः।

---

[1] विस्तरस्तु भक्तिरसामृतसिन्धौ पश्चिमविभागे द्रष्टव्यः।

## षष्टोऽध्यायः

## मधुरभक्तिस्तुतिप्रकरणम्

### मधुरभक्तिः

श्रीकृष्णभक्तिसम्प्रदायेषु "वल्लभसम्प्रदाय" इति प्रसिद्धः मार्गः मधुरभक्तिरिति उदाहृतः। श्रीकृष्णचैतन्यप्रभुः मार्गस्यास्य निर्देशकः। उत्तरभारतदेशे प्रसिद्धोऽयं सम्प्रदायः विशेषतः वङ्गदेशीयैरादृतः। ते च प्रायशः गोपिकासु राधां मधुरभक्तेः नायिकां व्यपदिशन्ति। राधाशब्द नामनिर्देशेन न काऽपि गोपिका भागवते दृश्यते। किन्तु ब्रह्माण्डपुराणे , गर्गसंहितायां राधा प्रसिद्धा। ,देवीभागवते

काव्येषु प्रथमतः राधायाः नाम गीतगोविन्दकाव्ये जयदेवोदाहृतं दृश्यते। तदनु कृष्णकर्णामृते। अद्यापि मधुरभक्तिसम्प्रदायः राधामाधवचिन्तनमिति नाम्नाव्यपदिश्यते।

प्रकृते –

अत्र सम्प्रदाये श्रीकृष्णः पुरुषः गोपी प्रकृतिः। मायया मोहिता प्रकृतिः पुरुषं स्वयमुपसर्पति। प्रकृतिपुरुषयोस्समागमः चराचरसृष्टेः बीजम्। भक्तिरपि अस्यां भक्तौ स्वयं स्त्रियमितिअपि तु वल्लभः। कृष्णस्य ,परमात्मानं स्वभर्तारमिति मनुते। न केवलं भर्ता , ' सर्वत्रगोपिकावल्लभ' इति व्यवहारः प्रसिद्धः। शब्दशक्त्या वल्लभशब्दस्यायमर्थः - "वल्लते" ,[1]"वल्यते वा वल्लभः ,रासिवल्लिभ्यां च[2]" इति 'अभच्' प्रत्ययेसंवरणे इति -वल्ल , " धातोःवल्लभ[3]" इति।

गोविन्दः गोपीभिर्वृतः। ताश्च स्वयं वव्रे। उभयथाऽपि वल्लभशब्दः सार्थकः।

गोप्यः परस्त्रियः। श्रीकृष्णः धर्मरक्षणार्थं भुवमवतीर्णः। पारदारिकं कर्म अधर्म एव। तत्समाचरन् कृष्णः अधार्मिकः। एवमधर्मपरायणः लोके वचनीयस्स्यात्। निन्द्योऽपि न निन्द्यते ,स्वैरिण्यः इति न परिगण्यन्ते। तासां भक्तिः मार्गदर्शिकेति -प्रत्युत स्तूयते। गोप्य , उत्तमेति भक्ताग्रेसरैराद्रियते।

एष सनातनसम्प्रदायः? किमेष धर्मः? उत "गड्डुरिकाप्रवाहपतितोऽयं " लोकः – इति विचारणीयम् –

भागवतं श्रुण्वतः परीक्षितः अपि अयमेव सन्देहः –

---

[1] अमरकोशः ) 137 - 3 -रामाश्रय व्याख्या(

[2] उणादयः 125 - 3 -

[3] " अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्।।" अमरकोशः 53- 1 - 3 -

"कृष्णं विदुः परं कान्तं न तु ब्रह्मतया मुने।

गुणप्रवाहोपरमः तासां गुणधिया कथम्[1]।।

किन्तु परीक्षित्प्रश्ने गुणनिर्गुण विवेक एव प्रस्तुतः न तु धर्माधर्मविवेकः। अत्रेयं कथा श्रूयते – पुरा त्रेतायां रघुनन्दनः वनं प्रति जगाम। तत्रत्याः मुनयः रामस्यालौकिकं सौन्दर्यं दृष्ट्वा तेन सह सम्भोगं वव्रुः। तदानीं ते कामार्ताः। रामोऽपि भक्तवत्सलः प्रपन्नान् न तिरस्करोति। कामार्तानां तेषां कामोपशमः शरण्यः भवति। यतस्ते कामाद्भीताः। तदानीं सम्भोगस्याशक्यत्वात् "आगामिनि कृष्णावतारे यूयं गोप्यः भवत। अहं युष्मभ्यं संयोगं दास्यामी"ति रामः तेषां वरं ददौ। ते एव मुनयः अष्टाविंशति तमे द्वापरयुगे गोप्यः बभूवे'ति कथा श्रूयते।

श्रीमद्रामायणकथा चतुर्विंशतितमे त्रेतायुगे बभूवेति हिरवंशे हरिवंशपर्वणि उदाहृता।

एषैव कथा रूपगोस्वामिना स्वीये भक्तिरसामृतसिन्धौ निर्दिष्टा।

"पुरा महर्षयस्सर्वे दण्डकारण्यवासिनः।

दृष्टवा रामं हरिं तत्र भोक्तुमैच्छन् सुविग्रहम्[2]।।" इत्यादिना।

अतः भक्तरक्षणमेव भगवतो धर्मः। येन केनाप्युपायेन भगवत्सान्निध्यप्राप्तिरेव भक्तस्य लक्ष्यमित्युभयत्र न धर्मव्यतिक्रमः।

एतादृशधर्मव्यतिक्रमः क्वचिद्विद्यमानोऽपि महात्मनः निग्रहानुग्रहसमर्थत्वात् तपोविशेषवत्वाच्च न तेषां प्रत्यवायहेतुः। उक्तञ्च स्मृतिकारादिभिः महर्षिः –

"दृष्टो धर्मव्यतिक्रमः साहसञ्चमहताम्।

"अवरदौर्बल्यात्[3]"।

अत्र हरदत्तः –

"तेषां तेजोविशेषेण प्रत्यवायो न विद्यते।

तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरको जनः।।[4]" इति।

अत्रायं निश्चयः – भगवतस्सङ्कल्पः सर्वोऽपि धर्मः। लौकिकदृष्टेरधर्मोऽपि सर्वशक्तिमत्वात् न प्रत्यवायहेतुरिति।

---

[1] श्रीमद्भागवतम् -X12- 29 -

[2] भक्तिरसामृतसिन्धुः - पूर्वविभागः 301 -

[3] गौतमधर्मसूत्रम्3,4 -1 -

[4] गौतम धर्मसूत्रम् - मिताक्षरी व्याख्या 3 - 1 - 1 -

ब्रह्मा स्वयं गोपीनां भक्तिं श्रृङ्गारसहितां बहुधा प्रशशंस –

"अहोऽति धन्या व्रजगोरमण्यः

स्तन्यामृतं पीतमतीव ते मुदा।

यासां विभो वत्सतरात्मजात्मना,

यत्तृप्तयेऽद्यासि च नालमध्वराः।।

अहो भाग्यमहो भाग्यं ,नन्दगोपव्रजौकसाम्।

यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्।।"

एषां तु भाग्यमहिमाच्युत तावदास्तां

एकादशैव हि वयं बत भूरिभागाः।

एतद्हृषीकचषकैरसकृत्पिबाम

श्शर्वादयोऽङ्घ्र्युदज मध्वमृतासवं ते[1]।।

एकदा स्वयं भगवान् अर्जुनं प्रति भाषमाणः गोप्यः मदर्पितकामाः मां तत्वतो जानन्तीत्युवाच –

"निजाङ्गमपि या गोप्यो ममेति समुपासते।

ताभ्यः परं न मे पार्थ गूढप्रेमभाजनम्।।

सहाया गुरवश्शिष्या भुजिष्या बान्धवास्स्त्रियः।

सत्यं वदामि ते पार्थ गोप्यः किं मे भवन्ति न।।

मन्माहात्म्यं मत्सपर्यां मच्छ्रद्धां मन्मनोगतम्।

जानन्ति गोपिकाः पार्थ नान्ये जानन्ति तत्वतः[2]।।"

किमर्थमेवं गोप्यः बहुधा प्रशंसिताः? कृष्णानन्यपरत्वमेव तत्र हेतुः।

"या दोहनेऽवगहने मथनोपलेप-

प्रेङ्खनार्थरुदितोक्षणमार्जनादौ।

गायन्ति चैनमनुरक्तधियोऽश्रुकण्ठ्यो

---

[1] श्रीमद्भागवतम्  -X पर्यन्तम् 32  प्रभृति 30 - 14 -

[2] श्रीराधामाधवचिन्तनम् पृ 620 -

धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः[1]।।"

तदनन्य परायणत्वमवेक्ष्यैव भगवान् तास्सर्वदा स्वीयाः मेने। मथुरानगरप्रस्तावसमये उद्धवं प्रत्युक्तेषु वाक्येषु अन्यत्रच सैव असामान्या प्रीतिः सर्वत्र प्रदर्शिता। अत एव भगवान् ताभ्यः निःश्रेयसमनुजग्राह।

"तामन्मनस्का मत्प्रणा मदर्थे त्यक्तदैहिकाः।

ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहम्।।

मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः।

स्मरन्त्योऽङ्ग विमुह्यन्ति विरहौत्कण्ठविह्वलाः।।

धारयन्त्यति कृच्छ्रेण प्रायः प्राणान् कथञ्चन।

प्रत्यागमनसन्देशैर्वल्लव्यो मे मदात्मिकाः[2]।।

न पारयेऽहं निरवद्यसंयुजाम्।

स्वसाधुकृत्यं विबुधायुषाऽपि वः।

या मा भजन् दुर्जरगेह शृङ्खलाः

संवृश्च्य तद्वः प्रतियातु साधुना[3]।।" इति।

?गोपिकानां किमयं कामः यद्वा वैराग्यम्? अथवा भक्तिः? आहोस्वित् मुमुक्षा? एषु कस्य वा प्राधान्यम्? अत्रायं क्रमः –

प्रथमतो भगवद्भक्तिरूपा रतिः प्राधान्यमावहति। ततश्च भगवन्तं शृङ्गारधिया उपयुष्य इति प्रेमरूपा रतिः भक्तेरङ्गभूता। भगवत्प्रेम्णि सर्वं त्यक्तवत्यः इत्यतः क्षमातथा ,ऽपि आध्यात्मिकदृशा भक्तेःलौकिकधिया कामस्य प्राधान्यात् नात्र शमगन्धो ,ऽपि। तथाऽपि मुमुक्षुत्वं भगवदनुग्रहस्य प्राप्तत्वात्।

मोक्षस्तु पापपुण्यप्रणाशेन भवति। तत्र कर्मणामनारम्भःआरब्धस्य च उपभोगेन , क्षयः इति कर्म परिहारे अनुसरणीयो मार्गः। गोपीनां तादृश पापपुण्यक्षयः सर्वत्र पुराणेषु वर्णितः।

अत्रैव भागवते यथा –

---

1 श्रीमद्भागवतम् -X16 - 44 -

2 श्रीमद्भागवतम् -X पर्यन्तम् 6 प्रभृति 4 - 46 -

3 पूर्वत्र -X22- 32-

"दुस्सहप्रेष्ठविरहतीव्रतापधृताशुभाः।

ध्यानप्राप्ताच्युताश्लेष निर्वृत्या क्षीणमङ्गलाः।।

तमेव परमात्मानं जारबुध्याऽपि सङ्गताः।

जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः[1]।।"

विष्णुपुराणेऽपि गोपीवृत्तान्ते एषैव पद्धतिरुक्ता –

"तदप्राप्ति महादुःखनिलीनाशेषपातकाः।

तच्चिन्ताविपुलाह्लाद क्षीणपुण्यचया तथा।।

चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्।

निरुच्छ्वासतया मुक्तिं जतान्यागोपकन्यका[2] ,।।"

अत्र "निरुच्छ्वावासतया" इत्यनेन मुक्तिस्सूचिता। "नास्य प्राणा समुत्क्रामन्ति अत्रैव समवलीयन्ते[3]" इति श्रुतेः मोक्षकाले निरुच्छ्वासता भवति।

अतः गोपीनां मुमुक्षुत्वमेव सर्वथैव प्रकरणे प्रबन्धव्यङ्यतया भासते।

भागवते दशमस्कन्धे एकोनत्रिंशोऽध्यायादारभ्य त्रयत्त्रिंशोऽध्यायपर्यन्तम् पञ्चाध्यायाः "रासपञ्चाध्यायी" इति प्रसिद्धः। न केवलमेष पुराणभागःपृथक्तया दृश्यमानकाव्य इव , भासते।

एकदा भगवान् शरत्काले यमुनातीरे विहरति स्म। अत्रान्तरे चन्द्रो उदियाया श्रीकृष्णः कलं वेणुनादं कृतवान्। गोप्यः तेन गानेनाकृष्टाः यमुनातीरगतं तमभिसस्नुः। तादृशमभिसरणं अधर्म इति भगवान् ताः वारयामास। ततः गोप्यः "अस्माकं सर्वं त्वमेवासि" इति तं प्रार्थितवत्यः। ततो दयालुः कृष्णः ताभिः रेमे। तादृशरमणेन तेषु "वयं धन्याः" इति मदस्सञ्जातः।

"तासां तत्सौभागमदं वीक्ष्यमानञ्च केशवः।

प्रशमायप्रसादाय तत्रैवान्तरधीयत[1] ,।।"

ततो विरहातुराः कृष्णगुणान् गायन्त्यः वने कृष्णमन्वेषयामासुः। विरहे कृष्णलीलानामनुकरणं चक्रुः। एवं द्वितीयवारं कृतास्स्तुतीः "गोपिकागीतिरि"ति प्रसिद्धा। ततस्ताभिः प्रार्थितः पुनस्तासां प्रसादाय कृष्णस्ताभिः रेमे। एषः रासपञ्चाध्याय्याः सङ्क्षेपः।

---

[1] श्रीमद्भागवतम् -X10,11- 29 -

[2] काव्यप्रकाशे व्याख्यातमेतत् विष्णुपुराण श्लोकद्वयम्। चतुर्थोल्लासः पृ 156 -

[3] काव्यप्रकाशप्रदीपोद्योतव्याख्यायां नागेश भट्टैः व्याख्यातम् 82 ,81 -श्लोपृ 159 - ,

## गोपिकाः–[1]*

शरत्काले एकदा कृष्णः यमुनातीरस्थः वामदृशां कृते वेणुं कलं जगौ। तदनङ्गवर्धनं गीतं निशम्य कृष्णगृहीतमानसाः व्रजरमण्यः अन्योन्यमलक्षतोद्यमाः यत्र कृष्णस्तिष्ठति तं प्रदेशं जग्मुः। गाः दुहन्त्यः काश्चित् गोदोहनं त्यक्त्वा ययुः। काश्चित् पयः संयावमधिश्रित्य तं संयावमनुद्वास्यैव कृष्णसमीपं ययुः। शिशून् पयः पाययन्त्योऽपि तान् त्यक्त्वा कृष्णं ययुः। अलङ्कुर्वाणा अपि काश्चित् अलङ्क्रियामसामाप्यैवकाश्चित् व्यत्यस्त वस्त्राभरणा अपि , कृष्णान्तिकं जग्मुः।

कृष्णसमीपम् सर्वा जग्मुरित्येकेनैव वाक्येन वर्णने पर्याप्ते एवं विधवर्णनम् तासां कृष्णगतानन्यमनस्कत्वं सूचयति।

यतः साधारणतया ग्रामवासिनीनां स्त्रियाम् प्रायशः एवं विधाः क्रियाः अपरिहार्या भवन्ति। अलङ्करणादृते सर्वमप्यत्र अवश्यानुष्ठेयमेव। मातुश्शिशोरन्यत्प्रियतरं वस्तु भुवि न लक्ष्यते। शिशून् पाययन्त्योऽपि गताः इत्येतावतैव कृष्णस्य सर्वाधिकप्रियत्वं तासां व्यज्यते। एवं गच्छन्तीः ताः तासां भर्तारः भ्रातश्च वारयामासुः। किन्तु गोविन्दापहृतान्तरङ्गाः न ,पितरः , ताः अपि तद्भावनायुक्ताः ,न्यवर्तन्त काश्चन। गृहाद्बहिर्गन्तुं यासामवकाशः नासीत् मीलितलोचनाः कृष्णं दध्युः।

स्वसमीपमागताः ताः कृष्णः स्वागतीकृत्य ताः तत्प्रयत्नाद्विरमयितुं एवमूचे –

"एषा रजनी घोररूपा। स्वान् स्वान् गृहान् प्रतियात। युष्माकमात्मबन्धवः युष्मान् प्रपिपालयन्ति। विडम्बं मा कुरुत – अपि च युष्माकं भर्तारः युष्माभिरेव सेवनीयः।

"भर्त्रुशुश्रूषणं स्त्रीणां परधर्मो ह्यमायया।
तद्बन्धूनाञ्च कल्याण्यः प्रजानाञ्चानुपोषणम्।।
"दुश्शीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा।
पतिस्स्त्रीभि र्न हातव्यो लोकेप्सुभिरपातकी[2]।।" इति।

तथाऽपि तत्रैव तिष्ठन्त्यः ताः पुनरेवं बभाषिरे –

"श्रवणात् दर्शनाद्ध्यानात् मयि भावोऽनुकीर्तनात्
न तथा सन्निकर्षेण प्रतियाता ततो गृहान्[3]।।"

---

[1] X पर्यन्तम् 41 प्रभृति 31 - 29 -

[2] श्रीमद्भागवतम् -X24,25 - 29 -

[3] पूर्वत्र -X27 - 29 -

एवं कामपूरिताऽपि भक्तिभगवतः अभीष्टा। यतः गोपिका वस्त्रापहरणसमये प्रणमन्त्यः - तेषु वाक्येषु भगवतः कामुकोपासनमपि सम्मतमेवेति ,गोप्यः प्रति यानि वाक्यानि जगाद ज्ञायते[1]।

"तासां विज्ञाय भगवान् स्वपादस्पर्शकामया।

धृतव्रतानां सङ्कल्पमाह दामोदरोऽबलाः।

सङ्कल्पो विदितस्साध्व्यो भवतीनां मदर्चने।

मयानुमोदितस्सोऽसौ सत्यो भवितुमर्हति।।

न मय्यावेशितधियां कामः कामाय कल्पते।

भर्जिताः क्वथिताधानाः प्रायो बीजाय नेष्यते[2]।।" इति।

एवं स्वयमनुमोदन्नपि किमर्थं ताः तिरस्कृतवान्? लोकमर्यादापालनार्थमिति वक्तुं पार्यते। प्रथममेव गोप्यः भगवतः वेणुगानेनाकृष्टाः तस्मिन्न्यस्तचित्ताः बभूवुः।

एतच्च एकविंशेऽध्याये स्पष्टम्[3]।

अपि च तावतैव भगवदनुग्रहप्राप्तौ न तासां समग्रं शोधनमिति पुनस्ताभ्यः अभ्यर्थनामीहमानः ताः वारयामास। तदानीं ज्ञातभगवदभिप्राया अपि तत्कालावस्थया दीनाः ताः कृष्णमेवं प्रार्थयामासुः –

हे कृष्ण! सर्वसमर्थः त्वमस्मान् एतत् कृच्छ्रात् रक्षितुं प्रभवसि।

'विभो' इति साभिप्रायं विशेषणम्।

एवं प्रभुरपि क्रूरं वाक्यं वक्तुं नार्हसि। सर्वविषयसुखानि संत्यज्य तव पादमूलं प्राप्ताः वयम्। त्वं दुरवग्रहः। योगिनामपि न सुलभसाध्यः।

अत्रैव वाक्ये तासां कामस्य मोक्षेच्छारूपताऽपि प्रतिपादिता।

---

[1] " भगवानाह ता वीक्ष्य शुद्धभावप्रसादितः। स्कन्धे निधाय वासांसि प्रीतः प्रोवाच सस्मितः।।
यूयं विवस्त्रा यदपो धृतव्रतोव्यगाहतत्तदु देवहेलनम्। ,
बद्धाञ्जलिं मूर्ध्न्यपनुत्तेऽहंसःकृत्वा नमो वो वसनं प्रगृह्यताम्।। ,
इत्येतद्वचनं श्रुत्वा धर्मयुक्तं महात्मनः। एकेन पाणिना नेमुरेकेनाच्छाद्य चाङ्गनाः।।
तां वीक्ष्योवाच भगवान् भूयो धर्म्यमिदं वचः। एकेन पाणिना यो वै प्रणमेद्देवमच्युतम्।।
तस्य दण्डः करच्छेद इति धर्मविदो विदुः।। इति ।

[2] श्रीमद्भागवतम् -X पर्यन्तम्। 31 प्रभृति 29 - 22 -

[3] श्रीमद्भागवतम् X पर्यन्तम् 18 प्रभृति 7 - 21 -

यथा शब्दः अत्र सादृश्यार्थकः योग्यार्थकश्च[1]।

त्वमादिपुरुषोऽसि। वयं ते भक्ताः अनुरूपेण भक्तानां पालनम् तव अपरिहार्यं कर्तव्यम्।

पतिशुश्रूषाअपत्यपालनमित्यादि स्त्रीधर्माः बहवस्त्वयोपदिष्टाः। भवान् स्वयं , "धर्मस्वरूपः।

अत्र "धर्मविद" इति परिहासपूर्वं वचः। भक्तास्सन्त्यः भगवन्तं कथं जहसुरिति न शङ्कीयम्। तासां भक्तिः सखित्वेन परिगणिता। सर्वत्र ताः कृष्णं "सखे" इति सम्बोधयन्ति।

"सम्बन्धिजने परिहासवचनानि न खलु पापकरणानि[2]" इति विद्वद्वचनम्।

परिहासस्येदं कारणं द्रष्टव्यम् –

तत्र गोपीनामयमाशयः – भगवानेव योग्यस्य सर्वस्य कर्मणः भोक्तास एव सर्वथा , प्रियतमो बन्धुः। अतस्सर्वबन्धुषु करणीयं तस्मिन्नेवास्ति। भगवते यत्कृतं तत्सर्वमपि प्रीणाति। अतश्च भगवत्सेवनमेव परमो धर्मः। स एव तनु भृतामात्मा। एवं सर्वधर्मस्वरूपं तमाश्रितवतीआश्रयणादन्यस्य धर्मस्य अविद्यमानत्वे -ऽपि एवं कारणं न युक्तमिति।

योगिनः भगवत्यनुरक्ताः संसारादिकं त्यक्त्वा भगवन्तमेवाश्रयन्ते। संसारः आर्तिप्रदः। भगवानार्तिनाशकः। एवं वयमपि आर्तिनाशार्थं भवन्तं शरणं प्रपन्नाः। एवंप्रपन्नानामस्माकं आर्तिकारकैः पत्यपत्यादिभिः किं वा प्रयोजनम्? तेषां त्यागोऽस्माकं न दोषायेति भावः।

भगवद्वाक्यं अभ्युपपन्नमपि प्रतिनिवर्तनेऽनुपपत्तिं ताः दर्शयन्ति।

भगवान्। त्वदुपदेशं श्रुत्वा यदि वयं गृहं प्रति निवर्तिष्यामःतथा ,ऽपि अस्माकं नः भवता अपहृतम्। मनसि त्वयि स्थिते गृहकरणीयेषु पाणिपादम् न प्रचलति। एवं शून्यहृदयाः वयं व्रजं कथं व्रजामः? तत्र गत्वाऽपि किं करवाम?

अत्र इन्द्रियार्थसन्निकर्षाभावात् प्रत्यक्षज्ञानानुत्पत्तेः प्रतिनिवर्तनम् निष्फलमिति भावः। भगवान् तनुभृतामात्मेत्युक्तम्। आत्मैव सर्वप्रत्यक्षे हेतुः। यतः "आत्मा मनसा संयुज्यते। मनः इन्द्रियेणइन्द्रियमर्थेन ततः प्रत्यक्षम्। मनसा संयोगाभावे सत्यामपीन्द्रियप्रवृत्तौ न , प्रत्यक्षज्ञानोत्पत्तिः। मनसा प्रयुक्तानि इन्द्रियाणि उपलब्धौ कारणानि भवन्ती[3]"ति शास्त्रवचनात्।

---

[1] " योग्यता "यथार्थाः ,पदार्थानतिवृत्तिसादृश्यानि ,वीप्सा ,। सिद्धान्तकौमुदी - अव्ययीभावश्च - सूत्रविवरणे। 69पृ

[2] प्रसन्नराघवम् - तृतीयाङ्कप्रवेशिका।

[3] महाभाष्यम् - परोक्षेलिट् सूत्र भाष्ये।

अत्र "अङ्ग" इति सखित्वसूचकं सम्बोधनम्। अनुपदमेव 'सखे' इति सम्बुद्धिरपि प्रयुक्ता। अत एव हृदयाविष्करणं एवं क्रियन्ते –

भगवन्! त्वदधरामृतप्रवाहसेचनेन अस्माकं हृदयं गहने ज्वलन्तं तव वेणुगानोत्थितं विरहाग्निं निर्वापय। यदि न तथा करिष्यसि – विरहाग्निना दग्धदेहाः तव ध्यानेन तव पदयोः पदवीं यामः।

तपश्शब्दः सन्तापार्थकः। भगवद्वियोगकृतो विरहः हृदयदाहक इति। सोऽपि तप एव। विरहे भगवतो चिन्तनमेव ध्यानम्। ततो मोक्षप्राप्तिः सूच्यते।

यदि यूयं विरहपीडिताः तदा युष्माकं पतिभिस्सह रमित्वा विरहशान्तिं कर्तुं यतध्वमिति यदि तवाशयः – तत्र वयमेवं ब्रूमः –

तव पादमूलं रमया सेवितम्। तादृशं पादपद्मम् अस्माभिरपि कदाचित् सेवोत्सवं प्रादात्[1]। यदा तव पादयुग्ममस्प्राक्ष्मतत्प्रभृति अन्येषां समक्षं स्थातुमपि न पारयामः। , – किमुत रमणे इत्यर्थापत्तिः

तव पादयुग्मं प्रपन्ना इत्यत्र कारणं दर्शयन्ति –

श्रियाऽपि त्वत्पादाम्बुजरजः काङ्क्षितम्। तुलस्या अपि श्रीवत् तव वक्षसि पदं लब्ध्वाऽपि भृत्यसेवितं तव पादस्थं रजः प्रीतिपात्रमभूत्। यस्याः श्रियः वीक्षणमात्रेणापि अनुगृहीताः भवाम इति अन्येषां सुराणां प्रयासःतादृशी श्रीः स्वयं तव पादाम्बुजरजः सेवते। तद्वत् , । -वयमपि ते पादरजः प्रपन्नाः

हे पापनाशक! त्वामुपासितुं आशया गृहानुत्सृज्य तवाङ्घ्रिमूलं वयं प्राप्ताः।

सुन्दरस्मितविलासि तव वीक्षणानुग्रहम् प्राप्तुं सन्तपन्त्यः अस्माननुगृह्य तव दास्यं देहि।

दास्यवरणे कारणमाहुः –

अलकावृतमुखम् ,कुण्डलशोभापरीतगण्डस्थलम् अधरामृतसम्पन्नम् , दोर्दण्डयुगम् लक्ष्म्याः आधारभूतं वक्षःस्थलञ्च वीक्ष्य ,अभयदायकं ,स्मितपूर्वावलोकम् दास्यः भवाम। एवंविधवीक्षणे न केवलं कामः कारणम्। यतः अन्येषां भागवतानामपि एतादृशवीक्षणे रतिस्सर्वत्र वर्णिता – यथा भीष्मवाक्येषु -

[1] वर्णितमिदम् - श्रीमद्भागवतस्य अध्याये। 19

"त्रिभुवनकमनं तमालनीलं

रविकरगौरवराम्बरं दधाने

वपुरलककृताननाब्ज शोभे

विजयसरवेरतिरस्तु मे ,ऽनवद्या[1]।।" इति।

न केवलं वयमेव दास्यःमनोहरं तव वेणुगीतं श्रुत्वा त्रिलोकसुन्दरं एवं वपुः ,भवाम , री ्वीक्ष्य अत्रत्याः पक्षिणः मृगा अपि हर्षं रोमाञ्चं चानुभवन्ति। एवंविधं त्वां दृष्ट्वा का स्त आर्यवृत्तात् न चलतीति काक्वाक्षेपः। सर्वा अपि चलन्त्येवेति काक्वाक्षिप्तगुणीभूतव्यङ्ग्य्। अस्माकम् मनश्चलने न काप्यसङ्गतिरिति काव्यलिङ्गम्।

व्रजजनानामार्तिहरःसुरलोकरक्षकः आदिपुरुषः नारायणः। शरणं प्रपन्नानामस्माकं , हस्तावलम्बं दत्वा आर्तिनाशकः भवितुमर्हति।

"इति विक्लबितं तासां श्रुत्वा योगेश्वरेश्वरः।

प्रसह्य सदयं गोपीः आत्मारामो ह्यरीरमत्।।"

एवं कृष्णेन तासु रममाणासु तासां गृहेषु कृष्णमायया ताः गृहे स्थिता इव तासां पतीनां बुद्धिरभूत्। अत्र "अरीरमत्[2]" इति यङ्लुङ्न्त प्रयोगेणैव क्रियासमभिहारः सूचितः।

एवं बहुधा कृष्णरतासु तासु वयमेव लोके धन्याःअस्मादृशाः लोके न सन्तीति , स्मयस्सञ्जातः। तादृशमदःभक्तजनविरुद्धः। मदवृद्धौ भक्तः पातित्यं व्रजाति।

"तासां तत्सौ भगमदं वीक्ष्य मानञ्च केशवः।

प्रशमाय प्रसादाय तत्रैवान्तरधीयत[3]।।"

भगवति अन्तर्हिते गोप्यः कृष्णलीलाः अनुकुर्वत्यः तत्रैव चिरं स्थिताः। एवं विरहे स्थिताः बहुधा विलेपुः। तत्र विलापे तासां पुनरेवं विधा स्तुतिरभूत् –

**द्वितीयं स्तोत्रम्**- स्तोत्रऽस्मिन् बहुशः कृष्णगुणज्ञानमेव ग्रथितम्। तत्रापि बाहिरं सौन्दर्यमुपवर्णितम्। अपिचात्र विशेषः – प्रथमस्तोत्रे गोप्यः ज्ञानवत्य इव लोकाचारं हरेः कीर्तितवत्यः। यतः हरेर्विरहेण इदानीं ताः प्राकृतवद् व्यवहरन्ति। ज्ञानसम्पन्नत्वेऽपि

[1] श्रीमद्भागवतम् 33- 9 - 1 -

[2] धातोरेकाचो क्रियासमभिहारे यङ् 22 -1 - 3 - अष्टाध्यायी -

[3] X पर्यन्तम् 19 प्रभृति 1 - 31 -

दीनवद्व्यवहारः भगवतः प्रीतिकर एव। दैन्येनापि भक्तिः भगवते रोचते। तादृशमेव दैन्यमस्मिन् स्तोत्रे प्रदर्शितम्।

पूर्वस्तोत्रे समलङ्कृता भक्तिरितिअत्र स्तोत्रे भक्तिकृतो विप्रलम्भ श्रुङ्गार इति , द्वयोरन्तरम्। तत्र श्रृङ्गारानुरूपा शैली दृश्यते। अपिचानुपदमेव द्वात्रिंशेऽध्याये भगवतः गोपीनाञ्च मण्डलाकारे नृत्तमभिवर्णितम्।

गोप्यः एवमत्र स्तोत्रे भगवन्तं स्तुतवत्यःय ,त् स्तोत्रमिदं श्रुत्वा भगवततादृशी इच्छा -

अस्मिन् स्तोत्रे सर्वत्र "रान्नराविहरथोद्धता लगौ" इति लक्षितं रथोद्धता वृत्तम्।

अत्र प्रत्यष्टमात्रं लयच्छेदः। तेनैव लयविन्यासः। जानपदेषु वंशखण्डतालैः क्रियमाणः नृत्यविशेषः अतीव आदरविशेषविषयः।

स च क्वचित् मण्डलाकारोऽपि भवति। स एव 'रासः' इति नृत्तलास्यभेदः। रासो देश्यः। आन्ध्रदेशे स एव नृत्तविशेषः "गोन्ड्लि" इति कथ्यते वंशखण्डकृतनाट्यविशेषश्च . "कोलाटमु" इति कथ्यते। अत्र अष्टाभिर्मात्राभिच्छेदेन एवं पुनः पठित्वा लयविशेषमनुपश्यन्तु सहृदयाः –

अष्टमात्राः – अष्टमात्राः।

जयति तेऽधिकं - जन्मनाव्रजः

श्रयत इन्दिरा – शश्वदत्र हि

दयित दृश्यतां – दिक्षुतावकाः

त्वयि धृतासव - स्त्वां विचिन्वते

इत्यादिना।

प्रकृतमनुसरामः -

अत्र व्रजप्रशंसया गोपीभिरात्मप्रशंसा क्रियते। भगवन्! तव जन्मना व्रजो धन्यः। यतः लक्ष्मीः स्वयं व्रजं श्रयति। वयं त्वयि धृतप्राणाः त्वामेव अन्विष्यामः। अत्र जयतिशब्देन नमस्कारःतत्र जातत्वात् अस्माकमपि धन्यत्वम्। तादृशाः त्वद्दर्शनेन ,तेन सर्वौन्नत्यं , धन्यास्स्मः।

एवं भवत्यनुरक्तचेतसः अस्मान् त्यक्तुं नार्हसि। यतस्ते वयमशुल्कदासिकाः। भृत्यभरणं उत्तमानां धर्मः। भृत्यत्यागो दोषायैव। कृतागसि भृत्ये दण्डः धार्यः। निरागसामस्माकं त्यागः अस्माकं वध एव भवति।

कालीयविषात्अस्मान् पूर्वमेव त्वं बहुशः ,पाषाणवृष्टेः दावाग्नेः ,अजगरराक्षसात् , रक्षितोऽसि। किमित्युपेक्षा क्रियते।

त्वं न केवलं गोपिकानन्दनः। ब्रह्मणा प्रार्थितस्सन् त्वं विश्वपालनार्थं यदुवंशे उत्पन्नः। ततः अस्मानपि त्रातुमर्हसि।

अत्र त्राणप्रकारो वर्ण्यते चतुर्भिः –

संसारभयार्दिताः वयं त्वां शरणं प्रपन्नाः। अतस्सर्वकामदं तव करसरोरुहमस्माकं शिरसि निधाय नः आशिषो देहि। भवत्किङ्करीणामस्माकं तव मुखदर्शनमनुगृहाण। तव पाणिपल्लवमस्माकं हृदयेषु निधेहि। अमृतमयैर्वाक्यैः अस्मानाप्याययस्व।

एवं प्रार्थयित्वा भगवत्कथामहिमानं वदन्ति –

तव कथामृतं कविभिस्स्तवनीयम्। कल्मषनाशकंश्रवणमङ्गलञ्च। ,

ततः अष्टाभिश्श्लोकैः भगवत्सौन्दर्यं वर्णयन्ति।–

त्वं पशून् चारयन् यदा वने चरसि तदानीं शिलाभिस्स्तृणाङ्कुरैश्च तव पदं बाध्यते इति नः मनः पर्याकुलम्।

अहो! ते पदसौकुमार्यमिति भावः।

सायंतने नीलकुन्तलैरावृतं रजोरुषितम् तव मुखं दृष्ट्वा वयं मदनार्ताः भवामः। धूसरितत्वेऽपि सुन्दरत्वात् निसर्गमधुरं भगवतः आननमिति भावः।

एवमेव पुनश्चरणयोपुनराननस्य शोभा पुनः पुनः ,भगवद्गतेः ,मुखस्य ,अधरस्य - वर्णिता गोपीभिः।

विरहपर्याकुलैराभिः एवं स्मृतः कीर्तितश्च भगवान् तासां दैन्यं दृष्ट्वा पुनस्तासां प्रसादाय तत्र आविरभूत्।

अत्र गपीकृतस्तोत्रद्वयेऽपि भक्तिरेव अन्तस्सूत्रतया भासते। प्रथमस्तोत्रे शान्तभक्तिः इति वक्तुं शक्तयते – भक्तिरसामृतसिन्धौ शान्तभक्तेः लक्षणादिकं विवृतम् –

"वक्ष्यमाणैर्विभावाद्यैः शमिनां स्वाद्यतां गतः।

स्थायी शान्तिरति र्धीरैः शान्तभक्तिरसः स्मृतः।।

प्रायः स्वसुखजातीयं सुखं स्यादत्र योगिनाम्।

किन्त्वात्मसौख्यमधनं घनन्तीशमयं सुखम्।।

तत्रापीशस्स्वरूपानुभवस्यैवोरुहेतुता।

दासादिवन्मनोज्ञत्वलीलादे र्न तथा मता।।

चतुर्भुजश्च शान्ताश्च अस्मिन्नालम्बना मताः।

सदा स्वरूपसंप्राप्तौ हतारिगतिदायकः।

विभुरित्यादि गुणवानस्मिन्नालम्बनो हरिः।।

शान्तास्स्युः कृष्णतत्प्रेष्टकारुण्येन रतिंगताः।

आत्मारामार्तदीयाध्वबद्धश्रद्धाश्च तापसाः[1]।।" इत्यादिना।

द्वितीयस्तोत्रे भक्तेर्गौणता। विप्रलम्भश्रृङ्गारस्य प्राधान्यं दृश्यते। अन्तर्हितस्य भगवतः पुनर्दर्शनाशा गोपीनां हृदयेषु अविद्यमाना इति न करुणो रसः। यतो भक्तानां तासां भगवति निश्चलो विश्वासः। ततः पुनस्समागमाशा इति विप्रलम्भ श्रृङ्गार एव न करुणः। विपरलम्भ शब्दस्य विश्वासोऽर्थः। श्रृङ्गारः रसध्वनिविषयः। भक्तिरसस्तु संलक्ष्यक्रमतया व्यज्यते।

एवं संलक्ष्यक्रमतया भक्तेः व्यङ्ग्यत्वमपि न शास्त्रविरुद्धम्। एष च गौणो भक्तिरसः। यच्चालङ्कारिकैरुक्तम् –

"रसामृताब्धेर्भागेऽत्र तुरीयेतूत्तराभिधे।

रसः सप्तविधो गौणो मैत्रीवैरस्थितिर्मिथः।।

रसाभासाश्च तेनात्र लहर्यो नव कीर्तिताः।

प्रागत्रानियताधाराः कदाचित्वत्वाप्युदित्वराः।।

गौणाः भक्तिरसाः सप्त लेख्या हास्यादयः क्रमात्।[2]" इत्यादिना।

भगवति एकादशविधाः आसक्तयः निधेया इति भागवता वदन्ति। ताश्च सर्वाः आसक्तयः गोपीषु दृश्यन्ते।

"गुणमाहात्म्यासक्तिः ,दास्यासक्तिः ,स्मरणासक्तिः ,पूजासक्तिः ,रूपासक्तिः , ,तन्मयतासक्तिः ,आत्मनिवेदनासक्तिः ,वात्सल्यासक्तिः ,कान्तासक्तिः ,सख्यासक्तिः परमविरहासक्तिरूपाः एकधाप्येकदशधा भवति[3]।

स्तोत्रद्वयेऽस्मिन् गुणमहिमासक्तिः -

---

[1] श्रीभक्तिरसामृतसिन्धुः - पश्चिमविभागः 7,10,11पर्यन्तम् प्रभृति 4 - प्रथमलहरी -

[2] पूर्वत्र - उत्तरविभागः 2,3,4श्लो

[3] नारदभक्तिसूत्राणि - प्रेमदर्शनम् सू 82 -

"श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या
लब्ध्वाऽपि वक्षसि पदं किल भृत्यजुष्टम्।
यस्यास्त्ववीक्षणकृतेऽन्यसुरप्रयासः
तद्वद्वयञ्च तव पादरजः प्रपन्नाः[1]।। "
इत्यत्र –

**रूपासक्तिः**–
"कास्त्र्यङ्ग ते कलपदायतवेणुगीत
सम्मोहितार्यचरितान्नचलेत्त्रिलोक्याम्।
त्रैलोक्यसौभगमिदं च निरूप्यरूपं
यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्[2]।।
इति श्लोके –

**पूजासक्तिः** –
"न खलु गोपिकानन्दनो भवान्,
अखिलदेहिनामन्तरात्म द्रुक्।
विघनसार्थितो विश्वगुप्तये,
सख! उदेयिवान् सात्वतां कुले[3]।।"

**स्मरणासक्तिः**– त्रिंशेऽध्याये समग्रतया वर्णिताः

**दास्यासक्तिः** –
"शरदुदाशये साधुजात सत्
सरसिजोदर श्रीमुषा दृशा।

---

[1] श्रीमद्भगावतम् X -29 -37
[2] पूर्वत्र -X40 - 29 -
[3] श्रीमद्भागवतम् -X4 - 31 -

सुरतनाथ तेऽशुल्कदासिका
वरद निघ्नतो नेह किं वधः[1]।। "
"तन्नः प्रसीद वृजिनार्दन तेऽङ्घ्रिमूलं
प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः।
त्वत्सुन्दरस्मितनिरीक्षणतीव्रकाम
तप्तात्मनां पुरुषभूषण देहिदास्यम्।।
वीक्ष्यालकावृतमुखं तव कुण्डलश्री
गण्डस्थलाधरसुखम् हसितावलोकम्।

दत्ताभयञ्च भुजदण्डयुकं विलोक्य
वक्षः श्रियैकरमणञ्च भवाम दास्यः[2]।।"

**सस्व्यासक्तिः**–

"सिञ्चाङ्गनस्त्वदधरामृतपूरकेण
हासावलोककलगीतजहृच्छयाग्निम्।
नो चेद्वयं विरहजाग्न्युपयुक्तदेहाः
ध्यानेन याम पदयोः पदवीं सखे ते[3]।।"

**कान्तासक्तिः**–

दिनपरिक्षये नीलकुन्तलै-
र्वररुहाननं बिभ्रदावृतम्।
घनरजस्वलं दर्शयन्मुहु-

---

[1] पूर्वत्र -X2 - 31 -

[2] श्रीमद्भागवतम् -X37,38 - 29 -

[3] पूर्वत्र -X35 - 29 -

र्मनसि नस्स्मरं वीर यच्छसि[1]।।"   इत्यत्र।

वात्सल्यासक्तेः उदाहरणं अस्मिन्नास्ति।

**आत्मनिवेदनासक्तिः**– सर्वत्र स्तोत्रे दृश्यते।

"व्यक्तं भवान् व्रजजनार्तिहरोऽभिजातः।

देवो यथादिपुरुषस्सुरलोकगोप्ता

तन्नो विधेहि करपङ्कजमात्मबन्धो

तप्तस्तनेषु च शिरस्सु च किङ्करीणाम्[2]।।"

**तन्मयतासक्तिः**–

"चित्तं सुखेन भवतापहृतं गृहेषु

यन्निर्विशत्युत करावपि गृह्यकृत्ये।

पादौ पदं न चलतस्तव पादमूलात्

यामः कथं व्रजमहो करवाम किं वा[3]।।"

परमविरहासक्तिः सर्वत्रात्र व्यज्यते।

एवं भगवदर्पितधियां तासां पापक्षयः अभूदित्यत्र न कश्चित्सन्देहः। इमामेव रासलीलां श्रीमद्भागवतात् गृहीत्वा अनन्तरकाले कवयः परश्शतानि स्तोत्राणि रचयामासुः। तेषु च जयदेवस्य गीतगोविन्दकाव्यम्लीलाशुकस्य श्रीकृष्णकर्णामृतञ्च प्रसिद्धे। ,

श्रीमद्भागवतस्य आर्षत्वात् अत्र वर्णितः श्रृङ्गारः दोषलेशमपि न भजति। यतः उत्तम प्रकृतीनां रतिः ग्राम्यानां रतिरिव न वर्णनीया। तादृग्वर्णनम् अनौचित्तयहेतुरेव। कुमारसम्भवे अष्टमसर्गे पार्वतीपर्मेश्वरयोर्वर्णनमपि अनुचितमेव भातीत्यानन्दवर्धनः[4]। परं तु तत्र चतुर्थसर्गान्ते उपलब्धसुखः इति दलस्य सार्धक्यसम्पादकः अष्टमसर्गः। जगन्नाथस्तु ईदृग्वर्णनम् अनौचित्यमेवेतिपरिहरणीयमिति च सिद्धान्तितवान्[5] ,।

इदमत्र रहस्यं तत्वम् –

[1] पूर्वत्र -X12 - 29 -

[2] श्रीमद्भागवतम् -X 41- 29 -

[3] पूर्वत्र -X34- 29 -

[4] ध्वन्यालोगः - तृतीयोद्योतः पृ 787 -

[5] रसगङ्गाधरः - प्रथमाननम् पृ 220 -

"अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।

प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा[1]।।"

इति यदनौचित्यं निषिद्धम्तद्रसभङ्ग हेतुः यदि स्यात्। रसपोषकमनौचित्यं , आदरणीयमेव।

"यावतात्वनौचित्येन रसस्य पुष्टिः– "तावत्तु न वार्यते , इति जगन्नाथः स्वयं सिद्धान्तितवान्[2]।

अथवा सर्वोऽपि अनौचित्यनिषेधः मुख्यरसविषयकः। अत्र श्रीमद्भागवतेजयदेवादि , ग्रन्थेषु च श्रृङ्गारस्य गोणत्वात् भक्तेः प्राधान्यात् गौणरसस्य श्रृङ्गारस्य अनौचित्यं न दोषाय।

अत्र रासपञ्चाध्यायीविषये भक्ति श्रृङ्गारयोः वैरुध्येऽपि न रसस्य हानिः।

"यदि विरुद्धयोरपि रसयोः एकत्र समावेशः इष्यते विरोधं परिहृत्य विधेय" इति आलङ्कारिक समयः। विरोधस्तावत् द्विविधःज्ञानविरोधश्च। तत्र ज्ञानविरोधे ,स्थितिविरोधो , .1 चत्वारः परिहारकाः।द्वयोरेकस्य गौणत्वम्। .2विरुद्धयोः द्वयोः रसयोः मध्ये रसान्तरस्याविरोधिनः सन्धिकर्तुरिव अन्तरालेऽवस्थान्। .3द्वयोरन्यतरेण विरोधिनः रसस्य विजेतृत्वम्द्वयोरपि रसयोः रसान्तरस्याङ्गत्वकल्पनम्। .4 .

अत्र भागवते भक्तिरसः प्रधानः। तदङ्गभूतो वियोगश्रृङ्गारश्चेति न कश्चिद्विरोधः। कृष्णेन वेणुरवाकृष्टाः गोप्यः यमुनातीरमागत्य कृष्णं परिवव्रुः। तदा कृष्णः औपपत्यं जुगुप्सितमिति ताः वारयामास। तदानीं गोप्यः कृष्णं तुष्टुवुः। अत्र गोपीनां श्रकृष्णस्य च परस्परानुरक्तानां सामानाधिकरण्यसत्वेऽपि विप्रलम्भ श्रृङ्गार एव रसः। सोऽपि समागमात् पूर्वभूत इति अभिलाषारूपः। संयोगस्तु न दम्पत्योः सामानाधिकरण्यम्। एकशयनादि सद् भावेऽपि ईर्ष्यादि सत्वे संयोगादर्शनात्। एवं वियोगोऽपि न वैयधिकरण्यम्। तस्मात् द्वाविमौ संयोगवियोगाख्यौ अन्तःकरणवृत्तिविशेषौ यत्संयुक्तोवियुक्तश्चास्मीति धीः।अत्र गोपीनां , कृष्णेन वियुक्तास्स्मः इति बाधा तासां वाक्येषु व्यज्यते इति स्पष्टमेव।

अत्र भगवानालम्बनम्। चन्द्रोदयवेणुरवाकर्णनादयः उद्दीपनविभावाः। "दुहन्त्योऽपि ययुः काश्चित्"... इत्यादिषु आवेगः" ,कृष्णमुखात् अप्रियाकर्णनेन दैन्यम् ,लक्ष्म्यापि सेवितं तव पादमूलं सेवितुमिच्छाम इत्यौत्सुक्यःएवमन्ये च सञ्चारिणः ऊह्याः। ,

यद्वा काव्यसामान्यमात्रदृष्ट्या विप्रलम्भाभासः रतेः पारदारिकत्वात् व्यज्यते इत्यपि वक्तुं सुवचम्। भक्तेः मुख्यतया रसाभासस्य तदङ्गत्वेऽपि न दोषः।

---

[1] ध्वन्यालोकः - तृतीयोद्योतः पृ 780 -

[2] रसगङ्गाधरः - प्रथमाननम् पृ 221 -

कृष्णान्तर्धानानन्तरं कृष्णविरहासहिष्णुवः कृष्णं प्रशशंसुः। अत्रापि भगवान् श्रीकृष्णः आलम्बनम्। कृष्णान्तर्धानं विरहोद्दीपकम्। कृष्णभावनातदागमनशङ्कया उच्चैः गानञ्च , " अनुभावाः।जयति तेऽधिकं " इत्यादिषु सर्वत्रौत्सुक्यम्" ,भज सखे "भवत्किङ्करी स्म नो ... इत्यत्र दैन्यं " ,यत्ते सुजातचरणाम्बुरुहं" इत्यादिषु कृष्णपादग्लानेः शङ्का तादृशशङ्कायैव , "भवदाविषां इत्युक्त्या दासश्च सञ्चारिणः। ये च भावाः अत्र स्तोत्रद्वयेऽपि श्रृङ्गारस्य पोषकाः , त एव भक्तेरपि।

# भ्रमरगीताः -[1]*

कंसवधार्थं नन्दगोकुलात् मथुरां प्राप्तः श्रीकृष्णः गोपीनां सान्त्वनाय उद्धवं पुनः नन्दगोकुलं प्रेषयामास। उद्धवश्च गोपीनां समीपमागत्य कृष्णस्य राजकार्यव्यग्रतां विज्ञाप्य पुनः कृष्ण मथुरायाः नन्दगोकुलं न प्रतिनिवर्तते इति कृष्णसन्देशं गोपीः श्रावयामास। तदानीं गोप्यः कृष्णस्य चिरवियोगमसहिष्णुवः तल्लग्नमनस्काः कृष्णलीलाः संस्मृत्य संस्मृत्य विरहपरितापं प्रापुः। तासु काचिद्गोपिका मधुकरमेकं प्रतिनिधिं कल्पयित्वा तस्मिन्नारोपितकृष्णबुद्धिः विरहार्तिमयीः वाचः जगाद –

तत्र मधुपदौत्यवरणे अस्ति कश्चिद्विशेषः। लोके साधारणतः स्त्रियः कुसुमानीति पुमान् भ्रमर इति विलासिभिरुपमीयते। यथा द्विरेफः कुसुमात् कुसुमं गच्छतितथा पुरुषो ,ऽपि स्त्रियः स्त्र्यन्तरं गच्छति। श्रीकृष्णोऽपि मथुरां गत्वा स्त्रीविशेषैर्युक्तः अत्रत्याः गोपीः न स्मरतीति निष्ठुरं वचः अप्रस्तुतप्रशंसया सर्वत्रात्र ध्वन्यते। अत एवास्य स्तोत्रस्य "भ्रमरगीतिकाः" इति नाम प्रथितम्।

केचित्पुनः क्षेमेन्द्रादयः आलङ्कारिकाः एतादृश तिर्यक्सन्देशेषुअचेतनसन्देशेषु च , असम्भवत्वञ्चाशंक्य एवं वर्णनमनुचितमिति प्रत्याचष्टिरे। परं तु श्री भागवतात् ,अनुपपत्तिं प्रागेव श्रीमद्र ामायणेऽपि श्रीरामविरहवर्णने एवं विधाः अचेतनेषूद्दिष्टाः विरहिणामालापाः उपवर्णिताः।

मेघदूतादि काव्यादिष्वपि विरहिणामेवंविधा आलापाः भगवतानन्तरकालेऽपि प्रसिद्धाः। कवीनां एष च समयः यत् श्रृङ्गारवर्णने अचेतनेषु चेतनत्वारोपः तिर्यङ्क्षु मैत्रीपूर्वको व्यवहारः। अपिचोक्तम् कालिदासेन –

"कामार्ता हि प्रकृतिकृपणा चेतनाचेतनेषु[2]" इति।

एतादृश व्यवहारस्याभावे रसादीनामलङ्काराणां प्रविरलविषयता निर्विषयता वा अभिहिता स्यादिति आनन्दवर्धनः[2]।

समग्रस्यास्य ग्रन्थस्य पुराणत्वेऽपि स्तोत्रस्यास्य खण्डकाव्यत्वं , विप्रलम्भश्रृङ्गारप्रधान्यात् सिद्धमिव प्रतिभाति।

!हे मधुकर* त्वं बन्धुव्यपदेशेन अस्मान् वञ्चितवान्।

कितवबन्धो! इति विशेषणं एतदर्थं सूचयति। तथाऽपि अन्यापदेशेन कृष्णे असूयां प्रतिपादयति-

---

[1] X 12- 47 -

[2] मेघसन्देशः 4 - 1 -

यैरङ्घ्रिभिः कृष्णकण्ठस्थितां वनमालां स्पृष्टवान् तैरेवाङ्घ्रिभिः सपत्नीं मा स्पृश। यतस्तादृशेनैव स्पर्शेन परम्परया मम सपत्न्याः कृष्णस्पर्शसुखं माभूत्।

एकदा अस्मानुपपद्य सद्यः त्यक्त्वा स्थानान्तरमाश्रितोऽसि। त्वमुत्तमश्लोक इति लोकप्रथया त्वामाश्रित्य वयं वञ्चिताः। लक्ष्मीरपि एवं भवति मिथ्या सज्जनगौरवेण सदा बद्धानुरागा प्राक् चिरं वञ्चिता इदानीमपि च। वयं तु न लक्ष्मीवदविचक्षणाःसकृत् सङ्गेन , तव धूर्ततां ज्ञात्वा त्वां दूरे स्थापितवत्यः।

हे भ्रमर! अस्माकं समक्षं वृथा किमर्थ कृष्णं प्रशंसता त्वया गीयते। कृष्णेन सह याः रमन्ते तासां समक्षं यदि कृष्णयशः गीयते तदानीं तव गानमुपपन्नं स्यात्।

स्वर्गमर्त्यपाताललोके का कृष्णं उत्तमश्लोकं श्रुत्वा तत्सक्तमनाः तेन न वञ्चिता?

लोकत्रये सर्वाः स्त्रियः कृष्णेन वञ्चिता इति काक्वाक्षिप्तं व्यङ्ग्यम्।

अहं त्वत्प्रियवाक्यमर्मज्ञा। त्वमिष्टान् साधयितुं मयि चाटुवाक्यान्युपमन्त्र्य पूर्वं ववञ्चिय इदानीं किं त्वया सन्धेयम् ?-

इदानीं प्राक्तनेष्ववतारेषु क्रमात् पूर्वं पूर्वं शरणागतान् कथं प्रतारयामासेति निन्दन्ती तत्प्रकारं दर्शयति –

रामावतारे वृक्षेणान्तरितः रामः वालिनं जघान। वाली कपीन्द्रः। व्याधेन मांसार्थमेव मृगया क्रियते। किन्तु कपीनां मांसः अभक्ष्यः। एवं जानन्नपि लुब्धधर्म मप्यतिरिच्य वालिनं हतवानसि। यद्वा अलुब्धधर्मा धर्मेच्छां निराकृत्या अपि च शूर्पणखा  त्वां कामयमाना त्वत्समीपमुपस्थिता त्वया विरूपिता। यदि त्वं स्त्रीपराङ्मुखः तदानीमेवं  स्ताय्। किन्तु तदानीमपि त्वं स्त्रीजितः। सीता सौन्दर्यमोहित इत्यर्थः।

निन्दायामप्यत्र अलुब्धधर्माः" न लुब्धः नष्टः धर्मः येन सः ,धर्मादनिच् केवलात्" इति समासान्तो अनिच्[1]। धर्ममत्यजन्निति स्तुतिः। स्त्रीजितइत्यनेन अनुकूलः नायकोऽसि। ततो एकपत्नीव्रतः इति स्तुतिरपि।

रामावतारात्प्रागेव वामनावतारे त्वं भक्तं बलिं काकः बलिमिव अत्वा अर्थात् ) अयशस्को (नाशयित्वाऽसि। तादृशेन खलेन त्वया मैत्री कथमिति योग्या। पूर्वावतारवर्णनात् साक्षान्नारायणोऽसीति स्तुतिः।

भगवदाश्रिताः सदा सुखिनस्स्युः। किन्तु सकृदपि तव चरित्राकर्णनेन कृतकिल्बिषा इव जनाः द्वन्द्वधर्मात् अर्थात् इष्टजनसहवासात् निधुवनाद्वा वियुज्यन्ते। अपि च दीनं कुटुम्बमुत्सृज्य विहङ्गा इव स्थिरवासरहिताः भिक्षुचर्यां चरन्ति।

---

[1] अष्टाध्यायी 124 - 4 - 5 -

भैक्ष्यं दुर्गतिस्सूचकम्। सम्पन्नाशेन भिक्षाटनम् कुर्वन्तीति वाच्या निन्दा।

भगवच्चरितस्य सकृदप्याकर्णनेन विधूतद्वन्द्वधर्माः विधूतः – तिरस्कृतः द्वन्द्वस्य – सुखदुःखयोः पापपुण्ययो र्वा धर्माः – स्थितिमन्तः। अत्रापि पूर्ववत् बहुव्रीहिःसमासान्तः , विहङ्गाः हंसा इव कुटुम्बमुत्सृज्य परिव्राजकाः -अनिच् प्रत्ययश्च। अविनष्टाः स्थानभ्रंशरहिता भूत्वा भिक्षुचर्यां चरन्ति। भैक्ष्येण जीवन्तीत्यर्थः। परमहंसानां अवधूतानां परिव्राजकानां भैक्ष्याचरणं शास्त्रसम्मतमेव। त्वदनुरक्ताः प्राप्तवैराग्यत्वात् भवबन्धानुत्सृज्य मुक्ता भवन्तीति स्तुतिः व्यङ्ग्योऽर्थः।

पुनः विप्रलम्भपरां वाचं वदति –

व्याधगीतिः मृगाणां यथा आकर्षिका भवति तद्वत् कृष्णस्य मधुरया वाचा वयमाकृष्टाः वञ्चिताश्च।

निन्दया पुनः पश्चात्तप्ता कृष्णं स्तौति –

तत्र कृष्णमुद्दिश्यैव सम्बोधनम् -

प्रियसख इति – पुनः कदा नु आगमिष्यसि? दुःखापवारकं तव पाणिं कदा नु अस्माकमुरसि निधाश्यसे? तत्पाणिस्पर्शार्थमेव श्रीः सदा त्वां सेवते।

कृष्णसङ्कीर्तनेन उपशान्त दुःखाः पुनरुद्धवमेवं भाषते – मथुरायां कृष्णः अपि कुशली? गोपानपि स्मरति वा? अपि चास्माकं कथाः कदाऽपि तेन स्मर्यन्ते? कदा वा पुनरस्य समागमो भविता? इति खिन्नां गोपीं उद्धवः भगवत्सन्देशं श्रावयित्वासंयोगवियोगयोः , अत्यन्तानित्यतां स्मारयित्वा स्वस्थचित्तामकरोत्। चित्तस्वास्थ्यमेव भगवतः प्रसादः।

हरेः प्राक्तनावतारवर्णनात् दिव्यस्तोत्रमिदम्। अत्र उद्धवेन कृष्णस्य कुशलवार्ता निवेदिता। ततो गोपीनां विप्रलम्भश्रृङ्गारः। किन्तु मथुरायाः कृष्णः नन्दगोकुलं न पुनरागमिष्यतीति श्रुत्वा शाश्वतिकः वियोगः अनुभाव्य इति गोप्याः शोकश्च। तयोः विरहस्यैव प्राधान्यात् करुण एव रसः वियोगस्य शाश्वतिकत्वात्। तस्य श्रृङ्गारः अङ्गभूतः। उभयोरप्येतयोः विरुद्धरसयोः संलक्ष्यक्रमतया व्यज्यमानायाः भक्तेः अङ्गत्वमिति रसविरोधपरिहारः। यथा वीरश्रृङ्गारयोःन तथा ,स्पष्टतया विभावादि प्रतीतिः भवति - रसान्तरेषु। यतश्चात्रैव एकस्यैव कृष्णस्य विरहशोकभक्तीनां त्रयाणामप्यालम्बनत्वात्। तथाप्यत्र भक्तिरससामग्री एवमुन्नेया –

श्रीकृष्णः भगवानालम्बनम्। उद्धवोक्तिरुद्दीपनम्। "गायन्त्यः प्रियकर्माणितानि .. ".. संस्मृत्य संस्मृत्य इत्यत्र अश्रुपातःपुष्पाणि षट्पद ,ैरिव कृष्णेन वयं त्यक्ताः इति स्वासां दुःखावस्थां प्रति दैन्यम्। निस्स्वं त्यजन्ति गणिका इत्यादि वाक्येषु निष्ठुर भाषिता च .. स एव ,अनुभावाः। मधुपमुद्दिश्य प्रवृत्ता कृष्णस्तुतिः इति हेतोः उन्मादः नाम अनङ्गदशा सञ्चारी भावोऽपि। गतह्रियः इति ह्रीत्यागः – स्मरावस्था। "मधुप कितवबन्धो".. इति

मधुपवारणेन कृष्णं प्रत्यसूया" ,सकृदधरसुधां ".. इत्यादिषु निष्ठुरभाषित्वादमर्षःचिन्ता तु , इति भक्तिरसपरिपुष्टिः। - अच्युतविषयिका सर्वत्रानुस्यूता।

## मुनिपत्न्यः–[1]*

एकदा कृष्णः गाः पालयन् यमुनातटे चरन्नास्ते। यमुनातीरे यियक्षूणां विप्राणां भार्याः कृष्णं कामयमानाः आसन्। किन्तु पतिभ्यः भीतास्ताः मनसा कृष्णमेव स्मरन्त्यः आसन्। तद्ज्ञात्वा विनेतुकामः भगवान् गोपबालकान् तासां समीपं प्रेषयित्वा तेषां मुखात् अन्नं ययाचे। ताः भर्तुभिर्वार्यमाणा अपि गोप्य इव भगवते भोजनमानीय तं प्रदेशमुपजग्मुः यत्र श्रीकृष्ण आसीद्वने। एवमागता स्ताः कामार्ताः विज्ञाय भगवान् ताः वारयामास। तदानीं गोप्य इव ता अपि कृष्णमेवं जगदुः।

"मैवं विभोऽर्हति भवान् गदितुं नृशंसं

सत्यं कुरुष्व निगमं तव पादमूलम्।

प्राप्ता वयं तुलसिदाम पदावसृष्टम्

केशैर्निवोदुमतिलङ्घ्य समस्तबन्धून्।।

गृह्णन्ति नो न पतयः पितरस्सुता वा

न भ्रातृबन्धुसुहृदः कुत एव चान्ये।

तस्मात् भवत्प्रपदयोः पतितात्मनां नो

नान्या भवेद्गतिररिन्दम तद्विधेहि।।"

श्लोकद्वयमप्येतत् रासक्रीडायां यथा यथं वर्तते। तद् व्याख्याविशेषविस्तरस्तु तत्रैव द्रष्टव्यः।

अत्र मधुरभक्तेराश्रय भूताः मुनिपत्न्यः। आलम्बनं युदुनन्दनः। तासामुक्त्या कृष्णे निरतिशयोऽनुरागोऽभिव्यज्यते। भगवति कृष्णे इच्छाप्रतिवर्तने ,पतिभ्यो भीतिः ,ऽनादरशङ्का प्रभृतयो व्यभिचारिणः। नान्या गतिरिति धृतिःकुत एवचान्ये इति दैन्यञ्च। , श्रीकृष्णदर्शनभाषणादि उद्दीपनम्। समस्त बन्धूल्लङ्घन – कृष्णपादमूलाभिसरणादिना तद्विषयिणी रतिः स्पष्टीभवच्छृङ्गारः सुमधुरः भक्तिरङ्गभूतः। तदित्थं श्लोकद्वयमिदं मधुरभक्तिरसनिदानां सद्विराजते।

---

[1] X30,31- 23-

## हस्तिनापुरस्त्रियः–[1]*

द्वारकानगरं प्रति प्रस्थितं श्रीकृष्णं युधिष्ठिरादयः कृच्छ्रात् दुःखेनैव प्रस्थापयामासुः। पाण्डवास्तु बान्धवा इति हेतोः तेषां कृष्णानुरक्तत्वं न्याय्यमेव। किन्तु हस्तिनपुरे हरिः कतिचिन्मासानुवास। तेन प्राप्तसौहृदः पौरा अपि कृष्णप्रस्थानसमये भृशं वैमनस्यं अन्वभूवन्। ततः प्रतिनिवर्तकं कृष्णं दिदृक्षवः पुरस्त्रियः प्रसादशिखरारूढाः कृष्णं दृष्ट्वा परस्परमेवमूचुः।

तत्र पौरयोषितामुक्तयः – श्रीकृष्णमहिमास्तुतिपराः। ताश्च उक्तयः श्रीकृष्णस्य , लौकिकसौन्दर्यस्य च वर्णनपराः। ,अलौकिकतत्वस्य

स्तुतिश्च गुणिनो गुणानुवर्णनमितिप्रागुक्तम्[2]। सा च गुणवर्णना उत्तमश्लोकगीतिः। श्लोकशब्दः यशः पर्यायः। "पद्ये च यशसि श्लोकः[3]" इत्यमरः। उत्तमयशो वर्णनपरम् संभाषणम् तासामन्योन्यमभूदिति भावः।

तादुक्तयः तत्रस्थानां सर्वासां सर्वेषां जनानां श्रुतिमनोहराः आसन्।

अत्र साङ्ख्ययोगः प्रतिपाद्यते। 'एकमेवाद्वितीयं ब्रह्म[4]' इति वेदान्तिनां पक्षे यः द्वितीयः– गुणक्षोभात् पूर्वं निर्गुणस्सन् जागर्तिस्म ,गुणातीतः परब्रह्मस्वरूपः , स एवायं इदानीं प्रधानतया सत्वगुणमापन्नः पुरुषः।

तत्र गुणक्षोभात् पूर्वं गुणेभ्यः सत्वादिगुणप्रचुरमहदहङ्कारपञ्चभूतप्रकृतिभ्यः अग्रे तदुत्पत्तेः प्राक् जगदात्मनि अविभक्तनामरूपचेतनाचेतनात्मकजगदाधारे ईश्वरे सूक्ष्मतादृशप्रपञ्चशरीरकत्वे सत्यपि अविसुप्तनिखिलजगन्नियमनादि शक्तिशाली परमपुरुषः अयमेवेति सगुणोपासनपक्षमाश्रयताम् वेदान्तिनां मतम्।

मायासमाश्रयणात्अव्यक्तः ,प्रकृत्या संयोगात् पूर्वं यो निर्गुणः पुरुष आसीत् , स्वयमिति साङ्ख्य योगिनां मतम्।

एवं सर्वदार्शनिकानां मतेऽपि पुरुषः सर्वसाक्षी ,तत्र जगति मायामोहिते ,सर्वव्यापी , -अन्तश्चैतन्यरूपेण स्वप्रकाशतया अयं जागर्ति। उक्तञ्च गीतासु उपनिषत्सु

"या निशा सर्वभूतानां तस्यां जागर्ति संयमी।

यस्यां जाग्रति भूतानिसा निशा पश्यत ,ो मुनेः[5]।।"

---

[1] पर्यन्तम् 30 प्रभृति 20 - 10 - 1

[2] उपोद्घातप्रकरणे पृ 84 -

[3] अमरकोशः 2 - 3 - 3 -

[4] छान्दोग्योपनिषत् 1 - 2- 6 -

[5] भगवद्गीता 69 - 2 -

निमीलितात्मन्नि"शि सुप्तशक्तिषु"

इत्यत्र 'निमीलितात्मन्' इति लुप्तसप्तमीकं आर्षम् पदम्।

तादृशः निर्गुणः पुरुषः गुणत्वमापन्नः स्वस्मात् परमात्मनः मायां निष्पाद्य अद्वैतिनां ) सिसृक्षया प्रकृत्या सङ्गतो भवति (मते विषयभोगार्थं जीवात्मानं पृथक्कृत्य। नामरूपरहितस्य स्वस्य रूपनामनी लिप्सुः सृष्टिं विदधाति स एवायं परमपुरुषः।

अपि च ईदृशं परमात्मानं द्रष्टुम् योगिनः रेचकपूरकादिभिः ,उच्छ्वास निश्श्वासैः , यमनियमध्यानासन धारणादिभिः अष्टाङ्गमार्गैः ,कुम्भकादिभिः वायुनिरोधमार्गैश्च स एवाय ,योगमवलम्ब्य पश्यन्तिं परमपुरुषः। किन्त्वेतादृशो योगमार्गैरपि द्रष्टुमशक्योऽयम् भक्तसुलभः।

यः परमपुरुषः वेदेषु गोपनीयेषु च शास्त्रेषु अर्थात् वेदान्तेषु च प्रतिपादितः स्वेच्छया गुणत्रयमाश्रित्य सृष्टिस्थितिलयविधायकः। गुह्येषु शास्त्रेषु इत्यनेन वेदान्तविद्या विवक्षिता।

"विद्या ह वै ब्रह्मणमाजगाम

गोपाय त्वां शेवधिष्टेहमस्मि।

असूयकायानृतेऽवताय

तस्मै मा ब्रूया कतमञ्च नाह[1]।।"

"न नरेणावरेण प्रोक्त एष

सुविज्ञेयो बहुधा चिन्त्यमानः[2]"

अत्र "स वा अयं" इत्युक्त्वा श्लोकचतुष्टये यच्छब्देन अज्ञातः परमात्मातच्छब्देन , ज्ञातगुणस्वरूपः कृष्णः गृह्यते इति जहदजहल्लक्षणा।

यस्मिन् काले तमोगुणावेशेन राजानः अधर्मरताःतत्तदवसरे भगवान् स्वयमवतीर्णः , तान् धर्मे योजयति। यतश्चायं धर्मादिगुणसम्पन्नः।

"सत्यं – सत्यप्रतिज्ञत्वं– ऋतं , यथार्थोपदेशिकत्वं– दयां , भक्तकृपां– यशः , अद्भुतकर्मत्वं बिभ्रन् भगवानवतरती"ति श्रीधरः[3]।

विशिष्टाद्वैतसम्प्रदायवादिनः सम्प्रदायतः सर्वत्र भगवन्तं "अनन्तकल्याणगुणसम्पन्नः" परमात्मा नारायण" इति व्यवहरन्ति।

---

[1] निरुक्तम् - नैघण्टुक काण्डम्

[2] कठोपनिषत्8 - 2 - 1 -

[3] भावार्थदीपिका 15- 10 - 1 -

अत एव वीरराघवः " -भगं – ज्ञानादिकल्याणगुणसम्पत्तिं ,सत्यं वाचिकसुकृतं , ऋतम् – कायिकसुकृतं– दयां , मानसिकीं कृपां"यशश्च दधानः भुवमवतरति[1] , इत्याह।

एवं लोकानुग्रहार्थं युगे युगे सम्भवन् अयं पुरुषः इदानीं मधुवने श्रीकृष्णरूपेण भुवमवतीर्णः।

इदानीं द्वारका श्रीकृष्णस्थित्या लब्धप्रतिष्ठा स्वर्गस्योत्कृष्ठतामपि सर्वथा तिरस्करोति। यतः नारायणस्य स्मितपूर्वावलोकनम् तत्रत्याः सर्वदा पश्यन्ति।

मुनीनामप्यलभ्यं सौभाग्यम् कृष्णगृहीताभिः गोपीभिर्लब्धम्। अस्य विस्तरस्तु ) गोपिकास्तोत्रगीतासु दशमस्कन्धे वितनिष्यते।

याश्च स्त्रियः श्रीकृष्णेन गृहीताः यद्वा श्रीकृष्णं स्वयं वृतवत्यः तास्सर्वधा धन्याः। अत्र कृष्णगृहीतानां प्रति प्रशंसा प्रकटनेनापि नास्माकमेतादृशं सौभाग्यमिति वस्तुध्वन्यते।

अत्र यद्यपि स्त्रीणां भाषणे भगवतो महिमान एव उपवर्णिताः। तथाऽपि स्तोत्रान्ते तत्प्रियाप्रशंसनात् हस्तिनपुरुस्त्रीणामपि कृष्णगतारतिर्व्यज्यते।

यद्यप्यत्र भगवतः रतिनोपवर्णिता। तथाऽपि स्तोत्रसमनन्तरमेव हरिकृताभिनन्दन वर्णनेन स्तुतेः रसाभासत्वं परिहृतम्। अत्र भगवद्गता भक्तिः रतिरूपेण भावान्तरेण व्यमिश्रिता। अत्र श्रृङ्गाराभासत्वेऽपि न काचित् क्षतिः तस्य भक्तेरङ्गभूतत्वात्।

अत्र भगवानालम्बनम्। भगवद्दर्शनमुद्दीपनविभावः। तत्कृतदिव्यकर्मस्तोत्रमनुभावः। एतादृशं स्तोत्रं कृतवतीनां पुरस्त्रीणं उपपद्येत भगवद्विभूतिवर्णनपरत्वात्। हर्षविस्मयादयस्स्ञ्चारिणः इति समग्रा भक्तिरससामग्री सुसम्पन्ना।

---

[1] भागवतचन्द्रिका 15 - 10 - 1 -

## उपसंहारः

शीर्षकानुगुणं पुनः पुनरामूलाग्रं पठित्वा श्रीमद्भागवतपुराणे भगवता व्यासेन संदुग्धाः श्रीमन्नारायणदिव्यावतारभूतस्य कृष्णस्य तत्तद्भक्तैः तत्तत्प्रसङ्गेषु कृताः स्तुतयस्सर्वा अपि आदौ सङ्गृहीताः। ताश्च एकपञ्चाशदुपलभ्यन्ते। गुणिनिष्ठ गुणानुकीर्तनमिति स्तुतिलक्षणम् सर्वास्वेतासु सङ्गच्छते।

एतास्स्तुतयः अर्जुनः ,कुन्ती ,कालियः ,कालियपत्न्यः ,उद्धवः ,उत्तरा ,इन्द्रः ,अक्रूरः , ,ब्रह्मा ,बहुलाश्वः ,बलिः ,नलकूबरमणिग्रीवौ ,नारदः ,देवकी ,दन्तवक्त्रः ,जाम्बवान् ,गोपिकाः ,युधिष्ठिरः ,मुचुकुन्दः ,मुनिपत्न्यः ,मुनयः ,महेश्वरज्वरः ,भूमिः ,ब्रह्मादिदेवाः राजानः , ,सुदर्शनः ,सूतः ,सुरभिः ,श्रुतदेवः ,श्रीशुकः ,शिशुपालः ,वसुदेवः ,वरुणः ,रुद्रः ,रुक्मिणी – द्वारकावासिनः ,हस्तिनापुरस्त्रियः इत्येतेषां मुखेभ्यः निःसृताःतत्र पञ्चाशत् . उद् ,अर्जुनः ,सङ्ख्याकानां स्तोत्रूणां मध्ये नारदः पञ्चवासं गोपिकाः त्रिवारंधवः ,वसुदेवः , ब्रह्मादि देवाः प्रत्येकं द्विवारं श्रीकृष्णं स्तुत्वा आत्मनो रसनाम् ,भूमिः ,मुनयः राजानः कृतार्थीचक्रुः।

समुपलभ्यमानाः सर्वा अपि स्तुतयः

"दिव्यस्तोत्रं कर्मस्तोत्रं विधिस्तोत्रं तथैव च।

तथैवाभिजनस्तोत्रं स्तोत्रमेतच्चतुर्विधम्।।"

इत्युक-्तदिशा चतुर्धा विभक्तुं शक्यन्ते।

तथाऽपि काश्चन स्तुतयः कुत्रान्तर्भवन्तीति संशयमावहन्ति। अन्याः काश्चन लक्षणसाङ्कर्यात् कुत्रान्तर्भाव्या इति निश्चेतुं दुष्करं भवति। अतः पूर्वसूचितः चतुष्प्रकारको मार्गः नानुसृतः।

अथ पठितृजनसौकर्याय शोधप्रबन्धेऽस्मिन् श्रीकृष्णस्तुतयः कथं विभज्य प्रस्तोतव्या इति सुविचिन्त्य मार्गः कश्चन उन्नीतः। तथा हि – कः भगवन्तं स्तौति– ? भक्त एव केवलम्। भक्ताश्च –

"चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन।

आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ[1]।।"

इति भगवदुक्तदिशा चतुर्विधा भवन्ति। एवञ्च भक्तेषु विद्यमानं चतुर्विधत्वमवलम्ब्य तत्कृतासु स्तुतिष्वपि चतुर्विधत्वम् युक्तम्। अतः ,अर्थार्थस्तुतयः ,स्तुतयः आर्तस्तुतयः 51 ज्ञानस्तुतयः इति चतुर्धा विभक्ताः। प्रत्यक्षपरिशीलने कृते सति ज्ञानवतां ,जिज्ञासुस्तुतयः जिज्ञासूनाञ्च मध्ये अन्तरमतिस्ृवल्पमिति विदितम्। किञ्च श्रीकृष्णानुग्रहपात्रीभूतेषु धन्यचरितेषु भक्ताग्रगण्येषु ज्ञानवत् जिज्ञासु भेदोऽपि अवगन्तुं दुश्शकः। सर्वेऽपि ज्ञानिनः

---

[1] भगवद्गीता 16 - 7 -

जिज्ञासव इवाभान्ति। अतः ज्ञानवतां जिज्ञासूनाञ्च याः कृष्णस्तुतयः ताः एकीकृत्य एकस्मिन्नेव प्रकरणे सम्बद्धाः।

उक्तलक्षणातिरिक्ताः भक्ताः केचनान्ये अनुशीलनपथमायाताः। अतः तद्विहिताः स्तुतयः पृथगेव सङ्ख्यातव्याः खलु। तथा हि भक्तिप्रभेदेषु वैरभक्तिरपि वर्तते। वैरभक्ताः शिशुपालादयः। तैः कृताः व्याजस्तुतयः पृथगध्येतव्या इति तत्कृते पृथगेव वैरभक्तिस्तोत्राध्यायः परिकल्पितः।

एवमेव मधुरभक्तिरिति अन्यतमः प्रकारोऽस्तु भक्तेः। तदाश्रयभूतास्तु गोपी प्रभृतयः। तत्कृताः स्तवाः मधुरभक्तिप्रकरणे पृथग्प्रदर्शिताः।

भक्तः भगवन्तं भजति। स च तमनुगृह्णाति। एवमनुगृहीतो भक्तः सकृतज्ञं तं स्तौति। इत्थं कार्तज्ञेन कृतास्स्तुतयः श्रीमद्भागवते नैका उपलब्धा इति तासां पृथगेव गणः परिकल्पितः कार्तज्ञस्तुतय इति।

एवञ्च सर्वाः स्तुतयः .1आर्तस्तुतयः ,ज्ञानस्तुतयः .3 ,अर्थार्थ स्तुतयः .2 ,

.4कार्तज्ञ्यस्तुतयःइति षट्सु अध्यायेषु ,मधुरभक्तिस्तुतयः .6 ,वैरभक्तिस्तुतयः .5 , विभज्यानुशील्य प्रदर्शिताः।

सङ्कटे समुपस्थिते सर्वेऽपि जनाः भगवन्तं स्मरन्ति नमन्ति स्तुवन्ति च। भगवान् हि भक्तिसुलभः स्तुतिसुलभश्च। अतः आर्तिमवाप्ताः तदार्त्युपशमनाय भगवन्तं श्रीकृष्णमुद्दिश्य याः कृतीश्चक्रुःताः अस्मिन् प्रथमे ,ऽध्याये सङ्गृहीताः।

तत्रार्जुनः द्रौण्यस्त्रेण आर्तस्सन् प्रथमवारम्श्रीकृष्णवियोगार्त दुःखस्सन् द्वितीयवारं , तं स्तौति।

स्वगर्भविच्छेदभयार्ता उत्तराकृष्णनिर्याणदुःखार्ता ,श्रीकृष्णविरहार्ताः द्वारकावासिनः , स्वपतिप्राणहानित्रासार्ताः ,श्रीकृष्णजननानन्तरं सपदि कंसदुश्चेष्टार्ता देवकी ,भूमिः कालियपत्न्यः -जरासन्धपरिकल्पित परिक्लेशार्ता ,वैष्णवास्त्रसंत्रासार्तो माहेश्वरज्वरः , राजानश्चेत्येते कृष्णं स्तुत्वा आर्त्युपशमनमवापुः। अतस्तेषां स्तुतयः क्रोडीकृत्य अस्मिन् प्रथमेऽध्याये अनुशीलिताः।

देहिनां स्वभावोऽयम् यदभीप्सितं येनकेनाप्युपायेन साधनीयमिति। पौरुषान् प्रयत्नान् सर्वान् विधाय तेषु विफलीभूतेषु अभीप्सितार्थप्राप्तये भगवन्तं स्तुवन्ति। तादृशस्तुतयः द्वितीयेऽध्याये प्रदर्शिताः।

तथाहि – श्रीकृष्णस्य गुणसौन्दर्यादिकं श्रुत्वा तस्मिन्ननुरक्ता तमेव पतिं कामयमाना रुक्मिणी शिशुपालादीन् प्रमथ्य आत्मानमाहर्तुं कृष्णं प्रार्थयते। अनया कृष्णो मे पतिरस्तु

इत्यर्थं प्राप्तये क्रियमाणा स्तुतिः प्रथमा। तदनु अर्थार्थिन्या भूम्याक्रियमाणा स्तुतिः। सा हि भूदेवी स्वपौत्राय नरकस्य पुत्राय भगदत्ताय श्रीकृष्णादभयमभ्यर्थयन्ती श्रीकृष्णं तुष्टाव। इयं द्वितीया स्तुतिरस्य प्रकरणस्य। बहुलाश्वनामक कृष्णसखा कदाचित् स्वगृहागतं श्रीकृष्णं इतोऽपि किञ्चित् कालं ममातिथिर्भवेति समभ्यर्थयन् स्तौति। तथैव एकादशस्कन्धे ब्रह्मादिदेवाः परमात्मानं श्रीकृष्णं पुनर्वैकुण्ठागमनाय प्रार्थयन्ति। इत्थं चतसृभिः स्तुतिभिः अङ्गभूतैः निष्पन्नमिदं प्रकरणम्।

तृतीये ज्ञानप्रयक्तानि स्तोत्राणि परिशील्योपवर्णितानि। पुराणपितामहः सूतः। देवर्षिर्नारदः ,श्रीकृष्णप्रीतिभागुद्धवः ,योगीन्द्रश्शुकः ,गङ्गासुतो भीष्मः , स्वयम्भू ,मुचुकुन्दः ,अक्रूरः ,देवराडिन्द्रिः ,ब्र्ह्मादयो देवाः ,जगत्सूतेस्सूतिर्वसुदेवः चतुर्मुखः ,युधिष्ठिरः ,विश्वामित्रादि मुनयः ,भगवान् रुद्रः ,अमेयात्मा जाम्बवान् ,वरुणः , इत्येते सर्वे ,श्रुतदेवः ,बलिःऽपि जगत्तत्वविदः महाज्ञानिनःपरमात्मातत्वजिज्ञासवश्च कृष्णं , स्तुतयः अस्मिन् तृतीये 25 बहुधा अस्तुवन्। तत्कृताःऽध्याये परामृष्टाः।

चतुर्थेऽध्याये कार्तज्ञस्तुतयः विवेचिताः। उत्तरागर्भसंरक्षणद्वारा स्ववंशाङ्कुरं परीक्षितं ररक्षेति कुन्तीप्राणदण्डयोग्यस्यापि ,शापविमोचनं ददाविति नलकूबरमणिग्रीवौ , ,गोवर्धनमुद्धृत्य पाषाणवृष्टेः स्वसन्ततिमपादिति सुरभिः ,स्वस्य प्राणान् न जहारेति कालियः सर्परूपाद्विमुक्त इति सुदर्शनो नाम विद्याधरःजरासन्धबन्धनात् मुमोचेति राजानश्च कार्तज्ञं , प्रकटयन्तः श्रीकृष्णमस्तुवन्। ताः एताः षट् कार्तज्ञस्तुतयः चतुर्थेऽस्मिन्नध्याये निबद्धाः।

आगर्भवैरिणां शिशुपाल दन्तवक्त्रयोः व्याजस्तुतीः पञ्चमेऽध्याये प्रकाशेते।

अथान्तिमे षष्टेऽध्याये मधुरं मधुर भक्तिस्तवाः पञ्च प्रस्तुताः। तत्राद्यास्तिस्रः स्तुतयः श्रृङ्गाराभिपूर्णेन मनसा श्रीकृष्णमाराधयितुकामानाम् व्रजसुन्दरीणां गोपीनाम् स्तुतयः संस्थिताः। भ्रमरगीतिरिति लोकविश्रुता स्तुतिः आसामन्तिमा। तदनु श्रीकृष्णसौन्दर्यविमोहितानां हस्तिनपुरस्त्रीणांमुनिपत्नीनाञ्च स्तुतीस्तावादुपनिबद्धौ। एवं , पञ्चावयवात्मकेनानेन षष्टेन प्रकरणेन श्रीकृष्णस्तुत्यनुशीलनात्मकः अयं शोधांशः समाप्तिं नीतः।

एवञ्चात्र भक्ताः आर्त्याप्रेम्णा च स्तुवन्तीति ,वैरेण ,कृतज्ञतया ,ज्ञानेन ,अर्थार्थित्वेन , फलितम्। यद्यपिस्तुतेः निमित्तम् विविधानि भवन्ति। तथाऽपि भक्तिस्तु सर्वान्तर्गततया अन्तस्सूत्ररूपेण सञ्चरन्ति।

श्रीमद्भागवते श्रीकृष्णस्तुतीनां परिशीलनेनायं सारांशो निस्सरति -

पुराणवाङ्मये श्रीमद्भागवतस्य सर्वमहत्स्थानं वर्तते। तस्य च कारणं तत्प्रतिपाद्यांश एव। मनुष्यजन्मनः सार्धक्यं पुरुषार्थद्वारैव भवति। चतुर्णामपि पुरुषार्थानां साधनं

भक्तिर्भवितुमर्हति। सा च भक्तिः रसः। श्रीमद्भागवते भक्तिरसस्यैव प्रधान्यम्। स च रसः भक्तैः कृतेषु स्तोत्रेष्वभिव्यज्यते। तानि च स्तोत्राणि षोढा विभक्तुं शक्यन्ते। सर्वेष्वप्येतेषु स्तोत्रेषु सृष्टिस्थितिलयकारणभूतस्य गुणातीतस्यअतीन्द्रियस्य परब्रह्मणः अवताररूपः , कृष्णः प्रतिपाद्यते। स एव भागवतकथा नायकः। स्तुतीनामासां लक्ष्यभूतः।

पूर्वोक्तं स्तुतिविभजनम् सामान्यदृष्ट्या कृतम्। विशेषानुशीलने कृते सति तासां स्तुतीनां मध्ये तारतम्यम् परस्परभेदो वा नावगम्यते। यतो हि सर्वत्र भक्तिरेव प्रमुखो रसः। कृष्ण एवालम्बन विभावःतद्दर्शनस्पर्शनोपसर्पणमाहात्म्य श्रवणादयः उद्दीपन विभावाः। , निर्वेददैन्यचिन्तामोहस्मृति धृतिहर्षावेगादयव्यभिचारिणः। रोमाञ्चवेपथु अश्रुवैस्वर्यप्रभृतयः अनुभावाः। एवं सर्वत्राऽपि तैस्तैः भावैः भाव्यमानतां नीतः भगवद्रतिरूपः स्थायी भावः भक्तिरसरूपेण परिणमति।

एवं विधेन भक्तिरसेनाभिव्याप्ताः श्रीमद्भागवतान्तर्गताः श्रीकृष्णस्तुतयः न केवलं साहित्यरसिकानांरसास्वादं जनयन्ति। अपि तु जिज्ञासूनां मुक्तानां ,परब्रह्मास्वादसहोदरं , भक्तेः मोक्षसाधननिरूपणद्वारा परब्रह्मास्वादमेव जनयन्ति। ,श्रीकृष्णतत्वाविष्करणद्वारा भक्त्या स्तुतिः स्तुत्या मोक्ष इति तत्क्रमोऽवगन्तव्यः। तथा च श्रीकृष्णस्तुतीनामासाम् भक्तिरसाभिपूर्णानाम् मोक्षसाधनत्वमव्याहतम्।

स्तुतिरियम् द्वैतदर्शनानुगुणा। इयञ्च द्वैतानुगुणा इति तत्तत्स्थलेषु तत्तद्दर्शनानां प्रभावोऽस्तीति च यदुच्यते तत्केवलं अनवधारितस्तोत्रतत्वप्रुक्तमात्रम्। तथा हि – आपाततः केषुचित् स्तोत्रेषु केषाञ्चन दर्शनानां प्रभावोऽस्तीति भाति। तदसत्। -

स्तुतीनां सर्वासामपि लक्ष्यमेकमेव श्रीकृष्णतत्वम्। तञ्च दर्शनातीतम्। दर्शनातीतमिदं कृष्णतत्वम् वेत्तुं भक्तिरेव साधनम् न तु दर्शनानि। एवञ्च कृष्णतत्वाधिगमाय दर्शनानि न तथा प्रयोजकानि भवन्ति यथा भक्तिः। अत एव उक्तम् " -मोक्षोपायेषु बहुषु भक्तिरेव गरीयसीति[1]"

अथवा भगवान् तत्तद्दार्शनिकैः विभिन्नतया लक्षितोऽपि सर्वदर्शनानां साधुत्वं सम्पादयन् सर्वलक्षणसम्पन्नो भवति। अतः दर्शनैरपि भगवान् वेत्तुं शक्य इति नानर्थकत्वं दर्शनानाम्।

"गुणात्मन स्तेऽपि गुणान् विमातुं ,

हितावतीर्णस्य कईशिरेऽस्य

[1] विवेकचूडामणिः 31-

कालेन यैर्या विमितास्सुकल्पै

भूपांसवः खे मिहिकाद्युभासः[1]।।"

श्लोकोऽयं सगुणब्रह्मवादिनां विशिष्टाद्वैतिनाम् मतमनुसरन्निव यद्यपि वर्तते तथाऽपि नात्र तद्दर्शनसिद्धान्तस्य प्राधान्यम् किन्तु भक्तेरेव।

"स वै भवान् वेद समस्त गुह्यं

मुपासितो यः पुरुषः पुरणः।

परावरेशो मनसैव विश्वं

सृजत्यवत्यत्ति गुणैरसङ्गः।।[2]"

इयं स्तुतिः अद्वैतदर्शनानुगुणेवाभाति। तथाऽप्यत्रापि तात्पर्यं कृष्णभ्कतावेव। यतो हि-

"जिज्ञासितमधीतञ्च

ब्रह्म यत्तत्सनातनम्।

तथाऽपि शोच्यस्यात्मानं

अकृतार्थ इव प्रभो।।[3]"

इत्यादिना कृष्णतत्वस्य परब्रह्मात्मकतया ध्येयत्वमुक्तम्। तस्मात् दर्शनानि भगवत्स्तुतिषु प्राधान्यमावहन्तीति स्पष्टम्।

किञ्च यदि दर्शनानुकूलमेव स्तोत्राणि विभज्यानीति चेत् – अर्थात् द्वैतस्तोत्राणि , – साङ्ख्यस्तोत्राणीति ,अद्वैतस्तोत्राणि तर्हि एकस्यैव स्तोत्रस्य नानादार्शनिकैः स्वस्वदर्शनानुकूलं व्याख्यानं कृते सति तत् स्तोत्रम् कस्मिन् दर्शनेऽन्तर्भाव्यमिति प्रश्नस्य किमुत्तरं दातुं शक्यते? अतः वक्तव्यम् यच्छ्रीमद्भागवते कृष्णस्तुतयस्सर्वा अपि दार्शनिकदृष्टिमतीत्य भक्तिचक्षुषा द्रष्टव्या इति। सिद्धम् यद्दर्शनानि स्तोत्रविभागे तदर्थनिरूपणेन नियामकानि न भवन्तीति। उक्तञ्च –

"त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति

प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।

---

[1] X श्रीमद्भागवतम् 7 - 14 -

[2] 6 - 5 - 1

[3] श्रीमद्भागवतम् 4 - 5 - 1 -

श्रुतीनां वैचित्र्यात् ऋजुकुटिलनानाफलजुषां

नृणामेको गम्यः त्वमसि पयसामर्णव इव।।[1]"

किञ्च एवमेव दार्शनिकश्रेष्ठः भक्ताग्रणीः हनुमन्नाटककर्ताऽपि एवमेवाऽभिप्रयति –

"यं शैवास्समुपासते शिव इति ब्रह्मेति वेदान्तिनःबौद्धा बुद्ध इति प्रमाणपटवः कर्ते ,ति नैयायिकाः। अर्हन्नित्यथ जैनशासनपराकर्मेति मीमांसकाः। सो -ऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः।।[2]"

तथा च श्रीकृष्णस्तुतिषु प्रतिपाद्यं यत् कृष्णतत्वम् तदितं नानादर्शितलक्षितम्तथैव , नानादर्शनातीतञ्च सत् विराजते।

केवलयाऽपि भक्त्या भगवत्तत्वमवाप्य संसारसागराद्विनिर्मुक्ताः बहवो दृश्यन्ते लोके।

"तदप्राप्ति महादुःखनिलीनाशेषपातकाः।

तच्चिन्ताविपुलाह्लाद क्षीणपुण्यचया तथा।।"

इति वर्णिताः गोप्य एवात्र उदाहरणम्।

स्तुतीनामनुशीलनस्य फलमन्यदपि वर्तते –

"भेजिरेमुनयोऽथाग्रे भगवन्तमधोक्षजम्।

सत्वं विशुद्धं क्षेमाय कल्पन्ते ये नु तानिह।।[3]"

इति भागवतोक्तदिशा अधोक्षजं ध्यायन्तः जनाः विशुद्धं क्षेमं लभन्ते इति स्वयमेव स्पष्टीभवति।

श्रीमद्भागवतस्थासु श्रीकृष्णस्तुतिषु श्रीकृष्णतत्वमेव प्राधान्येन प्रतिपादितमिति बहुवारमुक्तम्। एवं विधानुशीलनेन श्रीकृष्णतत्वे साक्षात्कृतेसति किं भवतीति प्रश्नस्योत्तरं श्रीमद्भागवतकर्तुः व्यासस्यैव मुखेन दाप्यते।–

"भिद्यते हृदयग्रन्थिच्छिद्यन्ते सर्वसंशयाः।

क्षीयन्ते चास्यकर्माणि दृष्ट एवात्मनीश्वरे[4]।।"

---

[1] पुरुषदत्त कृत शिवमहिम्नस्तोत्रम्

[2] हनुमन्नाटकम् - प्रथमाङ्कः प्रस्थावना।

[3] श्रीमद्भागवतम् 26 - 2 -1 -

[4] पूर्वत्र23 -2 - 1 -

इतोऽनयत् किमपेक्ष्यते सहृदयैः तत्रभवद्भिः। अत एव व्यासो विसृजत् निश्चप्रचम् वचः-

"अतो वै कवयो नित्यं भक्तिं परमया मुदा

वासुदेवे भगवति कुर्वन्त्यात्मप्रसादिनीम्[1]।।"

स्वोक्तं स्वयमेवावलम्ब्य दर्शयितुकामो व्यासः महन्ति श्रीकृष्णस्तोत्ररत्नानि तत्र तत्र उपनिबध्य सर्वपुराणमकुटायमानमिदं श्रीमद्भागवतमलङ्कृत्य चिरस्मरणीयो जातः।

लोके तैस्तैः जनैः तास्ताः कामाः काम्यन्ते। मोक्षः परं सर्वैरपि सर्वदाऽपि संप्रार्थ्यते। स तु परमदुर्लभः। भगवत्तत्वविज्ञानरूपः अयं मोक्षः। नानादर्शनोपबृंहितान् वेदानधीत्य तद्विहितानि कर्माण्यनुष्ठाय तदन्ते निगूढमुपपादितम् अमृतत्वमुपास्य विरलविरलाः अतिकष्टेन अपवर्गमाप्नुवन्ति। एवं सति का कथा सामान्यजनानाम्।

विशिष्य स्त्रीशूद्रद्विजबन्धूनम्।

कृपालुः कारणजन्मा कृष्णद्वैपायनःताननुजिघृक्षया वेदसारमुद्धृत्य श्रीमद्भागवते आपूर्यसमर्पयामास। यथोक्तम् पूर्वं वेदसारस्य भागवतस्य सारः श्रीकृष्णस्तवसमूह एव। , स च भक्तिद्वारा मोक्षप्रदो भवति। यदुच्यते अद्वैतिभिः – ज्ञानमेव मोक्षसाधनमिति – न तस्य विरोधः ईषदप्यत्र शङ्कनीयः। यतो हि श्रीकृष्णस्तुत्या अनुप्राणितो भक्तिविशेषःअथवा , स्तुत्युपजीवको वा भक्तिविषयः आशु मोक्षसाधनभूतम् ज्ञानमुत्पाद्यैव पुरुषं संसारान्मोचयति।

शोधप्रबन्धेऽस्मिन् सङ्गृहीताः सर्वेऽपि स्तवाः न केवलं भक्तिं द्रढयन्ति। किन्तु मोक्षोपयोगिज्ञानमपि जनयन्तीति तत्स्तुतिसंशोधनेन स्पष्टीबभूव। अतः वेदानांयथा वा , दर्शनानां तथैव अत्रोपनिबद्धानां श्रीकृष्णस्तुतीनामपि मोक्षसाधनत्वं प्रतिपाद्यते।

किञ्च साधनान्तरापेक्षया इदम् सुलभतरमित्येतत् विदितचरमेव विदुषाम्।

वैदिककर्मानुष्ठानेनदार्शनिकतत्त्वसंविदा च मोक्षप्राप्तिः ,उपनिषद्रहस्यसंयोजनेन , – लोकप्रसिद्धा। श्रीमद्भागवतस्य श्रीकृष्णस्तुतीनामनुशीलनेनेदं ज्ञायते

यत् सम्भोगाभिलाषोऽपि मोक्षहेतुर्भवतीति –।

तथा हि शोधप्रबन्धस्यास्य षष्टेऽध्याये प्रेमोल्लसन्मानसानां , हरिस्मरणमात्रपुलकिताङ्गयष्टीनाम् गोपीनाम् मुखाद्गलितं स्तोत्रमधु सङ्गृहीतम्। कृष्णं – पतिं कामयमाना स्ताः गोप्यः

[1] श्रीमद्भागवतम् 22 - 2 - -

"व्यक्तं भवान् व्रजजनार्तिहरोऽभिजातो

देवो यथादिपुरषस्सुरलोकगोप्ता।

तन्नो विधेहि करपङ्कजमाप्तबन्धो

तप्तस्तनेषु च शिरस्सु च किङ्करीणाम्[1]।।

इति तु कृष्णं प्रार्थयामासुः। अन्ते तासामिच्छा परिपूरितो भगवता। तत्र –

"ता वार्यमाणाः पतिभिः पितृभिर्भ्रातृबन्धुभिः।

गोविन्दापहृतात्मानो न न्यवर्तन्त काश्चन।।

दुस्सहप्रेष्ठविरह तीव्रतापधृताशुभाः।

ध्यानप्राप्ताच्युताश्लेष निर्वृत्या क्षीणमङ्गलाः[2]।।"

एवं कृष्णैकायत्तचित्ताः ताः अबलाः तमवाप्य धन्या बभूवः।

केवल विषयाभिलाषः मोक्षसाधनं कथं भवतीति शङ्कनीयम्। गोपीनां श्रीकृष्णरतिः - – भक्तिपरिगृहीता। मोक्षपर्यन्तानुधाविनी। ताः स्वयमेवोचुः

"मैवं विभोऽर्हति भवान् गदितुं नृशंसः

संत्यज्य सर्वविषयांस्तव पादमूलम्।

भक्ता भजस्व दुरवग्रहमात्यजास्मान्।

देवो यथादि पुरुषो भजतो मुमुक्षून्[3]।।"

अतः भक्ति परिगृहीतवैषयिकेच्छाऽपि मोक्षहेतुर्भवतीति गोपीकृतश्रीकृष्णस्तुतीनां परिशीलनेन स्पष्टीभवति।

अनेन परिशोधनेन इदमपि व्यज्यतेयद्वैरेणापि भगवन्निष्ठया मोक्षो जायते इति। अस्मिन् शोधप्रबन्धे पञ्चमेऽध्याये शिशुपालदन्तवक्त्रयोः स्तुतिद्वयमुपनिबद्धम्। श्रीकृष्णे बद्धवैरौ तौ निन्दाव्याजेन तं स्तुतवन्तौ। अन्ते तावपि मोक्षं प्राप्तौ।

---

1 श्रीमद्भागवतम् -X 41 - 29 -

2 श्रीमद्भागवतम् -X8- 29 -

3 श्रमद्भागवतम् -X31- 29 -

"सदसत्पतीनतिक्रम्य गोपोऽयं कुलपांसनः।

यथा काकः पुरोडाशं सपर्यां कथमर्हति[1]।।"

अत्र स्तुतिस्तु – गोपः वेदपृथिव्यादिपालक इत्यर्थः। कुत्सितं वेदविपरीतं लपन्तीति कुलपाः पाषण्डाः ,कं च अकञ्च काके ,तान् असते घातयतीति कुलपांसनः। अकाकः , सुखदुःखे ते न विद्येते यस्य सः अकाकः आप्तकाम इत्यर्थः। स यथा आप्तकामो देवयोग्यं केवलं पुरोडाशादि मात्रं नार्हतिअपि तु सर्वस्वमपि। तथा ,ऽयं श्रीकृष्णोऽपि ब्रह्मर्षियोग्यं सपर्यामात्रं कथमर्हति किन्तु स्वात्मसमर्पणमप्यर्हतीत्यर्थः[2]।

एवं शिशुपालस्य निन्दायां स्तुतिर्व्यर्जते। तथैव –

"चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत्।

पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता[3]।।" इति।

तदित्थं त्रैकरणिकेन भगवद्वैरानुबन्धेनापि मोक्षो जायत इति अनेनानुशीलनेन स्पष्टीभवति।

वेदनां सारः पुराणेषु सङ्गृहीतः। पुराणानां सारः श्रीमद्भागवतम्। श्रीमद्भागवतस्य सारः श्रीकृष्णस्तुतिसमूहः। यदि स्तुतीनामासां सर्वासामप्येकवाक्यता आपाद्यते तदा इदमेव पर्यवसितं भवति – यल्लोकातीतम् द्वन्द्वातीतम् विज्ञानधनम् परमात्मनः श्रीकृष्णस्य स्वरूपमेव सर्वेषां अर्थात् स्त्रीणां ब्रह्मबन्धूनामपि ध्येयं ज्ञेयं प्राप्यञ्च भवतीति। तदुक्तं भागवते एव –

मुमुक्षवो घोररूपान् हित्वा भूतपतीन्स्तथा।

नारायणकलाश्शान्ताः भजन्ते ह्यनसूयवः।।

रजस्तमः प्रकृतयः समशीला भजन्ति वै।

पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः।।

वासुदेवपरा वेदाः वासुदेवपरा मखाः।

वासुदेवपरा योगावासुदेवपराः क्रियाः।। ,

वासुदेवपरं ज्ञानं वासुदेवपरं तपः।

वासुदेवपरो धर्मो वासुदेवपरा गतिः[4]।।"

---

[1] पूर्वत्र -X35 - 74 -

[2] भावार्थदीपिका -X35 - 74 -

[3] श्रीमद्भागवतम् -X46 - 74 -

[4] श्रीमद्भागवतम् पर्यन्तम् 304 प्रभृति 27- 2 - 1 -

इति। तथा च –      "कायेन वाचा  मनसेन्द्रियै र्वा

बुध्यात्मना वा प्रकृते स्स्वाभावात्।

करोमि यद्यत्सकलं परस्मै

नारायणायेति समर्पयामि।। "

*************************                  *******

## अर्जुनकृता स्तुतिः

22-7-1)प्रभृति(श्लोकाः 25

कृष्ण कृष्ण महाबाहो ,भक्तानामभयङ्कर।

त्वमेको दह्यमानानामपवर्गोऽसि संसृते।।

त्वमाद्यः पुरुषस्साक्षादीश्वरः प्रकृतेः परः।

मायां व्युदस्य चिच्छक्त्या केवले स्थित आत्मनि।।

स एव  जीवलोकस्य मायामोहितचेतसः।

विधत्से स्वेन वीर्येण श्रेयो धर्मादिलक्षणम्।।

तथाऽयञ्चावतारस्ते भुवो भारजिहीर्षया।

स्वानाञ्चानन्यभावानामनुध्यानायचासकृत्।।

## अर्जुनकृता स्तुतिः

वञ्चितोऽहं महाराज हरिणा बन्धुरूपिणा।

येन मेऽपहतं तेजौ देव विस्मापनं महत्।।1

यस्य क्षणवियोगेन लोको ह्यप्रियदर्शनः।

उक्थेन रहितो ह्येष मृतकप्रोच्यते यथा।।2 -

यत्संश्रयाद्द्रुपदगेहमुपागतानां

राज्ञां स्वयंवरमुखे स्मरदुर्मदानाम्।

तेजो हृतं खलु मयाभिहतश्चमत्स्य –

स्सज्जीकृतेन धनुषाऽधिगता च कृष्णा।।3

यत्सन्निधावहमु खाण्डवमग्नयेऽदा-

मिन्द्रञ्च सामरगणं तरसा विजित्य।

लब्धा सभा मयकृताद्भुतशिल्पमाया

दिग्भ्योऽहन्नृपतयो बलिमध्वरे ते।।4

यत्सन्निधौ नृपशिरोङ्घ्रिमहन्मरवार्य

मार्योऽनुजस्तव गजायुतसत्ववीर्यः।

तेनाहृताः प्रमथनाथमखाय भूपा

यन्मोचितास्समवयन् बलिमध्वरे ते।।5

पत्न्यास्तवाधिमरवक्लिप्तमहाभिषेक-

श्लाधिष्टचारुकबरम् कितवैस्सभायाम्।

अग्रेचरो मम विभोरथ युथपाना-

मायुर्मनांसि च दृशासह ओज आर्भत्।।6

यद्दोर्षु मा प्रणिहितं गुरुभीष्मकर्ण

द्रौणित्रिकर्तशलसैन्धवबाह्लिकाद्यैः।

अस्तर्ण्यमोघमहिमानि निरूपितानि

नोपस्पृशुन्न हरिदासमिवासुराणि।।7

सौत्ये वृतः कुमतिनात्मद ईश्वरो मे

यत्पादपद्ममभवाय भजन्ति भव्याः।

श्रान्तवाहमरयो रयिनो भुविष्ठं

न प्राहरन्यदनुभावनिरस्तचित्ताः।।8

नर्माण्युदाररुचिरस्मितशोभितानि

हे पार्थ रेऽर्जुनसखे कुरुनन्दनेति।

सञ्जल्पितानि नरदेव हृदि स्पृशानि

स्मर्दुर्लुठन्ति हृदयम्मम माधवस्य।।9

शय्यासनाटन विकस्थन भोजनादि-

ष्वैक्यद्वयस्य ऋतवानिति विप्रलब्धः।

सख्युस्सखेन पितृवत्तनयस्य सर्वं

सेहे महामहितया कुतेरघं मे।।10

सोऽहं नृपेन्द्र रहितः पुरुषोत्तमेन

सख्या प्रियेण सुहृदा हृदयेन शून्यः।

स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्या

यैस्तत्स्त्रियो कृतहतेशविमुक्तकेशाः।।11

यो नो जुगोप वनमेत्य दुरन्तकृच्छ्रात्

दुर्वासयोरिचितादयुताग्रभुग्यः।

शाकान्नशिष्टमुपयुज्ययतस्त्रिलोकीं

तृप्ताममंस्त सलिले विनिमग्नसंधः।।12

यत्तेजसा स भगवान्युधि शूलपाणि

र्विस्मापित स्स् गिरिजोऽस्त्रमदान्निजं मे।

अन्येऽपि चाहममुनैव कलेबरेण
प्राप्तो महेन्द्रभवने महदासनार्थम्।।13
तत्रैव मे विहरतो भुजदण्डयुग्म्
गाण्डीवलक्षणमरातिवधाय देवाः।
सेन्द्रश्श्रिताः यदनुभावितमाजमीढ
तेनाह्मद्य मुषितः पुरुषेण भूम्ना।।14
यद्बान्धवः कुरुकुलाब्धिमनन्तपार-
मेको रथेन ततराहमतार्थसत्वम्।
प्रत्याहृतं पुरुधनं च मया परेषाम्
तेजः पदं मणिमयञ्च हृतं शिरोभ्यः।।15
यो भीष्मकर्णगुरुशल्यचमूष्वदभ्र
राजन्यवर्यरथमणडलमण्डितासु।
अध्वन्युरुक्रमपरिग्रहमङ्गरक्षन्
गोपै रसद्भिरबलेव विनिर्जितोऽस्मि।।16
तद्वै धनुस्त इषवस्सरथो हया स्ते
सोऽहं रथी नृपतयो यत आमनन्ति।
सर्वं क्षणेन तदभूदसदीशरिक्तं
भस्मन् हुतं कुहकराद्धमिवोप्तमूष्याम्।।17
राजन् स्वत्वयाभिपृष्टानां सुहृदां न स्सुहृत्पुरे।
विप्रशापविमूढानां निघ्नतां मुटिभिर्मिथः।।18,
वारुणीं मदिरां नीत्वा मदोन्मथितचेतसाम्।
अजानतामिवान्योन्यं चतुः पञ्चावशेषिताः।।19
प्रायेणैतद्भगवत ईश्वरस्य विचेष्टितम्
मिथो निघ्न्ति भूतानि भावन्ति च यन्मिथः।

जलौकसां जले यद्रन्महान्तोदन्त्यणीयसः
दुर्बलान्बलिनो राजन् महान्तो बलिनोमिथः।।20
एवं बलिष्ठैर्यदुभिर्महद्भिरपरान् विभुः।
यदून्यदुभिरन्योन्यं भूभारान् सञ्जहार ह।।21
देश कालार्थयुक्तानि हृत्तापोपशमानि च।
हरन्तिस्मरतश्चित्तं गोविन्दाभिहितानि मे।।प् 5-15-1) 22रभृति (28

## उत्तराकृतस्तुतिः

9,10-8-1)श्लोकाः(

पाहि पाहि महायोगिन् देवदेव जगत्पते

नान्यं त्वदभयं पश्येयत्र मृत्यः परस्परम्।। ,1

अभिद्रवति मामीशशरस्तप्तायशो विभो। ,

कामं दहतु मां नाथमा मे गर्भो निपात्यताम्।। ,2

## **द्वारकावासिभिः कृतस्तुतिः**

6-11-1)प्रभृति (श्लोकाः 9

नताः स्म हे नाथ तवाङ्घ्रिङ्कजं
विरिञ्चिवैरिञ्चसुरेन्द्रवन्दितम्।
परायणं क्षेममिहेच्छतां परं
न यत्र कालः प्रभवेत्परः प्रभुः।।1
भवाय नस्त्वं भव विश्वभावन,
त्वमेव मातात्मसुहृत्पिता पतिः।
त्वं सङ्गुरुर्नः परमञ्च दैवतम्
यस्यानुवृत्या कृतिनो बभूविम।।2
अहो सनाथा भवतास्स्म यद्वयं
त्रैविष्टपानामपि दूरदर्शनम्।
प्रेमस्मितस्निग्धनिरीक्षणाननं
पश्येम रूपं तव सर्वसौभगम्।।3
यर्ह्यम्बुजाक्षापससार भो भवान्
कुरुन्मधून्वाथ सुहृद्दिदृक्षया।
तत्राब्जकोडिप्रतिमः क्षणोऽभव-
द्रवेर्विनाक्ष्णामिव नस्तवाच्युत।।4

## भूमिकृता स्तुतिः

27-16-1)प्रभृति (पर्यन्तम् 36

भवान् हि वेद तत्सर्वं यन्मां धर्मानुपृच्छसि।
चतुर्भिर्वर्तसे येन पादैर्लोक सुखावहैः।।
सत्यं शौचं दया क्षान्तिस्त्यागस्सन्तोष आर्जवम्।
शमो दमस्तपस्साम्यं  तितिक्षोपरतिश्श्रुतम्।।
ज्ञानं विरक्तिरैश्वर्यम् शौर्यं तेजो बलस्स्मृतिः।
स्वातन्त्र्यं कौशलं कान्तिर्धैर्यं मार्दवमेव च।।
प्रागल्भ्यं प्रश्रयश्शीलं सह ओजो बलं भगः।
गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहङ्कृतिः।।
एते चान्ये च बहवो यस्मिन्नित्या महागुणाः
प्रार्थ्या महत्वमिच्छद्भि र्नवियन्तिस्म कर्हिचित्।।
तेनाहं गुणपात्रेण श्रीनिवासेन साम्प्रतम्
शोचामि रहितं लोकं पाप्मना कलिनेक्षितम्।।
आत्मानञ्चानुशोचामि भवन्तञ्चात्मरोत्तमम्।
द्वेवानृषीन्पितृन् साधून् सर्वान्वर्णाश्रमान्स्तथा।।
ब्रह्मादयो बहुतिथं  यद्पाङ्गमोक्ष-
कामास्तपस्समचरन्भगवत्प्रपन्ना,
सा श्रीस्स्ववासमरविन्दवनं विहाय ,
यत्पादसौभगमलं भजतेऽनुरक्ता।।
तस्याहमब्जकुलशाङ्कुशकेतुकेतैः
श्रीमत्पदैर्भगवतस्समलङ्कृताङ्गीष
त्रीनत्यरोच उपलभ्य ततो विभूतिं
लोकान् समां व्यसृजदुत्स्मयतीं तदन्ते।।

यो वै ममातिभरमासुरवंशराज्ञा
मक्षोहिणीशतमपानुपददात्मतन्त्रः।
त्वां दुस्स्यमूनपदमात्मनि पौरुषेण
सम्पादयन् यदुषु रम्यमविभ्रदङ्गम्।।
का वा सहेत विरहं पुरुषोत्तमस्य
प्रेमावलोकसुचिरस्मितवल्गुजल्पैः।
स्थैर्यं समानमहरन्मधुमानिनीनाम्
रोमोद्गमो मम यदङ्घ्रिविटङ्कतायाः।।

## देवकीकृतस्तुतिः

रूपं यत्तत्प्राहुरव्यक्तमाद्यं
ब्रह्मज्योतिर्निर्गुणं निर्विकारम्।
सत्तामात्रं निर्विशेषन्निरीहम्
सत्वं साक्षाद्विष्णुरध्यात्मदीपः।।1
नष्टे लोके द्विपरार्थावसाने
महाभूतेष्वादिभूतं गतेषु।
व्यक्तेऽवयक्तं कालवेगेन याते
भवानेकश्शिष्यते शेषसंज्ञः।।2
योऽयं कालस्तस्य तेऽव्यक्तबन्धो
चेष्टामाहुश्चेष्टते येन विस्वं।
निषेषादिर्वत्सरान्तो महीयान्-
स्तत्वेशानं क्षेमधाम प्रपद्ये।।3
मर्त्यो मृत्युव्यालभीतः पलायन्
सर्वान् लोकान्निर्भयं नाध्यगच्वत्।
त्वत्पादाब्जं प्राप्य यद्दच्छयाऽद्य
स्वस्यश्शेते मृत्युरस्मादपैति।।4
स त्वं घोरादुग्रसेनात्मजान्न
स्त्राहि त्रस्तान् भृत्यवित्रासहासि।
रूपं चेदं पौरुषं ध्यानधिष्ण्यं
मा प्रत्यक्षं मां सद्दशां कृषीष्ठाः।।5
जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन।
समुद्विजे भवद्धेतोः कसादहमधीरधीः।।6
उपसंहर विश्वात्मन् अदो रूपमलौकिकम्।

शङ्खचक्रगदापद्मश्रियाजुष्टं चतुर्भुजम्।।7

विश्वं यदेतत्स्वतनौ निशान्ते

यथावकाशं पुरुषः परो भवान्।

बिभर्ति सोऽयं मम बर्भजोऽभू-

दहो नृलोकस्य विडम्बनं महत्।।8

24-3-10)प्रभृति (पर्यन्तं 31

## कालियपत्नी कृतस्तिः

न्याय्यो हि दण्डः कृतकिल्बिषेऽस्मिन्

तवावतारः खलनिग्रहाय।

रिपोस्सुतानामपि तुल्यदृष्टे

र्धत्से फलं धर्ममेवानुशंसन्।।1

अनुग्रहोऽयं भवता कृतो हि नो दण्डोऽसतां ते खलु कल्मषापहः।

यद्दन्दशूकत्वममुष्य देहिनः क्रोधोऽपि तेऽनुग्रह एव सम्मतः।।2

तपस्सुतप्तं किमनेन पूर्वं

निरस्तमानेन च मानदेन।

धर्मोऽथवा सर्वजनानुकम्पया

यतो भवान्स्तुष्यति सर्वजीवः।।3

कस्यानुभावोऽस्य न देव विद्महे

तवाङ्घ्रिरेणुस्पर्शाधिकारः।

यद्वाञ्छया श्रीललना चरत्तपो

विहाय कामान् सुचिरं धृतव्रता।।4

न नाकपृष्ठं न च सार्वभौमम्

न पारमेष्ट्यं न रसाधिपत्यम्।

न योगसिद्धिर्न पुनर्भवं वा

वाञ्छन्ति यत्पादरजः प्रपन्नाः।।5

तदेषनाथापदुरापमन्यै

स्तमोजनिः क्रोधवशो हयहीन्द्रः।

संसारचक्रे भ्रमतश्शरीरिणो

यदिच्चतस्स्याद्विभवस्समक्षम्।।6

नमस्तुभ्यं भगवतेपुरुषाय महात्मने। ,

भूतावासाय भूता पराय परमात्मने।।7
ज्ञानविज्ञाननिधये ,ब्रह्मणेऽनन्तशक्तये
अगुणायाविकारायनमस्ते प्राकृताय च।।8 ,
कालाय कालनाथायकालव्यवसाक्षिणे। ,
विस्वाय तदुपद्रष्टे तत्कर्त्रे विस्वहेतवे।।9
भूतमात्रेन्द्रियत्राण मनोबुध्याशयात्मने।
त्रिगुणेनाभिमानेन गूढस्वात्मानुभूतये।।10
नमोऽनन्ताय सूक्ष्मायकूटस्थाय विपश्चि ,ते।
नाना वादानुरोधाय वाच्यवाचकशक्तये।।11
नमः प्रमाणमूलायकवये शास्त्रयोनये ,
प्रवृत्ताय निवृत्ताय निगमाय नमो नमः।।2
नमः कृष्णाय रामाय वसुदेवसुताय च।
प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः।।13
नमो गुणप्रदीपाय गुणात्मच्छादनाय च
गुणवत्युपलक्ष्याय गुणद्रष्ट्रे स्वसिंविदे।।14
अव्याकृतविहारायसर्वव्याकृतिसिद्धये। ,
हृषीकेश नमस्तेऽस्तु मुनये मौनशीलिने।।15
परापरगतिज्ञाय सर्वाध्यक्षाय ते नमः।
अविश्वाय च विश्वाय तद्द्रष्ट्रेऽस्य च हेतवे।।16
त्वह्यस्य जन्मस्थिति संयमान् विभो
गुणैरनीहो कृतकालशक्तिधृत्।
तत्रत्स्वभावान् प्रतिबोधयन् सत-
स्समीक्षयामोधविहार ईहसे।।17
तस्यैव तेऽस्तनवस्त्रिलोक्यां

शान्ता प्रियास्ते ह्यधुनावितुं सतां
स्थातुश्च ते धर्मपरीप्सये हतः।।18
अपराधस्सकृद्भर्त्रा सोढव्यस्स्वप्रजाकृतः।
क्षन्तुमर्हसि सर्वात्मन् मूढस्य त्वामजानतः।।19
अनुगृहीष्व भगवन् प्राणान्सत्यक्ष्यति पन्नगः।
स्त्रीणां न स्साधु शोच्यानां पतिःप्राणः प्रदीयताम्।।20
विधेहि ते किङ्करीणामनुष्ठेयं तवाज्ञया।
यच्छ्रद्धया नुतिष्ठन् वै मुच्यते सर्वबन्धनात्।।(53 प्रभृति 37-16-10)    21

**महेश्वरज्वरकृता स्तुतिः**

नमामि त्वाऽनन्तशक्तिं परेशं ,
स्वात्मानं केवलं ज्ञप्तिमात्रम्।
विश्वोत्पत्तिस्थान संरोधहेतुं,
यत्तद्ब्रह्म ब्रह्मलिङ्ग प्रशान्तम्।।1
कालो दैवं कर्मजीवस्स्वभावो
द्रव्यं क्षेरं प्राण आत्मा विकारः।
तत्संघातो बीजरोहप्रवाह-
स्त्वन्मायैषा तन्निषेधं प्रपद्ये।।2
नानाभावैर्लीलयैर्वोपपन्नै-
र्देवान् साधून् लोकसेतून् बिभर्षि।
हस्युन्मार्गान् हिंसया वर्तमानान्
जन्मैतत्ते भारहाराय भूमेः।।3
तत्वोऽहं ते तेजसा दुस्सहेन
शान्तोग्रेणात्युल्बप्लेन ज्वरेण।
तावत्तापो देहिनां तेऽङ्घ्रिमूलम्

नो सेवेरन् यावदाशानुबद्धाः।।

26-63- 10)प्रभृति (29

## राजभिः कृता कृष्णस्तुतिः

कृष्ण कृष्णाऽप्रमेयात्मन् प्रपन्न भयभञ्जन।
वयं त्वां शरणं यामो भवभीताः पृथग्दृशः।।1
लोको विकर्मनिरतः कुशले प्रमत्तः
कर्मण्ययं त्वदुदिते भवदर्चने स्वे।
यस्तावदस्य बलवानिह जीविताशां
सद्यश्छिनत्यनिमिषाय नमोऽस्तु तस्मै।।2
लोके भवान्भगवतः कलयावतीर्ण
स्सद्रक्षणाय खलनिग्रहणाय चान्यः।
कश्चित्त्वदीयमतियाति निदेशमीश,
किं वा जनस्स्वकृतमृच्छति तन्नविद्मः।।3
स्वप्नायितं नृपसुखं  परतन्त्रमीश
शश्वद्भयेन मृतकेन धुरं वहामः।
हित्वा यदात्मनि सुखं त्वदनीहलभ्यम्
क्लिश्यामहेऽत कृपणास्तवमाययेह।।4
तन्नो भवान् प्रणतशोकहसाङ्घ्रियुग्मो
बद्धान् वियुङ्क्ष्व मगधाह्वयकर्मपाशात्।
यो भूभुजोऽयुतमतङ्गजवीर्यमेको
बिभ्रद्रुरोध भवने मृगराडिवाजान्।।5
यो वै त्वया द्विनवकृत्य उदात्त चक्रे
भग्नो मृधे खलु भवन्तमनन्तवीर्यम्।

जित्वा नृलोकनिरतं सकृदूढदर्पो

युम्त्प्रजा रुजति नोऽजित तद्विधेहि।।6

इति मागधसंरुद्धा भवद्दर्शनकाङ्क्षिणः।

प्रपन्नाः पादमूलं ते दीनानां शं विधीयताम्।।7

26 -70-10)प्रभृति (32

## रुक्मिणीकृतस्तुतिः

श्रुत्वा गुणान् भुवनसुन्दर श्रुण्वतां ते
निर्विश्य कर्णविवरैर्हरतोऽङ्गतापम्।
रूपं दृशां दृशिमतामखिलार्थमाभम्
त्वय्याच्युताविशति चित्तमपत्रपं मे।।1
का त्वा मुकुन्द महती कुलशीलरूप
विद्यावयोद्रविणधामभिरात्मतुल्यम्।
धीरा पतिं कुलवती न वृणीत कन्या –
काले नृसिंह नरलोकमनोभिरामम्।।2
तन्मे भवान् खलु वृतः पतिरङ्गजाया-
मात्मार्पितश्च भवतोऽत्र विभो विधेहि।
मा वीर भागमभिमर्शतु चैद्य आरात्
गोमायुवन्मृगपतेर्हलिमम्बुजाक्ष।।3
पूर्तेष्टदत्तनियमव्रतदेवविप्र-
गुर्वर्चनादिभिरलं भगवान् परेशः।
आराधितो यदि गदाग्रज एत्य पाणिं
गृह्णातु मे न दमघोषसुतादयोऽन्ये।।4
श्वो भाविनि त्वमजितोद्वहने विदर्भान्-
गुप्तस्समेत्य वृतना पतिभिः परीतः।
निर्मथ्य चैद्यमगथेशबलं प्रसह्य
मां राक्षसेन विधिनोद्वह वीर्यशुल्काम्।।5
अन्तःपुरान्तरचरामनिहत्य बन्धून्
त्वामुद्वहे कथमिति प्रवदाम्युपायम्।
पूर्वेद्युरस्ति महती कुलदेवयात्रा

यस्यां बहिर्नवधूर्गिरिजामुपेयात्।।6
यस्याङ्घ्रिपङ्कजरजस्स्नपनं महान्तो
वाञ्छन्त्युमापतिरिवात्मतमोपहत्यै।
यद्यम्बुजाक्ष न लभेय भवत्प्रसादम्
जह्यामसून् व्रतकृशान् शतजन्मभिस्स्यात्।।7

39-52-10)प्रभृति (45

## भूमिकृता कृष्णस्तुतिः

नमस्ते देवदेवेशः शङ्खचक्रगदाधर।

भक्तेच्चोपात्तरूपाय परमात्मन्नमोऽसु ते।।1

नमः पङ्कजनाभायनमः पङ्जमालिने,

नमः पङ्कजनेत्रायनमस्ते पङ्कजाङ्घ्रये।।2 ,

नमो भगवते तुभ्यंवासुदेवाय विष्णवे। ,

पुरुषायादिबीजायपूर्णबोधाय ते नमः।।3 ,

अजाय जनयित्रेऽस्य ब्रह्मणेऽनन्तशक्तये।

परापरात्मन् भूतात्मन् परमात्मन्नमोऽस्तु ते।।4

त्वं वै सिसृक्षू रज उत्कटं प्रभो

तमो निरोधाय बिभर्ष्य

संवृतः।

स्थानाय सत्वं जगतो जगत्पते

कालः प्रधानं पुरुभवान् परः।।5 ,

अहं पयो ज्योतिरथानिलो नभो

मात्राणि देवा मन्य न्द्रियाणि च।

कर्ता महानित्यखिलं चराचरं

त्वय्यद्वितीये भगवन्नयं भ्रमः।।6

तस्यात्मजोऽयं तव पादपङ्कजं

भीतः प्रपन्नार्तिहरोपसादितः।

तत्पालयैनं कुरुहस्तपङ्कजं

शिरस्यमुष्याखिलकल्मषापहम्।।7

26-59-10)प्रभृति (31

## बहुलाश्वकृता स्तुतिः

भवान् हि सर्वभूतानामात्मा साक्षीस्वद्दग्प्रभो।

अथ न स्त्वत्पदाम्भोजम् स्मरतां दर्शनं गतः।।1

स्ववचस्तद्दतं कर्तुमस्मद्दग्गोचरो भवान्।

यदात्थैकान्तभक्तान्मे नानन्तश्श्रीरजः प्रियः।

कोनु त्वच्चरणाम्भोजमेवं विद्विसृजेत्पुमान्।

निष्किञ्चनानां शान्तानां मुनीनां य**त**मात्मदः।।2

योऽवतीर्य यदोर्वंशे  नृणां संसरतामिह।

यशो वितेने तच्छान्त्यै त्रैलोक्यवृजिनापहम्।।3

नमस्तुभ्यं बघवते कृष्मायाकुण्ठमेधसे

नारायणाय ऋषये सुशान्त तप ईयुषे।।4

दिनानि कतिचिद्भूमन् गृहान्नोनिवसन्द्विजैः।

समेतः पादरजसा पुनीहींद निमेः कुलम्।।5

32-86-10)प्रभृति (36

## **देवैः कृतस्तुतिः**

7-6-11)प्रभृति (पर्यन्तम् 27

नतास्स्म ते नाथ दारविन्दं बुद्धीन्द्रियप्राणमनोवचोभिः।

यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तै र्मुमुक्षुभिः कर्ममयोरुपाशात्।।1

त्वं मायया त्रिगुणयात्मविदुर्विभाव्यं,

व्यक्तंसृजस्यवसि लुम्पसि तद्गुणस्थः।

नैतैभवानजितकर्मभिर्ज्यते वै

यस्स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः।।2

शुद्धिर्नृणां न तु तयेढ्य दुराशयानां

विद्या श्रुताध्ययन दानतपःक्रियाभिः।

सत्वात्मना मृषभ ते यशसि प्रवृद्ध-

सच्छ्रद्धया श्रवणसंभृतया यथा स्यात्।।3

स्यान्नस्तवाङ्ध्रिरशुभाशय धूमकेतुः।

क्षेमाय यो मुनिरार्द्रहृदोह्यमानः।

यस्सात्वतैस्समविभूतय आत्मविद्भि-

र्व्यूहेऽर्चितस्सवनशस्स्वरतिक्रमाय।।4

यश्चिन्त्यते प्रयतपाणिभिरध्वराग्नौ

त्रय्या निरुक्तविधिनेशहविर्गृहीत्वा।

अध्यात्मयोग उत योगिभिरात्ममायां

जिज्ञासुभिः परमभागवतैः परीष्टः।।5

प्रयुष्टया तव विभो वनमालयेयं

संस्पर्धिनी भगवती प्रतिपन्निवच्छ्रीः.

यस्सुप्रणीतममुयार्हणमाददन्नो

भूयात्सदाङ्घ्रि रशुभाशयधूकेतुः।।6

केतुस्त्रिविक्रम युतस्त्रिपतत्पताको
यस्ते भयाभयकरोऽसुरदेवचम्वोः।
स्वर्गाय साधुषु खलेष्वितसाय भूमन्
पादः पुनातु भगवन् भजतामधं नः।।7
नस्योतगा इव च यस्य वशे भवन्ति
ब्रह्मादयस्तनुभृतो मिथुरर्दयमानाः।
कालस्य ते प्रकृतिपूरषयोः परस्य
शन्नस्तनोतु चरणः पुरुषोत्तमस्य
शन्नस्तनोतु चरणः पुरुषोत्तमस्य।।8
अस्यासि हेतुरुदयस्थितिसंयमाना-
मव्यक्तजीवमहतामपि कालमाहुः।
सोऽयन्त्रिणाभिरखिलापचये प्रवृत्तः
कालो गभीररय उत्तमपूरुषस्त्वम्।।9
त्वत्तः पुमान् समधिकृत्य ययास्य वीर्यं
धत्ते महान्तमिव गर्भममोघवीर्यः.
सोऽयं तयानुगत आत्मन अण्डकोशं
हैमं ससर्ज बहिरावरणैरुपेतम्।।10
तत्तस्युषश्च जगतश्च भवानधीशो
यन्माययोत्थ गुणविक्रिययोपनीतान्।
अर्थान् जुषन्नपि हृषीपते न लिप्तो
येऽन्ये स्वतः परिहृतादपि बिभ्यति स्म।।11
स्मेरावलोकलवदर्शित भावहारि
भूमण्डलप्रहित सौरतमन्त्रशौण्डैः।
पत्न्यस्तु षौडशसहस्रमनङ्गबाणै

र्यस्येन्द्रियं विमथितुं करणैर्नविभ्व्यः।।12
विभ्व्यस्तवामृत कथोदवहस्त्रिलोक्या-
पादावनेजसरितश्शमलानि हन्तुम्।
आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गै-
स्तीर्थद्वयं शुचिषदस्त उपस्पृशन्ति।।13
भूमे र्भारावताराय पुरा विज्ञापितः प्रभो
त्वमस्माभिरशेषात्मं तत्तथैवोपपादितम्।।14
धर्मश्च स्थापितस्सत्सु सत्यसन्धेषु वै त्वया।
कीर्तिश्च दिक्षु विक्षिप्ता सर्वलोकमलापहा।।15
अवतीर्य यदोर्वंशे बिभ्रद्रूपमनुत्तमम्।
कर्माण्युद्दामवृत्तानि हिताय जगतो कृथा।।16
यानि ते चरितानीश मनुष्यास्साधवः कलौ
शृष्वन्तः कीर्तयन्तश्च तरिष्यन्त्यञ्जसा तमः।।17
यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम।
शरच्छतं व्यतीयाय पञ्चविंशाधिकं विभो।।18
नाधुना तेऽखिलाधार देवकार्येऽवशेषितम्।
कुलञ्च विप्रशापेन नष्टप्रायमभूदिदम्।।19
ततस्स्वधाम परमं विशस्व यदि मन्यसे
सलोकान् लोकपालान्नः पाहि वैकुण्ठकिङ्करान्।।20

## उद्धवस्य स्तुतिः

14-7-11)प्रभृति (पर्यन्तम् 18

योगेश योगविन्न्यास योगात्मन् योगसम्भव।
निश्श्रेयसाय मे प्रोक्तस्त्यागस्सन्न्यासलक्षणः।।1

त्यागोऽयं दुष्करो भूमन् कामानां विषयात्मभिः।
सुतरां त्वयि सर्वात्मन्न भक्तैरिति मे मतिः।।2

सोऽहं ममाहमिति मूढमतिर्विगाढ-
स्त्वन्मायया विरचितात्मनि सानुबन्धे।
तत्वञ्जसा निगदितं भवता यथाहं
संसाधयामि भगवन्ननुशाधि भृत्यम्।।3

सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं
वक्तारमीश विबुधेष्वपिनानुचक्षे।
सर्वे विमोहितधियस्तव माययेमे
ब्रह्मादयस्तनुभृतो बहिरर्थभावाः।।4

तस्माद्भवन्तमनवद्यमनन्तपारं
सर्वज्ञमीश्वरमकुण्ठ विकुण्ठधिष्ण्यं।
निर्विण्णधीरहमुहा वृजिनाभितप्तो
नारायणं नरसखं शरणं प्रपद्ये।।5

## शौनकादि मुनिभिः कृतस्तुतिः

सूत जानासि भद्रं ते भगवान् सात्वतां पतिः।

देवक्यां वसुदेवस्य जातो यस्य चिकीर्षया।।

तन्नः शूश्रूमाणानामर्हस्यङ्गानुवर्णितुम्।,

यस्यावतारो भूतानां क्षेमाय च भवाय च।।

आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन्।

ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम्।।

यत्पादसंश्रयाः सूत मुनयः प्रशमाय नः।

सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया।।

को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः।

शुद्धिकामो न शृणुयाद्यशः कलिमलापहम्।।

तस्य कर्माण्युदाराणि परिगीतानि सूरिभिः।

ब्रूहि नः श्रद्दधानानां लीलया दधतः कलाः।।

अथाख्याहि हरे र्धीमन्नवतारकथाः शुभाः।

लीला विदधतः स्वैरमीश्वस्यात्ममायया।।

वयं तु न वितृप्याम उत्तमश्लोकविक्रमे।

यच्छृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे।।

कृतवान् किल वीर्याणि रामेण सह केशवः।

अतिमर्त्यानि भगवान् गूढः कपटमानुषः।।

कलिमागतमाज्ञाय क्षेत्रेऽस्मिन् वैष्णवे वयम्।

आसीना दीर्धसत्रेण कथायां सक्षणा हरेः।।

त्वं नः संदर्शितो धात्रा दुस्तरं निस्तितर्षताम्।

कलिं सत्वहरं पुम्सां कर्णधार इवार्णवम्।।

ब्रूहि योगेश्वरे कृष्णे ब्रह्मण्ये धर्मवर्मणि।
स्वां काष्ठा मधुनोपेते धर्मः कं शरणं गतः।।

12-1-1)प्रभृति (23

**सूतकृतकृष्णसुतिः**

स वै पुंसां परो धर्मो सतो भक्तिरधोक्षजे।
अहैतुक्यप्रतिहता ययात्मा सुप्रसीदति।।1
वासुदेवे भगवति भक्तियोगः प्रयोजितः.
जनयत्याशु वैराग्यं ज्ञानञ्च यदहैतुकम्।।2
धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः।
नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्।।3
श्रुतमप्यौपनिषदं दूरे हरिकथामृतात्।
यन्न सन्ति द्रवच्चित्तप्रमाश्रुपुलकोद्गमाः।।4
धर्मस्य ह्यापवर्गस्य नार्थोऽर्थायोपकल्पते।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः।।5
कामस्य सेन्द्रियप्रीतिर्लाभो जीवेत यावता।
जीवस्य तत्वजिज्ञासो नार्थो यश्चेहकर्मभिः।।6
वदन्ति तत्तत्वविदस्तत्वं यद्ज्ञानमव्ययम्।
ब्रह्मेति परमात्मेति भगवानिति कथ्यते।।7
तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया।
पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया।।8
अतः पुम्भिर्द्विजश्रेष्ठा वर्णाश्रमविभागशः।
स्वनुष्ठितस्य धर्मस्य संसिद्धिर्हरितोषणम्।।9
तस्मादेकेन मनसा भगवान् सात्वतांपतिः।

श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यशः।।10
यदनुध्यासिना युक्ताः कर्म ग्रन्थिनिबन्धनम्।
छिन्दन्ति कोविदास्तस्य को न कुर्यात्कथारतिम्।।11
शुश्रूषोः श्रद्धधानस्य वासुदेवकथारतिः।
स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात्।।12
श्रुण्वतां स्वकथाः कृष्ण पुण्यश्रवणकीर्तनः।
हृद्यन्तस्थोह्यभद्राणि विधुनोति सुहृत्सताम्।।13
नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया।
भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी।।14
तदा रजस्तोभावाः कामलोभादयश्च ये।
चेत एतैरनाविद्धं स्थितं सत्वे प्रसीदति।।15
एवं  प्रसन्नमनसो भगवद्भक्तियोगतः।
भगवत्तत्वविज्ञानं मुक्तसङ्गस्य जायते।।16
भद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि द्दष्ट एवात्मनीश्वरे।।17
अतो वै कवयो नित्यं भक्तिं परमया मुदा।
वासुदेवे भगवति कुर्वन्त्यात्मप्रसादिनीम्।।18
सत्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते।
स्थित्यादये हरिविरिञ्चि हरेति संज्ञाः
श्रेयांसि तत्र खलु सत्वतनो नृणां स्युः।।1
पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः।
तमसस्तु रजस्तस्मात्सत्वं यद् ब्रह्मदर्शनम्।।2
भेजिरे मुनयोऽथाग्रे भगवन्तमधोक्षजम्।
सत्वं विशुद्धं क्षेमाय कल्पन्ते ये नु तानिह।।3
मुमुक्षवो घोररूपान् हित्वा भूतपतीन्स्तथा।

नारायणकलाश्शान्ता भजन्ते ह्यनसूयवः।।4
रजस्तमः रकृतयः समशीला भजन्ति वै।
पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः।।5
वासुदेवपरा  वेदा वासुदेवपरामखाः।
वासुदेवपरा योगा वासुदेवपराः क्रियाः।।6
वासुदेवपरं ज्ञानं वासुदेवपरं तपः।
वासुदेवपरो धर्मो वासुदेवपरा गतिः।।7
स एवेदं ससर्जाग्रे भगवानात्ममायया।
सदसद्रूपया चासौ गुणमय्याऽणो विभुः।।8
ताय विलसितेष्वेषु गुणेषु गुणवानिव।
अन्तप्रविष्ट आबाति विज्ञानेन विजृम्भितः।।9 -
यथाह्यवहितो वह्निर्दारुष्वेकः स्वयोनिषु।
नानेव भाति विश्वात्मा भूतेषु च तथा पुमान्।।10
असौ गुणमयैर्भावै र्भूतसूक्ष्मेन्द्रियात्मभिः।
स्वनिर्मितेषु निर्विष्टो भुङ्क्ते भूतेषु तद्गुणान्।।11
भावयत्यष सत्वेन लोकान् वै लोकभावनः।
लीलावतारानुरतो देवतिर्यङ्नरादिषु।।12

6-2-1)प्रभृति  (35

3-1अध्यायः

## नारदकृता स्तुतिः

भवतानुदितप्रयम् यशो भगवतोऽमलम्।

येनैवासौ न तुष्येत्तु मन्येतद्दर्शनं खिलम्।।

यथा धर्मादयश्चार्था मुनिवर्यानुवर्णिताः।

न तथा वासेदवस्य महिमा ह्यनुवर्णितः।।

न यद्वचश्चित्रपदं हरेर्यशोजगत्पवित्रं प्रगुणीत कर्हिचित्।,

तद्वायसं तीर्थमुशन्ति मानसान यत्र हंसा वश्मन्त्युशिक्षयाः।।,

तद्वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि।

नामान्यनन्तस्य यशोऽङ्कितानि यच्छुण्वन्ति गायन्ति गृणन्ति साधवः।।

नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निसञ्जनम्।

कुतः पुनश्शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम्।।

अतो महाभाग भवानमोघदृक्च्छुचिश्रवाः सत्यरतो धृतव्रतः।

उरुक्रमस्याखिलबन्धमुक्तये समाधिनानुस्मर यद्विचेष्टितम्।।

ततोऽन्यथा किञ्चन यद्विवक्षः पृथग्दृशस्तत्कृतसूपनामभिः।

न कर्हिचित् क्वापि च दुःस्थिता मतिर्लभेत वाताहत नौरिवास्पदम्।।

जुगुप्सितं धर्मकृतेऽनुशासतः

स्वभावरक्तस्य महान् व्यतिक्रमः।

यद्वाक्यतो धर्म इतीतरः स्थितो

न मन्यते तस्य निवारणं जनः।।

विचक्षणः कोऽर्हति वेदितुं विभो

रनन्तपारस्य निवृत्तितस्सुखम्।

प्रवर्तमानस्यु कुणैरनात्मन

स्ततो भवान् दर्शय चेष्टितं विभो।।

त्यक्त्वा स्वधर्मं चरणाम्बुजं हरे

र्भजन्नपक्वोऽथ पतेत्ततो यदि।
यत्र क्व वा भद्रमभूदमुष्य किं
को वार्य आप्तो भजतां स्वधर्मतः।।
तस्यैव हेतोः  प्रयतेत कोविदो
न लभ्यते यद्भ्रमतामुपर्यथः।
तल्लभ्यते दुःखबदन्यतस्सुखं
कालेन सर्वत्र गभीररंहसः।।
स वै जनो जातु कथञ्चनाव्रजेन्
मुकुन्दसेव्यस्यवदङ्ग संसृतिम्।
स्मरन् मुकुन्दाङ्घ्र्युपगूहनं पुन-
र्विहातुमिच्छेन्न रसग्रहो जनः।।
इदञ्च विश्वं भगवानिवेतरो
यतो जगत् स्थाननिरोधसम्भवाः।
तद्धि स्वयं वेद भवान्स्तथाऽपि मे
प्रादेशमात्रं भवतः प्रदर्शितम्।।
त्वमात्मनात्मानमवेह्यमोघदृक्
परस्य पुंसः परमात्मनः कलाम्।
अजं प्रजातं जगतश्शिवाय यन्
महानुभावायद्युदयोऽधिगण्यताम्।।
इदं हि पुम्सस्तपसश्श्रुतस्य
स्विष्टस्य पूर्तस्य सुसूक्तदत्तयोः।
अविच्युतोऽर्थः कविभिर्निरूपितो
यदुत्तमश्लोक गुणानुवर्णनम्।।

8-5-1)प्रभृति (22

**43-13-1)प्रभृति (52**

मा कञ्चन शुलो राजन् यदीश्वरवशं जगत्।

लोकाः सपाला यस्येमे वहन्ति बलिमीशितुः।

संकुनक्ति भूतानि स एव वियुनक्ति च।।

यथा गावो नसि प्रोतास्तंत्यां बद्धाः स्वदामभिः

वाक्तंत्यां नामभिर्बद्धा वहन्ति बलिमीशितुः।।

यथा क्रीडोपस्कराणां संयोग विगमाविह।

इच्छया क्रीडितुः स्यातां तथैवेशेच्छया नृणाम्।।

यन्मन्यसे ध्रुवं लोकमध्रुवं वा न चोभयम्।

सर्वथा न हि शोच्यान्ते स्नेहादन्यत्र मोहजात्।।

तस्माज्जह्यङ्ग वैक्लब्यमज्ञानकृतमात्मनः।

कथं त्वनाथाः कृपणा वर्तेरंस्ते च मां विना।।

कालकर्मगुणाधीनो देहोऽयं पाञ्चभौतिकः।

कथमन्यांस्तु गोपायेत् सर्पग्रस्तो यथापरम्।।

अहस्तानि सहस्तानामपदानि चतुष्पदाम्।

फल्गूनि तत्र महतां जीवो जीवस्य जीवनम्।।

तदिदं भगवान् राजन्नेक आत्माऽऽत्मनां स्वदृक्

अन्तरोऽनन्तरो भाति पश्य तं माययोरुधा।।

सोऽयमद्य महाराज भगवान् भूतभावनः।

कालरूपोऽवतीर्णोऽस्यामभवाय सुरद्विषाम्।।

निष्पादितं देवकृत्यमवशेषं प्रतीक्षते।

तावद्यूयमवेक्षध्व्वं भवेद्यावदिहेश्वरः।।

(धृतराष्ट्रः सह भ्रात्रा गान्धार्या च स्वभार्यया)

## नारदकृता स्तुतिः

(पर्यन्तम् 14 प्रभृति 11-37 – 10)

कृष्ण! कृष्णाप्रमेयात्मन् योगेश जगदीश्रर।

वासेदवाखिलावास सात्वतां प्रवर प्रभो।।

त्वमात्मा सर्वभूतानामेको ज्योतिरिवैधसाम्।

गूढो गुहाशयस्साक्षी महापुरुष ईश्वरः।।

आत्मनात्माश्रयः पूर्वं मायया ससृजेगुणान्।

तैरिदं सत्यसङ्कल्पस्सृजस्यत्स्यवसीश्वरः।।

स त्वं भूधरभूतानां दैत्यप्रमथरक्षसाम्।

अवतीर्णो विनाशाय साधूनां रक्षणाय च।।

इतः प्रभृति श्लोकानां स्तुतेः कथांशस्यैव)

प्रधान्यात् नात्र उपनिबध्यन्ते(

## नारदकृता स्तुतिः

(17,18-69-10)

(38,39-69-10)

नैवाद्भुतं त्वयि विभोऽखिललोकनाथ
मैत्रीजनेषु सकलेषु दमः खलानाम्।
निः श्रेयसाय जगतः स्थिति रक्षणाभ्याम्
स्वैरावतार उरुगाय विदाम सुष्ठु।।
दुष्टं तवाङ्घ्रियुगलं जनतापवर्गम्
ब्रह्मादिभिर्हृदि विचिन्त्यमगाधबोधैः।
संसारकूपपतितोत्तरणावलम्बम्
ध्यायन्श्चराम्यनुगृहाण यथा स्मृतिस्स्यात्।।

**********

विदम्म योगमायांते दुर्दर्शामपि योगिनाम्।
योगेश्वरात्मन्निर्भाताम् भवत्पादनिषेवया।।
अनुजानीहि मां कृष्ण लोकांस्ते यशसाऽप्लुतान्।
पर्यटामि तवोद्गायन् लीला भवनपालनीः।।

## **नारदकृता स्तुतिः**

38-70- 10)प्रभृति (45

दुष्टा मया ते बहुला दुरत्यया

माया विभो विश्वसृजश्च मायिनः।

भूतेषु भूमं चरतस्स्वशक्तिभि-

र्वह्नेरिव च्छन्नरुचो न मेऽद्भुतम्।।

तवेहितं कोऽर्हति साधु वेदितुं

स्वमाययेदं सृजतो नियच्छतः।

यद्विद्यमानात्मतयाविभासते

तस्मै नमस्ते स्वविलक्षणात्मने।।

जीवस्य यस्संसरतो विमोक्षणम्

न जानतोऽनर्थवहाच्छरीततः।

लीलावतारै स्स्वयशः प्रदीपकम्

प्राज्ज्वालयत्वां तमहं प्रपद्ये।।

अथाऽप्याश्रावये ब्रह्मन्नरलोकविडम्बनम्।

राज्ञः पैतृष्वसेयस्य भक्तस्य च चिकीर्षितम्।।

यक्ष्यते त्वां मकेन्देण राजसूयेन पाण्डवः।

पारमेष्य्यकामो नृपतिस्तद्भवाननुमोदताम्।।

तस्मिन् देवक्रतुवरे भवन्तं वै सुरादयः

दिदृक्षवस्समेष्यन्ति राजानश्च यशस्विनः।।

श्रवणात्कीर्तनाद्ध्यानात्पूयन्तेऽन्तावसायिनः।

तत्र ब्रह्ममयस्येश किमुतेक्षाभिमर्शिनः।।

यस्यामलं दिवि यशः प्रथितं रसायां

भूमौ च ते भुवनमङ्गल दिग्वितानम्।

मन्दकिनीति दिवि भोगवतीति चायो
गङ्गेति चेह चरणाम्बु पुनाति विश्वम्।।

## भीष्मस्तुतिः

16-9-1)प्रभृति (24

न ह्यस्य कर्हिचिद्राजन् पुमान् वेद विधित्सितम्।
यद्विजिज्ञासया युक्ता मुह्यन्ति कवयोऽपि हि।।
तस्मादिदं दैवतन्त्रं व्यवस्य भरतर्षभ।
तस्यानुविहितोऽनाथा नाथ पाहि प्रजाः प्रभो।।
एष वै भगवान् साक्षादाद्यो नारायणः पुमान्।
योहयन्मायया लोकं गूढश्चरति वृष्णिषु।।
अस्मानुभावं भगवान् वेद  गुह्यतमं शिवः।
देवर्षिर्नारदः साक्षाद्भगवान् कपिलो नृप।।
यं मन्यसे मातुलेयं प्रियं मित्रं सुहृत्तमम्।
अकरोः सचिवं दूतं सौहृदादथ सारथिम्।।
सर्वात्मनः समदृशो ह्द्वयस्यानहंकृतेः।
तत्कृतं मतिवैषम्यं निरवद्यस्य न क्वचित्।।
तथाप्येकांतभक्तेषु पश्य भूपानुकंपितम्।
यन्मेऽसूंस्त्यजतः साक्षात् कृष्णो दर्शनमागतः।।
भक्त्याऽऽवेश्य मनो यस्मिन् वाचा यन्नाम कीर्तयन्।
त्यजन् कळेबरं योगी मुच्ते कामकर्मभिः।।

देवदेवो भगवान् प्रतीक्षतां
कलेवरं यावदिदं हिनोम्यहम्।

प्रसन्नहासारुणलोचनोल्लसन्
मुखांबुजो ध्यानपथश्चतुर्भुजः।।

32-9-1)प्रभृति (43

इति मतिरुपकल्पिता वतृष्णा
भगवति सात्वतपुङ्गवे विभूम्नि।
स्वसुखमुपगते क्वचिद्विहर्तुं
प्रकृतिमुपेयुषि यद्भवप्रवाहः।।
त्रिभुवनकमनं तमालवर्णं
रविकरगौरवराम्बरं दधाने।
वपुरलककुलावृताननाब्जम्
विजयसखे रतिरस्तु मेऽनवद्या।।
युधि तुरगरजो विधूम्रविष्वक्
कचलुलितश्रमवार्यलंकृतास्ये।
मम निसितशरैर्विभिद्यमान-
त्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा।।
सपदि सखिवचो निसम्य मध्ये
निजपरयोर्बलयो रथं निवेश्य।
स्थितवति परसैनिकायुरक्ष्णा
हृतवति पार्थसखे तरिर्मास्त।।
व्यवहितपृतनामुखं निरीक्ष्य
स्वजनवधाद्विमुखस्य दोषबुद्ध्या।
कुमतिमहरदात्मविद्यया यः
चरणरतिः परमस्य तस्य मेऽस्तु।।
स्वनिगममपहाय मत्प्रतिज्ञाम्

ऋतमधिकर्तुमवप्लुतो रथस्थः।
धृतरथचरणोऽभ्ययाच्चलद्गुः
हरिरिव हंतुमिभं गतोत्तरीयः।।
शितविशिखहतो विसीर्णदंशः
क्षतजपरिप्लुत आततायिनो मे।
प्रसभमभिससार मद्व्धार्थम्
स भवतु मे भगवान् गतिर्मुकुंदः।।
विजयरथकुटुम्ब आत्ततोत्रे
धृतहयरश्मिनि तच्छ्रियेक्षणीये।
भगवति रतिरस्तु मे मुमूर्षोः
यमिह निरीक्ष्य हता गताः सरूपम्।।
ललितगतिविलासवल्गुहास-
प्रणय निरीक्षण कल्पितोरुमानाः।
कृतमनुकृतवत्य उन्मदान्धाः
प्रकृतिमगन् किल यस्य होपवध्वः।।
मुनिगण नृपवर्य संकुलेऽतः-
सदसि युधिष्ठिरराजसूय एषाम्।
अर्हमुपपेद ईक्षणीयो
मम दृशिगोचर एष आविरात्मा।।
तमिममहमजं  शीरीरभाजाम्
हृदि हृदि धिष्ठितमात्मकल्पितानाम्।
प्रतिदृशमिव नैकधार्कमेकं
समधिगतोऽस्मि विधूतभेदमोहः।।

**************

## श्री शुकस्तुतिः

12-4-2)प्रभृति (23

नमः परस्मै पुरुषाय भूयसे
सदुद्भवस्थान निरोधलीलया।
गृहीतशक्ति त्रतयाय देहिनाम्
अन्तर्भवायानुपलक्ष्यवर्त्मने।।

भूयो नमः सद्वृजिनच्छिदेऽसताम्
असम्भवायाखिलसत्त्वमूर्तये।
पुम्सां पुनः पारमहम्स्य आश्रमे
व्यवस्थितानामनुमृग्यदाशुषे।।

नमो नमस्तेऽस्त्वृषभाय सात्वताम्
विदूरकाष्ठाय मुहुःकुयोगिनाम्।
निरस्तसाम्यातिशयेन राधसा
स्वधामनि ब्रह्मणि रम्स्यते नमः।।

यत्कीर्तनम् यत्स्मरणं यदीक्षणम्
यद्वन्दनम् यच्छ्रवणं यदर्हणम्।
लोकस्य सद्यो विधुनोति कल्मषम्
तस्मै सुभद्रश्रवसे नमो नमः।।

विचक्षणा यच्छरणोपसादनात्
सङ्गं व्युदस्योभयतोऽन्तरात्मनः।
विन्दन्ति हि ब्रह्मगतिं गतक्लमाः
तस्मै सुभद्रश्रवसे नमो नमः।।

तपस्विनो दानपरा यशस्विनो
मनस्विनो मन्त्रविदः सुमङ्गलाः।

क्षेमं न विन्दन्दि विना यदर्पणम्
तस्मै सुभद्रश्रवसे नमो नमः।।
तपस्विनो दानपरा यशस्विनो
मनस्विनो मन्त्रविदः सुमङ्गलाः।
क्षेमं न विन्दन्ति विना यदर्पणम्
तस्मै सुभद्रश्रवसे नमो नमः।।
किरातहूणान्ध्रपुलिन्दपुल्कसा
आभीरकङ्का यवना खसादयः।
येऽन्ये च पापा यदुपाश्रयाश्रयाः
शुध्यन्ति तस्मै प्रभविष्णवे नमः।।
स एष आत्मात्मवतामधीश्वरः
त्रयीमयो धर्ममयस्तपोमयः।
गतव्यलीकैरजशंकरादिभिः
वितर्क्यलिङ्गो भगवान् प्रसीदताम्।।
श्रियःपतिर्यज्ञपतिः प्रजापतिः
धियां पतिर्लोकपतिर्धरापतिः।
पतिर्गतिश्चान्धकवृष्णसात्वताम्
प्रसीदतां मे भगवान् सतां पतिः।।
यदंघ्र्यभिध्यान समाधिधौतया
धियानुपश्यन्ति हि तत्वमात्मनः।
वदन्ति चैतत्कवयोयथारुचम्
स मे मुकुन्दो भगवान् प्रसीदताम्।।
प्रचोदिता येन पुरा सरस्वती
वितन्यताजस्य सतीं स्मृतिं हृदि।
स्वलक्षणा प्रादुरभूत्किलास्वतः

